VOLUME—4

# SARVA-MŪLA-GRANTHĀH

*[S'RUTI-PRASTHĀNAM]*

ṚGBHĀSHYAM

&

KHAṆḌĀRTHA NIRṆAYA

*[With the oldest and authentic version and various readings]*

**SRI ĀNANDATĪRTHA BHAGAVATPĀDA**

[SRI *MADHVACHARYA*]

*Edited by*

*BANNANJE GOVINDACHARYA*

**AKHILA BHĀRATA MĀDHVA MAHĀ MANDALA**

**PUBLICATION**

**1973**

# SARVA-MŪLA-GRANTHĀH
*[WORKS OF SRI MADHVA]*
*VOLUME—4 [SRUTI-PRASTHANAM]*

This is an Akhila Bharata
Madhva Maha Mandala Publication

1973, September



Edited by
**Bannanje Govindacharya**
Isavasyam, Udipi-3

Finance:
**K. Narayana Rao**
Gadag

Printed at
Sri Dharmabodha Vidyunmudranalaya
Car Street, Udipi

Copies available at:
(1) S. M. S. P. Sanskrit College
Sales & Publication division
Udipi
(2) Poornaprajna Vidyapeetha
Poornaprajna Nagara
Bangalore-28

Rs. 80/— (Complete set)

सम्पुटः—४ [श्रुतिप्रस्थानम्]

# सर्वमूलग्रन्थाः

**ऋग्भाष्यम्, खण्डार्थनिर्णयश्च**

[मूलकोशानुसारेण
पाठान्तरटिप्पण्यादिना शोधितः पाठः]

## श्रीमदानन्दतीर्थभगवत्पादाः

टिप्पण्यादिसंयोजनेन
शोधयिता सम्पादकश्च
**बन्नञ्जे गोविन्दाचार्यः**

**अखिलभारतमाध्वमहामण्डलप्रकाशनम्**
**1973**

सर्वमूलग्रन्थाः

[चतुर्थो भागः]

श्रुतिप्रस्थानम्

शोधयिता सम्पादकश्च
बन्नञ्जे गोविन्दाचार्यः
ईशावास्यम्
उडुपी– ३

आर्थिकनिर्वहणम्
के. नारायण राव्
गदग



प्राप्तिस्थानम्

१. एस्. एम्. एस्. पि. संस्कृतमहापाठशाला
सेल्स् अण्ड् पब्लिकेशन् डिविशन्
उडुपी

२. पूर्णप्रज्ञविद्यापीठम्
पूर्णप्रज्ञनगरम्
बेङ्गळूर- २८

अशीती रूप्यकाणि
(समग्रस्य सम्पुटस्य)

# सम्पादकीयम्

सर्वमूलग्रन्थानां यस्तृतीयो भागः पुराणप्रस्थानं नाम, यस्मिन् समूलं भागवततात्पर्यं भवति, तत्र संशोधनीयांशबाहुल्यात् तन्निमित्तं विलम्बं विनिवारयितुं ततः पूर्वमेवायं चतुर्थो भागः श्रुतिप्रस्थानं नाम, सम्प्रति तत्रभवतां पुर उपस्थाप्यते; यत्र ऋग्भाष्यम्, खण्डार्थनिर्णयश्च कर्मनिर्णयापरनामा भवतः।

तदेवं ब्रह्मसूत्रसङ्गताश्चत्वारः, गीतासङ्गतौ द्वौ, उपनिषदां भाष्याणि च दशेति प्रस्थानत्रयसम्बद्धाः षोडश ग्रन्थाः प्रथमभागे गताः। इतिहासस्पृशौ महाभारततात्पर्यनिर्णयः, महाभारततात्पर्यं चेति द्वौ द्वितीयभागे। द्वौ श्रुतिप्रस्थानस्पृशावत्र प्राकाश्यमुपनीतौ। एवं विंशतिः प्रबन्धानां प्रकाशिता। पुराणप्रस्थानगं भागवततात्पर्यं तृतीयभागे भविष्यति। अवशिष्टा अष्टादशापि चरमे पञ्चमे सम्पुटे सङ्ग्रहिष्यन्ते।

तत्र तावदृग्भाष्यं वेदानां गतिसामान्यं प्रदर्शयत्, जडभौतिकपरतां वदतामर्वाचीनानां पश्चिमबुद्धीनामपि चक्षुरुन्मीलनायालमिति महदस्य महत्त्वम्। सायणादिभिर्महान् व्याख्याव्याजेन वेदापचारः कृत इति सम्प्रति सर्वेऽपि वेदतदङ्गेषु गृहीतिनः कृतिनोऽभ्युपयन्ति। अनेन पुनर्भाष्येण भगवत्पादप्रणीतेन वेदवाङ्मये नूतनं द्वारं विवृतम्। प्रतनतरः पन्थाः प्रविस्मृतचरः पुनर्नव इव प्रदर्शितः। यत् परेऽपि व्याख्यातारः कापालिशास्त्रिप्रमुखाः "वेदानामध्यात्मपरता नास्तीति को नाम ब्रूते मध्वभाष्येषु जाग्रत्सु" इति मुक्तकण्ठमथ सश्लाघमुपश्लोकयन्ति स्म।

अनुक्रमणिकां कात्यायनीयाम, बृहद्देवतां शौनकीयाम्, छन्दःसूत्रं च पैङ्गलम्, निरुक्तं च यास्कीयं निराकुर्वता भगवत्पादेन काचिदपूर्वाऽथापि पूर्वतमा वेदाङ्गपद्धतिरत्राविष्कृता। अद्भुताऽभूतपूर्वा च वेदवैदिकप्रज्ञा प्रकाशिता। क्वचिदप्यपूर्वमज्ञातचरं ऋषिदेवतासम्प्रदायं प्रदर्श्य वेदाध्यापकपरम्परागता सम्प्रदायभ्रान्तिरपहस्तितेति निशितधिषणानां विमर्शकानामत्र महानवकाशः। तद्यथा प्रथममण्डले एकादशे सूक्ते जेता माधुच्छन्दस ऋषिरिति अनुक्रमणिकालम्बा सम्प्रदायपरम्परा। असाङ्गत्यमस्य प्रदर्श्य मधुच्छन्दा वैश्वामित्र एवर्षिरित्याचार्यपादः स्फुटतरमाह। "चनो मन इह प्रोक्तं सुखं च क्वचित्" इति वदता "चायतेरन्ने ह्रस्वश्च" इति सूत्रयतां वैयाकरणानां निर्वचनभ्रान्तिराविष्कृता। तदेवमाद्यनन्तापूर्वतमप्रमेयकदम्बसन्दर्भैर्गर्भिणीयं कृतिर्वैदिकेषु पथिषु सञ्चरिष्णूनां विपश्चितां चित्तरसायनम्। यत्सत्यमाह पण्डिताचार्यः—"यस्यास्खलितानवरतवेदशास्त्रव्याख्यानश्रवणसमुत्खातदुःखसङ्घातः निखिलपण्डितवर्गः परमामृतसमुद्रावगाहीव बहळमाह्लादमाप्नोति" इति।

यद्यपि चत्वारिंशत्सूक्तान्येवोपलब्धभाष्याणि। न समग्रं बाह्वृचम्। एतावन्त्येव भगवत्पादो व्याचख्याविति तु सम्प्रदायः। तथाऽपीयमणुकाऽपि भाष्यतरणिः सुधियां दाशप्रमतानां वेदजलधितरणाय चालम्। दिग्घि स्फुटमत्र दर्शिता भगवता—'अयमिह पन्थाः, अनेनैव पथा पतित्वा पारदृश्वा भूयाः' इति।

संशोधनमन्तरेण च किञ्चिद् वक्तव्यम्। श्रीहृषीकेशतीर्थलिखिते मूलकोशे नेदमुपलब्धम्। अथापि श्रीपेजावरमठीयेन मूलकोशावलम्बिना कोशान्तरेण श्रीसोदामठीयेन चैकेन प्राचीनकोशेन, तथा श्रीपलिमारुमठीयेन श्रीरघुवर्यतीर्थैर्लिखितेन च कोशेन मुख्यतः पाठशोधने बहूपकृतम्। अन्यान्यकोशेषु पाठभेदाः प्रचलितपाठप्रकाराश्च अधस्ताट्टिप्पण्यां सम्प्रदर्शिताः।

वेङ्कटमाधवादिभिः प्राचीनैर्वेदव्याख्यातृभिर्यदभिहितम्, तत्र च येये विशेषाः, ततोऽस्य च भाष्यस्य यद् वैशिष्ट्यं तदेतत् तत्रतत्र सन्दर्भविशेषे टिप्पण्यां प्रदर्शितम्। भाष्योदितार्थपद्धायां स्वरप्रक्रियानुगुण्यं च क्वचित्क्वचित् दिङ्मात्रप्रदर्शनाय समर्थितम्।

अन्यच्च संहितापाठेन पदपाठेन च सहैव भाष्यमिदं पुनरिदम्पूर्वं प्रकाश्यते। तत्रापि नैतावत्पर्यन्तमनेन क्रमयोगेन वेदानां चातुःस्वर्यं मुद्रितचरम्। तदयं पदपाठे उदात्तानुदात्तस्वरितप्रचयान् चतुरोऽपि स्वरभेदान् सङ्केतैः स्फुटं प्रदर्शयन्नपूर्वं कञ्चन प्रकारं तत्रभवतां पुरः प्रस्तोष्यतीति महती नश्चित्तसमुन्नतिः।

अपरः खण्डार्थनिर्णयः, यमिह कर्म्मनिर्णय इति व्यवहरन्ति। अत्रैवं कथां विदो वदन्ति—

क्वचिद् वेदविचारे सम्प्रवृत्ते पूर्वमीमांसादुराग्रहमांसलया मनीषया गृहीताः कतिचन कर्म्मकाण्डपण्डिताः कथायां कथङ्कारमपि जिगीषवः सरभसमाचार्यपादमभ्युपजग्मुः; आचिक्षिपुश्च महव्रतोपयुक्तानां महानाम्नीनामृचां तद्विनियोगप्रदर्शकानां ब्राह्मणानां च कर्म्मानुष्ठानैकपराणां कथं ब्रह्मपरता, कथन्तरां च सर्ववेदानामैकपर्यमिति। तेषां भ्रान्तिविलासजनितां वितण्डां वितथयितुं भगवानाचार्यः खण्डार्थनिर्णयपरं प्रवचनमाचरत्। स एव चायं परस्तात् ग्रन्थरूपेण निबद्धः खण्डार्थनिर्णयो नाम कर्म्मकाण्डपण्डितमण्डलीपराभवपिशुना विजयध्वजपताका।

तथाह्युक्तं मध्वविजये—

"आभान्तं परिषदि मत्सरादपृच्छत् कर्म्मार्थश्रुतिगहनार्थखण्डभावम्" (१६–४२) इति;

"तस्यार्थं वचनचयस्य तं ब्रुवाणः स्थैर्यार्थं सपदि विलेखयाम्बभूव" (१६–४५) इति च।

एतद्ग्रन्थनिर्म्मितिः धर्म्मस्थलमिति सम्प्रति प्रथितस्य क्षेत्रस्य समीपे 'उजिरे' इति प्रसिद्धे श्रीजनार्दनक्षेत्र आसीदिति च मध्वविजयादेवावसीयते।

अयमपि मूलकोशो नोपलभ्यते। तथाऽपि मूलकोशानुसारिणि श्रीपलिमारुमठीयश्रीरघुवीर्यतीर्थैर्लिखिते प्रामाणिकतमे कोशेऽयमुपलब्धः। तदनुगुणाश्चान्ये प्रतनतराः कोशाः पाठशोधायोपायुज्यन्त। प्रचलितश्च पाठोऽधस्तान्निर्दिष्टः।

अपिचात्र भगवत्पादविवृतः समग्रोऽपि मन्त्रब्राह्मणभागः तत्रतत्रैव स्थूलाक्षरैर्म्मुद्रितः शोधकानामद्ध्येतॄणां च सौकर्यमावहेदित्याशास्यते। मन्त्राणां वर्ण्णव्यतिषङ्गेण च्छन्दसां बृहत्यादीनामुपसर्ग्गक्रमश्च टिप्पण्यां स्फुटतरं सविस्तरं च प्रदर्शितः। एतावान् विषयविस्तारः प्रायो नैतावत्पर्यन्तं क्वापि टिप्पण्यादिषु प्रकाशितचर इति तदेतदपूर्वार्थनिर्वर्ण्णनकुतूहलिनामासक्तिमुपबृंहयेत्।

अत्र च यः पाठो निर्दिष्टः, याश्च तत्र टिप्पण्यः, तत्र पृष्ठतः महान्तमनेहसं भूयान् शोधनपरिश्रमः समस्तीति न विस्मर्त्तव्यम्। अत्राभिव्यक्तोऽभिप्रायः, प्रायोऽणुनाऽपि पदेन पर्वतसारस्याध्यवसायस्य नितान्ताध्ययनस्य च प्रतिप्रसव इति सप्रश्रयमावेद्यते।

अन्ते च, एतादृशमपूर्वतमं प्रकाशनं यस्योन्मुक्तहस्तं विश्राणनताच्छील्यमृते न सुकरमभविष्यत् तं श्रीमन्तं के नारायण राव् इति सुगृहीतनामधेयं महाभागं भगवत्तमो भगवत्पादश्च आयुषा दीर्घेण, अरोगभावेन च निरातङ्केन, मांसलेन च भाग्येन चिरं संयोजयतामिति तावेव पौनःपुन्येन प्रार्थ्येते।

मुद्रणकार्ये सौन्दर्याधानेन सहकृतवतां श्रीधर्मबोधविद्युन्मुद्रणालयाधिकृतानां च कर्तव्यप्रज्ञा नूनं कृतज्ञतामर्हति।

ईशावास्यम् भगवत्पादकृपालेशाकाङ्क्षी

उडुपी–३ बन्नञ्जे गोविन्दाचार्यः



भुजगभोगाभमुद्यम्य हृद्यं निजभुजं दक्षिणं लक्षणाढ्यम् ।
ललितमुद्रिक्तविज्ञानमुद्रं भज भजानन्तमित्यालपन्तम् ।
भवदवोष्णेन तातप्यमानान् भुवि परं नाथमप्रेक्षमाणान् ।
भुवनमान्येन चान्येन दोष्णा भवतु भीर्मेति नः सान्त्वयन्तम् ।
प्रणतवान् प्राणिनां प्राणभूतं प्रणतिभिः प्रीणये पूर्णबोधम् ॥

## ऋग्भाष्यम्

ॐ॥ नारायणं निखिलपूर्णगुणार्णमुच्च[1]सूर्यामितद्युतिमशेषनिरस्तदोषम् ।
सर्वेश्वरं हरिमजेशनतं[2] प्रणम्य वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य ॥ १ ॥

ओमशेषगुणाधार इति नारायणोऽप्यसौ । पूर्णो भूतिवरोऽनन्तसुखो यद् व्याहृतीरितः ॥ २ ॥ गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः । भारतिज्ञानरूपत्वाद् भर्गो ध्येयोऽखिलैर्जनैः । प्रेरकोऽशेषबुद्धीनां[3] स गायत्र्यर्थ ईरितः ॥ ३ ॥ स पूर्णत्वात् पुमान् नाम पौरुषे सूक्त ईरितः । स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च ॥ ४ ॥ स एवाखिलशब्दार्थ[4] इत्याहोपनिषत् परा । ता वा एता ऋच इति विशेषेणाप्यृगर्थताम् ॥ ५ ॥ यो देवानामिति[5] श्रुत्या देवनाम्नां विशेषतः । स्पष्टत्वात् तद्गतत्वेन तत्राऽऽहाग्रेऽग्निनामकम् ॥ ६ ॥

— १ —

[अग्निं नव, मधुच्छन्दाः, गायत्री, अग्निः, षड्जस्वरः[6] ।]

ॐ॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् । होतारंरत्नधातमम् ॥ १ ॥

---

१ "गुणार्णमुच्चैः" इति क्वचित् । २ "—नुतम्" इति प्र. पाठः ।
३ "—बुद्धीनां गायत्र्यर्थ इतीरितः" इति क्वचित् । ४ "एव सर्वशब्दार्थः" इति प्र. पाठः ।

५ "यो देवानां नामधा एक एव" इति दशममण्डले विश्वकर्मसूक्तम् । "अजस्य नाभौ" इति लिङ्गेन तस्य नारायणपरत्वं हि भाष्ये स्थितम् । "विश्वकर्मा मनुस्त्वष्टा" इति च सहस्रनामसु ।

६ तत्र तावदयमृष्यादिक्रमः—अत्र व्याख्यातानां चत्वारिंशत्सूक्तानामपि भगवान् पुरुषोत्तमो मुख्य ऋषिः । तदनन्तरं द्वितीयो ब्रह्मा ऋषिः । एतौ च सर्वविद्यानां समानावृषी । ततः सर्ववेदानां गरुडस्तृतीय ऋषिः । अत एव "छन्दोमयेन गरुडेन" इति भागवतम् । ततः समस्तस्य ऋग्वेदस्य शक्र ऋषिः । एतावत् सर्वासामृचां समानम् । ततः "अग्निमीळे—" इत्यारभ्य "उत वा सन्ति भूयसीः" (१. ११. ८.) इत्यन्तमेकादशानां सूक्तानां दशाधिकशतस्यापि मन्त्राणां वैश्वामित्रो मधुच्छन्दा ऋषिः । अयं विश्वामित्रतनयेष्वेकपञ्चाशः प्रमुखश्चेति वदन्ति । अनुक्रमणिकायां तु मधुच्छन्दसः पुत्रो जेता नामैकादशस्य सूक्तस्यर्षिरित्युक्तम् । भाष्यविरोधात् तत्र मूलं चिन्त्यम् ॥ * ॥ तत्र तावदा नवमसूक्तान्तं नवतेर्मन्त्राणां गायत्री च्छन्दः । लक्ष्मीसरस्वतीभारत्यः गरुडः स्वाहा चेति पञ्च गायत्रीदेवताः । अत्र विना गरुडमन्या आप्रीदेवता अपि । छन्दःप्रभेदास्तु तत्रतत्रैव विविच्यन्ते ॥ * ॥ अथ देवता । तत्र तावदग्न्यन्तर्गतो नारायणः प्रथमसूक्तस्य वर्गद्वयात्मकस्य नवर्चस्य प्रधानदेवता । "एकैव वा

['अ॒ग्निम् । ई॒ळे॒ । पु॒रः॒ऽहि॑तम् । य॒ज्ञस्य॑ । दे॒वम् । ऋ॒त्विज॑म् ॥
होता॑रम् । र॒त्न॒ऽधात॑मम् ॥ १ ॥]

[2]अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद् भवेत् । एवमेवाऽऽह भगवान् निरुक्तिं बादरायणः ॥ ७ ॥ "यथैवाग्न्यादयः शब्दाः प्रवर्त्तन्ते जनार्दने । तथा निरुक्तिं वक्ष्यामो ज्ञानिनां [3]ज्ञानसिद्धये" ॥ ८ ॥ इति तेनाग्निशब्दोऽयमग्र एवाभिपूज्यताम् । अग्र्यत्वमग्रनेतृत्वमत्तिमङ्गागनेतृताम् ॥ ९ ॥ आह तं [4]'स्तौम्यशेषस्य पूर्वमेव[5]' हितं प्रभुम् । ऋत्विङ्नियामकत्वेन यज्ञानामृत्विजं सदा ॥ १० ॥ द्योतनाद् विजयात् कान्त्या स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवाख्यं[6] होतृ-

---

महानात्मा देवता" इत्यनुक्रमणिका चात्र संवदते । अग्निश्चावान्तरदेवता । नारायणप्रीत्यर्थे विनियोग इति च समानं सर्वत्र ॥ * ॥ गानस्वरश्च आनवमसूक्तान्तमृते पञ्चमसूक्तस्य द्वितीयाया ऋचः षड्जः । पञ्चमे द्वितीयायाश्च ऋषभः स्वर इत्यादि तत्रतत्रैव स्पष्टम् ॥ * ॥

१ अत्रैवं स्वरसङ्केतः—अक्षरादुपरि ॒ इत्युदात्तसङ्केतः । अधस्तात् ॒ इत्येकश्रुतिनाम्नः प्रचयस्य । उपरिष्टाद् दीर्घरेखा स्वरितस्य, अधस्तात् तिर्यग्रेखाऽनुदात्तस्येति तु प्रचलितवदेव । तद्यथा—पु॒रः॒ऽहि॑तम्— इति चतुर्णां समाहारः ।

२ "अग्रणीर्ग्रामणीः श्रीमान्" इति विष्णुसहस्रनामसु ।

३ निष्पत्तिर्वृद्धिश्च सिद्धिः । अज्ञानिनां ज्ञाननिष्पत्तये । ज्ञानिनां च ज्ञानवृद्धये ।

४ "ईळ स्तुतौ" इति धातुः । यद्यपि ईडेति धातुः पठ्यते । 'ईडे' इत्येव च रूपम् । तथाऽपि डकारस्य ळकारः बह्वृचसम्प्रदायप्राप्तः । तथाह्याहुः—"अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः" इति । उत्तरत्राजभावात् "ईड्य" इत्यत्र न ळकारः ।

५ एवेति अनुदात्तस्वरस्योकारस्यार्थमाह । दार्ढ्यमनुदात्तार्थ इति हि वक्ष्यति । अवधारणेन ह्यर्थस्य दार्ढ्यं भवति । अग्निमिरित्यत्र य उदात्त इकारो नकारोत्तरः तस्यार्थमाह प्रभुमिति । उदात्तस्योच्चताऽर्थ इति हि वक्ष्यति । प्रभुर्हि सर्वोच्चो भवति । पुर इति रेफोत्तरस्याप्युदात्तस्योच्चतैवार्थः । तेन निरवधिकं पूर्वत्वमाह । अनादित इति यावत् । हितमिति यः स्वरित इकारः, ईळे इति च य ईकारः तस्याप्यर्थः प्रभुमिति । नीचता हि स्वरितार्थः । यो हि स्तूयते, यश्च हितस्तस्य प्रभुत्वे सङ्कीर्तिते स्तुतिकर्तुः प्रीतिकर्मणश्चाप्रभुत्वं नाम नीचता द्योत्यते । प्रचयेन तस्येड्यत्वं हितत्वं च न केनचिदाहितं किन्तु स्वरसमिति बोध्यते । यथास्थितिर्हि प्रचयार्थः । तदेवं समाहारेऽखिला अर्थाः सर्वत्र यथायोगमवगन्तव्याः । यद्यपि स्वरप्रक्रिया शब्दप्रकृतिप्रत्ययादिसापेक्षा भवति । नार्थसापेक्षा । सत्यं लौकिकेष्वर्थेष्वेवं भवेदपि । भगवत्परतायां त्वर्थसापेक्षताऽपि वक्तव्या । "सर्वे घोषाः" इति स्वराणामपि हि निष्ठा भगवान् । अर्वाञ्चो वैयाकरणास्तु विद्यमानमपि स्वरार्थमविवक्षित्वा शब्दमात्रारोहेण प्रक्रियां रचयाम्बभूवुरिति सुवचम् । अत एव, स्वराणामर्थपर्यन्तत्वादेव "इन्द्रशत्रुः स्वरतोऽपराधात्" इत्यादि युज्यते ।

६ दिवु जिगीषायाम्, इच्छायाम्, पणौ, द्युतौ, क्रीडायाम्, गतौ चेति वोपदेवः । विजयादिति जिगीषा । कान्त्येतीच्छा । स्तुत्या व्यवहृतेरिति पणिः । पण व्यवहृतौ स्तुतौ चेति धातुपाठः । द्योतनादिति द्युतिः । गत्येति गतिः । रत्येति क्रीडेति सर्वार्थसङ्ग्रह इह कृतो भवति ।

संस्थं विशेषतः ॥ ११ ॥ अग्निसंस्थेन रूपेण यतोऽग्निर्होतृदेवता[1] । ऋत्विग्यज्ञेषु चार्थानां यद्धोता होतृनामकः । रतिधारकोत्तमत्वात् स रत्नधातम[2] ईरितः ॥ १२ ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[3]]

अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत । सदेवाँएहवक्षति ॥ २ ॥

[अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत ॥
सः । देवान् । आ । इह । वक्षति ॥ २ ॥]

अग्निनारयिमश्नवत्पोषमेवदिवेदिवे । यशसंवीरवत्तमम् ॥ ३ ॥

[अग्निना । रयिम् । अश्नवत् । पोषम् । एव । दिवेऽदिवे ॥
यशसम् । वीरवत्ऽतमम् ॥ ३ ॥]

स पूर्वैर्नूतनैरैष्यैर्विज्ञानादृषिनामकैः । ईड्यो देवादिभिः सर्वैः स च देवानिहाऽनयेत् ॥ १३ ॥ * ॥ तेनैव रयिमाप्नोति वित्तं विद्याधनात्मकम् । दिवसेदिवसे नित्यं पुष्टिमेव न हीनताम् । यशश्च पुत्रसंयुक्तं[4] वीर्यवत्तममेव वा ॥ १४ ॥ * ॥

---

१ "अग्निर्वै देवानां होता" इति हि श्रूयते ।

२ वेदनिघण्टुकारस्तु "रत्नं रयिः" (२.१०.७.) इति रत्नपदं धननामसु पठति । तच्च रमयतीति ण्यर्थविवक्षया । अत्र तु रमणं रत्नमिति भावार्थे । तेन महार्थलाभः । अर्थान्तरे तु अग्निना रयिमश्नवदिति पुनरुक्तं भवतीति ।

३ एकेनाक्षरेण न्यूना निचृदित्युच्यते । तेन समस्तायामृचि त्रयोविंशतिरक्षराणि । तद्यथा पिपीलिका तनुमध्या तद्वदियं मध्यम एव पादे न्यूनाक्षरेति पिपीलिकामध्येति व्यपदिश्यते । "ऊनाधिकेनैकेन निचृद्भुरिजौ । द्वाभ्यां विराट्स्वराजौ" इति "त्रिपादणिष्ठमध्या पिपीलिकामध्या" इति च पिङ्गलनागः । "नवा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्याम्" इत्येतमेवार्थमाह । एकेनाक्षरेणाधिकेन न्यूनेन वा भुरिक्त्वं निचृत्त्वं वा स्यात् । एवं द्वाभ्यामधिकाभ्यां न्यूनाभ्यां वा स्वराट्त्वं विराट्त्वं वा स्यात्; न च्छन्दसो व्यय इति तदर्थः । न भेदो भवति किन्तु प्रभेद एव भवतीति । यद्यप्येतेषां मन्त्राणामनुक्रमणिकायां केवलगायत्रीत्वमेवोक्तम्, न निचृत्त्वादि । केवलं १७१–१७२ तमयोर्मन्त्रयोरेव पादनिचृत्त्वमुक्तम् । समस्ताक्षराणां विश्लेषादिना छन्दःपूरणमिति तदाशयः । अत एव "पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत्" इत्यनुक्रमणिका । "इयादिपूरणः" (३.२.) इति च पिङ्गलनागः । तद्यथाऽत्र मन्त्रे ईड्यः ईडियः इति । तेन द्वितीयपादस्याप्यष्टाक्षरत्वं सम्पद्यते । एवं प्रसिद्धगायत्र्यामपि वरेण्यमिति वरेणियमिति पादपूरणम् । नो चेत् साऽपि निचृदेव भवति । "विष्णवे नमः" इति मन्त्रस्य षडक्षरत्वं वदतां वैदिकानामियं रीतिः संस्तुतैव । अथापि ग्रन्थान्तरादिष्वेवं छन्दसां विभज्य कथनादध्येतॄणां सुगमत्वायात्र प्रतिमन्त्रं छन्दोविशेषास्तत्रतत्रोल्लिखिता इत्यवगन्तव्यम् ।

४ वीरशब्दः पुम्प्रसवे वर्तते । तद्यथा "वीरप्रसविनी" इत्यादि लोके । "वीरवन्तं गोमन्तम्" इत्यादि च वेदे । अत एव "पतिपुत्रवती वीरा" इत्यभिधानेषु पठ्यते । अत एवचाथर्ववेदेषु "आवीरो जायतां पुत्रः–" इत्युक्त्वा

अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि । सइद्देवेषुगच्छति ॥ ४ ॥

[अग्ने । यम् । यज्ञम् । अध्वरम् । विश्वतः । परिऽभूः । असि ॥
सः । इत् । देवेषु । गच्छति ॥ ४ ॥]

अग्निर्होताकविक्रतुस्सत्यश्चित्रश्रवस्तमः । देवोदेवेभिरागमत् ॥ ५ ॥ [॥ १[1] ॥]

[अग्निः । होता । कविऽक्रतुः । सत्यः । चित्रश्रवःऽतमः ॥
देवः । देवेभिः । आ । गमत् ॥ ५ ॥ १ ॥]

यं यज्ञं परितो भूत्वा रक्षसि त्वं सदैव च । [2]विधिमार्गस्थितं देवान्स एवाऽप्नोत्यसंशयम् ॥ १५॥
॥ * ॥ सोऽखिलग्रहणप्रज्ञः सद्गुणैः सन्ततोऽखिलम् । यमयत्यग्र्यकीर्तीनामुत्तमो विबुधैः सह ।
आगन्ताऽखिलभक्तानां पूजास्वीकारतत्परः ॥ १६ ॥ * ॥

[निचृद्गायत्री[3]]

यदङ्गदाशुषेत्वमग्नेभद्रङ्करिष्यसि । तवेत्तत्सत्यमङ्गिरः ॥ ६ ॥

[यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि ॥
तव । इत् । तत् । सत्यम् । अङ्गिरः ॥ ६ ॥]

---

"पुमांसं पुत्रं जनय" (३.२३.३) इति वीरशब्दः पुमांसमिति व्याख्यातः । अयमेव वेदसम्प्रदायसिद्धोऽर्थः । "महान् भवति प्रजया । महान् कीर्त्या" इत्यादावपि पुत्रयुक्तस्य यशस एव फलतया कीर्तनात् ।

१ इयं वर्गसङ्ख्या । अत्र प्रथमसूक्ते प्रथमो वर्गः समाप्तः । एवमुत्तरत्रापि ज्ञेयम् ।

२ अध्वरमित्येतदध्वनि रतमिति व्युत्पत्त्या विधिमार्गस्थितमित्येतमर्थमाह । अत्र अध्वन्शब्दस्य क्वनिप्प्रत्ययान्तत्वेन पित्त्वात् "अनुदात्तौ सुप्पितौ" इति प्रथमाकारस्वरेणोदात्तेन भाव्यमिति प्रसज्यते । अथापि "समासस्य" इत्यन्तोदात्तत्वं भवति । न च सप्तमीतत्पुरुषे पूर्वपदप्रकृतिस्वरत्वविधिविरोधः । "गतिकारकोपपदात् कृत्" इति कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वस्यैव प्रतिप्रसवात् । प्रामाणिकश्चायमर्थोऽध्वनि रत इति । तथाचाथर्ववेदे–"उत त्वा यज्ञा ब्रह्मपूता वहन्त्यध्वगतो हरयस्त्वा वहन्ति" (१३.१.३६–४३.) इति । अथवा एवं व्याख्येयम्–ध्वृ कौटिल्ये इति धातुपाठात् न ध्वरति न कुटिलो भवति इत्यध्वरः यथाविधिमार्गमनुष्ठित इति यावत् । "नञ्सुभ्याम्" इत्यन्तोदात्तत्वम् । अर्थस्तु समानः । अत एव महीधराचार्य आह–"अध्वरमकुटिलं शास्त्रोक्तम्" इति । यास्कस्तु "ध्वरतिर्हिंसाकर्मा । तत्प्रतिषेधः" इत्याह ।

३ प्रथमपादे सप्ताक्षरत्वात् निचृत्त्वम् । अत्र केवलगायत्रीत्वविवक्षायां तु त्वमित्येत् 'तुवम्' इति विश्लिष्य द्व्यक्षरं भवतीति वक्तव्यम् । तद्यथा स्वः सुवरिति ।

यजमानाय यद् भद्रं कर्तुमिच्छसि सत्प्रिय । त्वञ्चेष्टयैव कर्माणि वर्त्तयित्वा तदीहनम् ॥ १७ ॥
तवैव सत्यमङ्गानां रस यद् वह्निगो हरिः । [1]अङ्गिरा अङ्गिरःपुत्रो यतोऽग्निरभवत् क्वचित् ॥
॥ १८ ॥ * ॥

उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयम् । नमोभरन्तएमसि ॥ ७ ॥

[उप । त्वा । अग्ने । दिवेऽदिवे । दोषाऽवस्तः । धिया । वयम् ॥
नमः । भरन्तः । आ । इमसि ॥ ७ ॥]

वस्तर्दिनमहोरात्रमभीष्ट प्राणिनां सदा । अल्पा अपि वयं बुद्ध्या त्वामुच्चगुणमीश्वरम् । उपयाम मनःकर्मवाग्भिस्त्वन्नमसम्भराः ॥ १९ ॥ * ॥

[यवमध्या विराड्गायत्री[2]]

राजन्तमध्वराणाङ्गोपामृतस्यदीदिविम् । वर्द्धमानंस्वेदमे ॥ ८ ॥

[राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य । दीदिविम् ॥
वर्द्धमानम् । स्वे । दमे ॥ ८ ॥]

देदीप्यमानं स्वे [3]सद्मन्यध्वरेशं सदावृधम् । [4]यथार्थज्ञानगोपं त्वामुपेमसि ॥ * ॥

---

१ "अङ्गिरा अङ्गाराः" इति यास्कः । "त्वमग्ने प्रथमोऽङ्गिरा ऋषिर्देवानाम्" इति श्रुतिः । अङ्गिरसः पुत्रोऽङ्गिरःपुत्रः । तद्वंशजत्वात् तत्पुत्रत्वम् । तथाहि भारते–"राजन् बृहस्पतिर्नाम तत्याप्यङ्गिरसः सुतः । बृहस्पतेश्चान्द्रमसी भार्याऽभूद् या यशस्विनी । अग्नीन् साऽजनयत् पुत्रान्" इति । "अग्निर्बृहस्पतेः पुत्रः" इति च । भानुनामा चाग्निः साक्षादङ्गिरसः सुतः । तदप्युक्तं भारते–"भानुं चाप्यङ्गिराऽसृजत्" इति, "भानुरङ्गिरसो धीरः पुत्रः" इति च । अङ्गिराः पुत्रोऽस्येति वाऽङ्गिरःपुत्रः । तदपि भारत एवोक्तम् । तद्यथा–"कुरु पुण्यं प्रजासर्गं भवाग्निस्तिमिरापहः । मां च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा । तत् श्रुत्वाऽङ्गिरसो वाक्यं जातवेदास्तथाऽकरोत्" इत्यादि ।

२ प्रथमपादे सप्ताक्षराणि तृतीयपादे च सप्ताक्षराणीति द्वाभ्यामक्षराभ्यां न्यूनत्वात् विराडियं गायत्री । "द्वाभ्यां विराट्स्वराजौ" (३. ६०) इति पिङ्गलनागः । यववन्मध्ये पृथुत्वादाद्यन्तयोरल्पाक्षरत्वात्पिपीलिकामध्याविपरीतेयं यवमध्येति व्यपदिश्यते । अत एव "विपरीता यवमध्या" (३. ५८.) इति पिङ्गलनागः । अत्राध्वराणामित्यत्र अधुवराणामिति, स्वे दमे इत्यत्र सुवे दमे इति च विश्लेषेण पादपूरणे केवलगायत्रीत्वमेव सेत्स्यतीति कात्यायनः ।

३ "दमे, कृतिः, योनिः, सद्मः" (३. ४.) इति वेदनिघण्टुः ।

४ "ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः" इत्यभियुक्ताः । तेन ऋतस्य गोपामिति यथार्थज्ञानगोप्तारम् ।

[विराड्गायत्री[1]]

सनः पितेवसूनवेऽग्नेसूपायनोभव । सचस्वानस्वस्तये ॥ ९ ॥ [॥ २ ॥]

[सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव ॥

सचस्व । नः । स्वस्तये ॥ ९ ॥ २ ॥]

[इति प्रथमं सूक्तम्]

पितेव नः ॥ २० ॥ सूपाश्रयो भव त्वं च यद्वदौरससूनवे । [2]रक्ष सन्ततसौख्याय सम्यक् सत्त्वाय वा सदा ॥ २१ ॥ * ॥ * ॥.

मुनिस्तु सर्वविद्यानां भगवान् पुरुषोत्तमः । विशेषतश्च वेदानां यो ब्रह्माणमिति श्रुतिः[3] । ऋग्वेदादिकमस्यैव श्वसितं प्राह चापरा[4] ॥ २२ ॥ वाचो बभूवुरुशतीर्हयग्रीवादिति स्फुटम् । वचो भागवतेऽप्यस्ति[5] ब्रह्माण्डेऽपि[6] तथाऽपरम् ॥ २३ ॥ "हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः । ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ॥ २४ ॥ दक्षाद्याः सनकाद्याश्च शक्राद्या

---

१ अत्र द्वितीयतृतीययोः पादयोः सप्ताक्षरत्वाद् विराट्त्वम् । "सूनवे अग्ने" इति विश्लेषेण द्वितीयपादेऽष्टाक्षरत्वं भवति । सुअस्तये इति तृतीयपादे च । तथा च केवलगायत्रीत्वमपि भवति । तथाहि कात्यायनः—"पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत्" इति । यकारवकारसंयोगः क्षैप्रसंयोगः । यण्संयोगो वा । तद्यथा—ईड्यः, त्वम्, अध्वराणाम्, स्वे, स्वस्तये- इति । यत्र द्वे अक्षरे एकाक्षरीक्रियेते स सन्धिरेकाक्षरीभावः । तद्यथा—सूनवेऽग्ने । अत्र उत्तरः अकारः पूर्वेण एकारेण एकाकारः कृतः । स चेद् व्यूह्यते, अष्टाक्षरः सम्पद्यते ।

२ सचस्व इत्येतत् रक्षेति व्याख्यातम् । 'सचस्व समवेतो भव' इति सायणः । स्थूलं व्याख्यानमेतत् । समवायार्थस्य षचधातोः परस्मैभाषत्वात् । तथाहि दैवम्—"सेचने सचते तच्च समवाये सचत्यपि" इति । "अनेकार्थत्वात् षच सेचन इत्यस्य समवाये वृत्तिः" इति हरदत्तोक्तदिशा वा उभयपदित्वाभ्युपगमेन वा कथञ्चिद् व्याख्यानसम्भवेऽपि रक्षणार्थस्य स्वरसस्य त्यागे कारणाभावः । तर्हि को धातुः? षच सेवने । एतमेवार्वाचीनाः शाब्दिकाः सेचने च पठन्ति । सेवने इति तु वक्तव्यम् । अत एव "सिषक्तु सचत इति सेवमानस्य" इति यास्कः । अत एव च "षच् ङ सेवने" इति वोपदेवः । सेवनं रक्षणमिति फलितं भवति । भजकस्य सेवनमुपसत्तिः । भजनीयस्य हि रक्षणम् । तथाहि प्रयोगः—"तन्मे भजसि पद्माक्षि" इति ॥ * ॥ एवं स्वस्तय इति सन्ततसौख्यायेति सम्यक् सत्त्वायेति द्वेधा व्याख्यातम् । "स्वस्ति मङ्गलाशीर्वादपापनिर्णेजनादिषु" इति भागुरिः । अस्तिर्हि सद्भाववाची सुखवाची च । "सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः" इत्यभिधानात् । आशीरपि हि द्वेधा पूर्यते चिरं जीव, सुखी च भवेति ।

३ "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (६. १८) इति श्वेताश्वतरश्रुतिः ।

४ अपरा "अस्य महतो भूतस्य निश्वसितम्" इत्याद्या बृहदारण्यके ।

५ "वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः" इत्यानुपूर्वी । "सत्रे ममाऽस भगवान् हयशीर्ष एषः (भा. २.७.११.) इत्युपक्रमादस्य हयग्रीवस्य नस्तः ।

६ "ब्रह्माण्डे च" इति क्वचित् ।

मनवस्तथा । जगृहुस्ते च विश्वस्मिन्नकुर्वंस्ताभ्यस्ततोऽखिलाः" ॥ २५ ॥ उक्तं [1]पाद्मपुराणे च "कपिलो भगवानजः । प्रोवाच ब्रह्मणे विद्याः", "हरिर्व्यासो बादरायणः ॥ २६ ॥ ओङ्कारपूर्वका[2] विद्याः प्रेरयत्यखिलेष्वपि । सर्वैव ब्रह्मणे पूर्वम्" इति सात्वतसंहिता ॥ २७ ॥ सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम् । अन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तितः ॥ २८ ॥ तेन चानन्तशक्तित्वाद् युगपत् समुदीरितम् । प्रथमप्रतिपत्तृत्वा[3]न्मुनिर्ब्रह्माऽखिलस्य च ॥ २९ ॥ सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नामराट् । द्वितीयप्रतिपत्तृत्वान्मुनित्वे सम्प्रकीर्तितौ ॥ ३० ॥ यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य कीर्तितः । अर्वाक् तु द्वादशावृत्तेरधीत्याप्यृषिरेव सः ॥ ३१ ॥ यत् स्वयं प्रतिभातस्य निश्चयार्थं[4] गुरोर्वचः । सुपर्णादेर्विरिञ्चस्य केवलं धर्मकारणम् ॥ ३२ ॥ ऋचामृषिस्ततः शक्रो यजुषां सूर्य एव च । सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः ॥ ३३ ॥ [5]अथर्वाङ्गिरसामग्निरेकर्षिश्चाप्यथर्वणाम् । इत्युक्ताः समुदायस्य सन्त्यन्ये च पृथक्पृथक् ॥ ३४ ॥ एतज्ज्ञानाद्दृष्टस्य फलस्याऽप्तिः स्फुटं भवेत् । द्रष्टॄणां च चतुर्थानां ज्ञानादप्यैहिकं भवेत् ॥ ३५ ॥ ते चैकस्यापि बहवः स्युः सूक्तस्यर्च एव वा[6] । तस्यान्तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः ॥ ३६ ॥ तेषां वाक्यस्वरूपेण प्रार्थनादिषु पश्यति । विष्णुर्ब्रह्मा सुपर्णो वा तत्तद्योग्यार्थभेदतः ॥ ३७ ॥ सर्ववेदाभिमानित्वाच्छ्रीर्ब्रह्माणी च भारती । द्रष्टृृयश्च सर्वविद्यानां[7] व्याख्यातौ ब्रह्मणा मरुत् ॥ ३८ ॥ स्वभर्त्रनन्तरं द्रष्ट्र्यस्ताभ्यस्तत्रोदिता हिरुक्[8] । ताः स्तुवन्ति हरिं नित्यं विद्याभिस्ते च सर्वशः ॥ ३९ ॥ छन्दस्त्वेन मुनित्वेन तासां स्मृतिरुदीरिता । स्मर्तव्यास्ते च सर्वेऽपि मुनित्वेन पृथक्पृथक् ॥ ४० ॥ * । [9]गायत्री बृहती चैव ताः सर्वा गरुडस्तथा । ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप्, स्वाहेति चोच्यते ॥ ४१ ॥ गायत्री, जगती चैव वारुणी, रोहिणी तथा । अनुष्टुब् बृहती चैव तारा, पङ्क्तिः शची तथा ॥ ४२ ॥ उष्णिक् सौरी, जगत्यश्च सर्वदेवस्त्रियो मताः ।

---

१ "पद्मपुराणे" इति प्र. पाठः ।

२ "ओङ्कारपूर्विकाः" इति प्र. पाठः ।

३ "—प्रतिवक्तृत्वात्" इति क्वचित् ।

४ "संशयार्थम्" इति प्र. पाठः ।

५ अथर्ववेदे तावत् अथर्वदृष्टा मन्त्रा अथर्वाण इत्युच्यन्ते । अङ्गिरोदृष्टा अङ्गिरस इति । दृष्टे द्रष्टृत्वोपचारः । सर्वेषामपि अग्निः प्रथमद्रष्टा । अथर्वणामेकर्षिरपि द्रष्टा । तथाह्यङ्गिरऋषिकत्वादङ्गिरस्त्वं श्रूयते–"अङ्गिरोभिर्यज्ञियैरा गहीह यम वैरूपैरिह मादयस्व" (अथ.१८.१.५९.) इति ।

६ "एव च" इति क्वचित् पाठः ।

७ "सर्ववेदानाम्" इति क्वचित् ।

८ क्वचित् "तेनोदिता हिरुक्" इति पठ्यते । तत्पक्षे तेन उक्तकारणेन ताः हिरुक् विनैव केवलं देवा उदिताः । तद् यथा प्रयोगः–" हिरुक् कर्म न मोक्षः स्यात्" इत्यादि ।

९ तथाचैवं देवताक्रमः । १) गायत्र्याः श्रीः, सरस्वती, भारती, गरुडः, स्वाहा चेति पञ्च देवताः । २) उष्णिहः सूर्यपत्नी । ३) अनुष्टुभः सरस्वती रोहिणी च देवते । ४) बृहत्याः श्रीः, सरस्वती, भारती, गरुडः, तारा च देवताः । ५) पङ्क्तेः शची, मित्रावरुणयोर्भार्ये च देवताः । ६) त्रिष्टुभः शची । ७) जगत्याः वारुणी, सर्वदेवस्त्रियश्च देवताः । तथाच मन्त्राः "अग्नेर्गायत्र्यभवत् सयुग्वा", "उष्णिहया सविता सम्बभूव", "अनुष्टुभा सोमः", "बृहस्पतेर्बृहती", "विराण्मित्रावरुणयोः", "इन्द्रस्य त्रिष्टुबिह भागः", "विश्वान् देवान् जगत्याविवेश" इत्याद्याः । एतेन एतन्मन्त्रार्थमन्यथयता यत् पिङ्गलनागेनोक्तम्– "अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वे देवा देवताः" (३.६३.) इति तदाचार्यपादानामसम्मतमिति ज्ञायते ।

विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते ॥ ४३ ॥ अतिच्छन्दांसि सर्वाणि सर्वदेव्यः प्रकीर्तिताः । विराळिति[1] च नामाऽसां तास्ता ऊनाधिकेष्वपि[2] ॥ ४४ ॥ निचृद्[3]भुरिग्विराट्सञ्ज्ञाः प्रस्तारे-त्यादि[4] नाम च । बह्वीनामेकमानेन त्वेकनाम[5] च युज्यते । सर्वामिमानिता चैव तिसृणां च[6] यथाक्रमम् ॥ ४५ ॥ * ॥ देवता सर्वविद्यानां स्वयं नारायणः प्रभुः । ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ॥ ४६ ॥ ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च । पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ॥ ४७ ॥ ब्रह्मवायू गिरौ वीन्द्रशेषरुद्राश्च तत्स्त्रियः । शक्रकामौ कामपुत्रमनुदक्षा-ङ्गिरःसुताः ॥ ४८ ॥ तद्वच्छचीरती[7] सूर्यसोमधर्मादितिस्त्रियः । प्रधानमरुतो वारिपतिरग्निश्च मारुताः ॥ ४९ ॥ निर्ऋतिः स्त्रियश्च सूर्यादेरश्विनावितरे[8] तथा । अनन्तकोटिशतकदशार्द्धांशशतः क्रमात् ॥ ५० ॥ ज्ञानभक्तिबलैश्वर्यपूर्वाखिलगुणैरपि । मुक्तावपि क्रमो ह्येषं देवता उदिता इमाः ॥ ५१ ॥ इन्द्रावरा विशेषेण लिङ्गैनैव पृथक्पृथक् । देवतास्तत्रतत्र स्युरेष एव परो विधिः ॥ ५२ ॥ वेदादिवर्णपर्यन्तैर्मूर्तयः केशवस्य तु । समासव्यासयोगेन वाच्यास्तात्पर्यतः पृथक् । यथायोगं यथान्यायमन्यासामपि मूर्तयः ॥ ५३ ॥ ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिर्मिते[9] । प्रवृत्ते चैतदखिलमुक्तं हि प्रभुणा स्वयम् ॥ ५४ ॥ [10]सर्वे वेदाश्च नामानि ता वा एता ऋचस्तथा । इन्द्रं [11]मित्रं च वरुणमित्याद्यत्र प्रमा परा ॥ ५५ ॥ * ॥ "देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् । ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथा तु कथञ्चन" ॥ ५६ ॥ इति पिङ्गश्रुतिश्चाऽह[12] दृश्यतेऽत्र[13] च

---

१ "विराडिति" इति प्र. पाठः । २ "ऊनादिकेष्वपि" इति क्वचित् ।

३ "निवृत्" इति क्वचित् पाठः । औत्तरेयाः केचन निवृद्गायत्रीत्यादि च पठन्ति । परन्तु अनुक्रमणिकाछन्द-स्सूत्रादिषु 'निचृत्' इति पाठस्यैव परिग्रहेण सर्वानुमतत्वात् स एव साधुः पाठः ।

४ तथाहि छन्दःसूत्रम्—"प्रस्तारपङ्क्तिः पुरतः । आस्तारपङ्क्तिः परतः । विष्टारपङ्क्तिरन्तः । संस्तारपङ्क्ति-र्बहिः" (३.४०.४३.) इत्यादि । तदर्थः— द्वादशाक्षरौ द्वौ पादौ पुरतः ततश्चाष्टाक्षरौ द्वौ प्रस्तारपङ्क्तिः । विपरीता आस्तारपङ्क्तिः । मध्ये द्वौ द्वादशाक्षरौ चेद् विष्टारपङ्क्तिः । आद्यन्तयोश्चेत् संस्तारपङ्क्तिरिति ।

५ "त्वेकं नाम" इति प्र. पाठः ।

६ "तु" इति प्र. पाठः । यत् क्वचित् कोशेषु "तिसृणां च" इति पठ्यते तत्तु "न तिसृचतसृ" इति नामि दीर्घ-निषेधादनुपादेयमिति भाति ।

७ "तद्वच्छची रतिः" इति प्र. पाठः ।

८ अस्य सङ्ग्रहाधिकारत्वाद् यत्र स्फुटं तारतम्यवचनं तदनुसारेणैतत् सर्वं योज्यमिति न ग्रन्थान्तरविरोधः शङ्क्यः ।

९ एतेन यास्कनिर्मितं निरुक्तं न वेदाङ्गमित्याह ।

१० "सर्वे वेदा यत् पदमामनन्ति" इति कठश्रुतिः । "नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इति भाल्लवेयश्रुतिः । "ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः" इत्यैतरेयी श्रुतिः । "इन्द्रं मित्रं वरुणमग्निमाहुः....एकं सद् विप्रा बहुधा वदन्ति" इत्यृग्वेदे (१.१६४.४६) अथर्ववेदे च (९.१०.२८.) ।

११ "मित्रं वरुणमित्याद्यत्र च प्रमा" इति प्र. पाठः । "मित्रं वरुणमित्याद्यत्र प्रमा" इति क्वचित् । एतत्पाठे सप्ताक्षरः पूर्वपादः ।

१२ "पैङ्गिश्रुतिश्चाऽह" इति प्र. पाठः । १३ "दृश्यन्तेऽत्र" इति क्वचित् प्र. पाठः ।

सर्वेशाः । 'न ते महित्वमित्यादिनैश्वरानेव केवलान् । गुणान् विष्णोः श्रुतिर्ह्याह नैव दोषान् कथञ्चन ॥ ५७ ॥ जाता परि बभूवेति मर्यादां ब्रह्मणोऽपि हि[2] । नैव रेमेऽबिभेद् ब्रह्मा[3] नाऽसीदित्यादिकानपि ॥ ५८ ॥ दोषान् रुद्रे च[4] तानेव न मिनन्तीतिपूर्वकान्[5] । यं कामये तन्तमुग्रं रुद्राय धनुरित्यपि ॥ ५९ ॥ अस्य देवस्य मा शिश्नदेवा अपि गुरित्यपि । ग्रञ्छिश्नदेवानित्याद्या दोषा बहव ईरिताः ॥ ६० ॥ 'ततो वितिष्ठे योनिः स एतावत्यहमित्यपि । अन्याश्रयत्वं देव्याश्च कथितं बहुशोऽपि हि । तदाश्रयत्वमन्येषामपि तत्रैव निश्चयात् ॥ ६१ ॥ ब्रह्मैवाग्र" इति ह्युक्त्वा रुद्रादीनां ततो जनिः । उक्ता जातानि विश्वानि स पर्यभवदित्यपि । यस्य च्छायाऽमृतं मृत्युरिति चाऽवरतोऽब्रवीत् ॥ ६२ ॥ "अनन्तादवरेशाना तस्याः प्राणस्ततश्च वाक् । तस्या रुद्र उमा तस्मादिन्द्रस्तस्यास्ततोऽपरे" । सौपर्णश्रुतिरित्याह "सप्ताक्षितय"[8] इत्यपि ॥ ६३ ॥ "वायुरस्मा उपामन्थत्", "विश्वदेवाय वायवे" । विश्वैर्देवैः स इत्याद्याः प्रमा अत्रापरा अपि ॥ ६४ ॥ "ना-

---

१ "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति" (ऋ. ७. ९९. १.; तै. ब्रा. २. ८. ३. २.) इत्यानुपूर्वी । विष्णुसूक्तं हि तत् । "विष्णो देव त्वं परमस्य वित्से" इति चोत्तरार्द्धे । "न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप" इति चोत्तरो मन्त्रः ।

२ "ब्रह्मणोऽपि वा" इति क्वचित् । "प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव" इति ऋग्वेदे (१०.१२१. १०.); यजुर्वेदे च तैत्तिरीयसंहितायाम् (१.८.१४.२. तथा ३.२.५.६.) तैत्तिरीयब्राह्मणे (२.८.१.२. तथा ३.५.७.१.); अथर्ववेदेऽपि किञ्चिद् व्यत्यासेन पठ्यते—"विश्वा रूपाणि परिभूर्जजान" (७.८०.३.) इति । शुक्लयजुर्वेदेऽपि "विश्वा रूपाणि परि ता बभूव" (१०.२०.; तथा १३.६५.) इति ।

३ "सोऽबिभेत् तस्मादेकाकी बिभेति" इति, "स वै नैव रेमे तस्मादेकाकी न रमते" इति च बृहदारण्यके । "एको नारायण आसीन्न ब्रह्मा नेशानः" इत्यादि च महोपनिषदि ।

४ "रुद्रेऽपि" इति क्वचित् पाठः ।

५ "न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः" इत्यृग्वेदे (२.३८.९.); "यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् । अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ" (ऋ.१०.१२५.५–६.) इति लक्ष्मीसूक्तम् । अथर्ववेदे चैतद् पठ्यते (४.३०.३–५.) । "अस्य देवस्य मीळ्हुषो विष्णोरेषस्य प्रभृथे हविर्भिः । विदे हि रुद्रो रुद्रियं महित्वम्" (७.४०.५.) इत्यृग्वेदे । "स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुरृतं नः" (७.२१.५.) इति च ।

६ "मम योनिरप्स्वाऽन्तः समुद्रे । ततो वि तिष्ठे भुवना नु विश्वा" (१०.१२५.७.) "परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव" (८) इति च लक्ष्मीसूक्तमृग्वेदे । "भुवनानि विश्वा" इति, "महिम्ना सं बभूव" इति च-पाठव्यत्यासेनाथर्ववेदे च ।

७ "हिरण्यगर्भः समवर्तताग्रे" (१०.१२१.१.) इति हिरण्यगर्भसूक्तम् । तत्र "यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम" इति द्वितीयो मन्त्रः ।

८ "तमेताः सप्ताक्षितय उपतिष्ठन्ते तद् या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः.......यच्छुक्लं तेनेन्द्रः" इत्याद्यारण्यके । "वायुरस्मा उपामन्थत् पिनष्टि स्मा कुनन्नमा । केशी विषस्य पात्रेण यद् रुद्रेणापिबत् सह" (ऋ.१०.१३६.७.) इति केशिसूक्तम् । "पूषण्वते मरुत्वते विश्वदेवाय वायवे । स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तन" (ऋ.१.१४२.१२.) इत्याप्रीसूक्तम् ।

रायणोऽदितिर्वायुर्वाणी रुद्र उमा विभुः । इतरे च क्रमाद्धीनाः शतांशा 'वायुतोऽवराः" ॥ ६५ ॥ इति [2]बर्कुश्रुतिश्चाऽह शक्रात् सताक्षितिश्रुतिः । [3]अयं त एमि तन्वेतिपूर्वा अन्या अपि स्फुटम् । वायोराधिक्यमप्याहुः "इन्द्रं सोमं हुताशनम् ॥ ६६ ॥ सूर्यं रुद्रमिमान् पञ्च देवानेको महात्मनः । सृजत्यत्ति महान् प्राण" इति चाऽह तुरश्रुतिः ॥ ६७ ॥ "वि हि सोतोरसृक्षत नेन्द्रं देवममंसत[4] । [यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा" ।] "न यस्येन्द्र" इति ह्याह विष्णोरिन्द्रस्य हीनताम् ॥ ६८ ॥ [5]वेधा अजिन्वदित्यादिवचनं विष्णुनामतः[6] । आनन्दश्रुतिरप्यस्य[7] जीवतामेव दर्शयेत् ॥ ६९ ॥ आह सूर्याद्यपीन्द्रस्य वायोर्विष्णोरपीशताम् । यः सूर्यं य उषसं म्रियन्ते पञ्च देवताः ॥ ७० ॥ चक्षुर्वा द्यौश्चाऽदित्यश्च चक्षोः सूर्यो अजायत । यमादित्यो न वेदेतिपूर्वा श्रुतिरथापराः[8] ॥ ७१ ॥ "विष्णोर्वातो अजनिष्ट वातादिन्द्रस्ततो रविः । सोमश्चेति लयेऽप्येवं पूर्वपूर्वे गुणाधिकाः" ॥ ७२ ॥ "विष्णोः प्राणो अजनिष्ट प्राणादिन्द्रो रविर्विधुः । लयोऽप्येतादृशस्तेषां पूर्वःपूर्वो गुणाधिकः" ॥ ७३ ॥ तुरश्रुतिश्च सौपर्णी पिङ्गश्रुतिरपीदृशी[9] । अतः सर्वाधिको विष्णुर्निर्णीतः श्रुतिसञ्चयात् ॥ ७४ ॥ * ॥ अतो दोषवचो यत्र तद् वाक्यमवरं वदेत् । निर्दोषतैव विष्णोस्तु क्रमान्मध्यगतेष्वपि ॥ ७५ ॥ "त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते । विष्णोः सहस्रनामापि निरन्तरशतार्थकम्" ॥ ७६ ॥ इति [10]स्कान्दवचो यस्मादर्थभेदव्यपेक्षया । निर्दोषत्वं हरेर्वक्ति दोषमन्येष्वपि क्रमात् ॥ ७७ ॥ तारतम्यस्य विज्ञप्त्यै वचो दोषस्य चार्थवत् । "गुणाः श्रुता" इति ह्याह गुणैकनियतिं हरौ ॥ ७८ ॥ [11]"निर्दोषो गुणपूर्णश्च विष्णुरेको नचापरः । अपूर्णा दोषरहिता मायैका तद्वशैव च ॥ ७९ ॥ अदोषः प्रायशो ब्रह्मा दोषवन्तः क्रमात् परे" । इति मान्यश्रुतिश्चाऽह भेदोऽर्थानां ततो मतः ॥ ८० ॥ "रूढिमेव समाश्रित्य विभज्यार्थान् यथाक्रमम् । [12]विदोषगुणपूर्त्यर्थं विष्णौ योगार्थ[13]मानयेत् ॥ ८१ ॥ पश्चादेव यथायोगमितरेष्वपि सन्नयेत्" । ऋग्वेदसंहितायां च प्रभुणैवं समीरितम् ॥ ८२ ॥ पृथग् रूपाणि विष्णोस्तु देवतान्तरगाणि च । अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत् ॥ ८३ ॥ [14]नकिर्माकिः ससीत्यादि प्रोक्ताधिक्यव्यपेक्षया[15] । आधिक्येऽधिकमित्येव हरिणा

---

१ "शतांशात्" इति प्र. पाठः ।

२ "बर्कश्रुतिश्चाह" इति प्र. पाठः ।

३ "अयं त एमि तन्वा पुरस्ताद् विश्वे देवा अभि मा यन्ति पश्चात्" इत्यृग्वेदे (८. १००. १.) मन्त्रः ।

४ "अयमृग्वेदे (१०. ८६. १.), अथर्ववेदे च (२०. १२६. १.) पठ्यते । अस्योत्तरार्द्धं प्र. पाठे क्वचित् कोशेषु च न पठ्यते ।

५ "इन्द्राय विष्णुः सुकृतो सुकृत्तरः । वेधा अजिन्वत्" इति चर्ग्वेदे (१. १५६. ५.) विष्णुसूक्तम् ।

६ "विष्णुशब्दतः" इति क्वचित् ।

७ "ते ये शतमिन्द्रस्याऽनन्दाः स एको बृहस्पतेरानन्दः" इति तैत्तिरीयश्रुतिः ।

८ "श्रुतिरथापरा" इति क्वचित् ।

९ "—रपीदृशी" इति क्वचित् ।

१० "स्कान्दे वचः" इति क्वचित् ।

११ "निर्दोषगुणपूर्णश्च" इति प्र. पाठः ।

१२ "निर्दोष—" इति क्वचित् ।

१३ "विष्णोर्योगार्थ—" इति क्वचित् ।

१४ नकिः, नकिम्, नकीम् । एवं माकिः, माकिम्, माकीम् । अत्र वेदनिघण्टुः—"हिकम् । नुकम् । सुकम् । आहिकम् । आकीम् । नकिः । मकिः । नकीम् । आकृतम्— इति नव उत्तराणि पदानि सर्वपदसमाम्नानाय" (३. १२.) इति ।

१५ "—विवक्षया" इति प्र. पाठः ।

सूक्ष्ममीरितम् ॥ ८४ ॥ कृत्वी हत्वीतिपूर्वाश्च तृतीयोऽतिशये यतः । [1]विश्लिष्टार्थे च विश्लिष्टमूनार्थे चोनमिष्यते । व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरितः ॥ ८५ ॥ अभेदो हरिरूपाणां गुणानां च क्रियासु च । तस्यैवावयवानां च[2] भेदः श्रीब्रह्मपूर्वकैः ॥ ८६ ॥ मुक्तैरपि जडैर्भेदः कैमुत्यादेव दृश्यते । ऋग्वेदसंहितायां च[2] प्रोक्तमेतत् समस्तशः ॥ ८७ ॥ अभेदः स्वगुणाद्यैस्तु[3] मुक्तानामपि सर्वशः । भेदाभेदस्त्वभेदश्च गुणैः संसारिणामपि । जडानामंशतोऽभेदः समुदायेन चोभयम् ॥ ८८ ॥ "मनुष्यगन्धर्वपितृगणकार्मिकतात्त्विकाः । देवाः शक्रः शिवो ब्रह्मा मुक्तौ [4]सौख्यादिभिर्गुणैः ॥ ८९ ॥ शतायुतोत्तरा नित्यमन्योन्यप्रीतिसंयुताः" । इति सिद्धान्तगं वाक्यं स्वयं भगवतेरितम् ॥ ९० ॥ * ॥ "स्वाध्यायस्तत्त्वविज्ञानं [5]विष्णुभक्तिर्विरागिता । निषिद्धकर्मसन्त्यागो विहितस्य सदा क्रिया ॥ ९१ ॥ सदा विष्णुस्मृतिश्चैव केवलं मोक्षसाधनम् । एतैर्विना न मोक्षः स्याद् भवेदेतैरपि ध्रुवम्" ॥ ९२ ॥ "ऋषिच्छन्दोदैवतानि ज्ञात्वाऽर्थं चैव भक्तितः । स्वाध्यायेनैव मोक्षः स्याद् विरक्तस्य हरिस्मृतेः" ॥ ९३ ॥ "जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यते" ॥ ९४ ॥ "तस्मान्नित्यं हरिं ध्यायेत् कुर्यात् स्वाध्यायमञ्जसा । ऐहिकामुष्मिका भोगा रक्तस्यान्यस्तु मुच्यते" । इति स्वाध्यायवचनं स्वयं भगवतोदितम् ॥ ९५ ॥ "स्वाध्यायात्तु प्रवचने सहस्रगुणितं फलम् । अर्थद्रष्टुः कोटिगुणं ततोऽनन्तं नियामके । तर्कागमाभ्यां नियतिं यः करोत्यधिकं ततः[6] ॥ ९६ ॥ दार्ढ्यमेवानुदात्तार्थ उदात्तस्योच्चता[7] तथा । नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः । [8]समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः ॥ ९७ ॥ स्तुत्यधर्मस्य भेदेन पदाद्यादिस्वरे भिदा ।

---

१ "विशिष्टार्थे च विशिष्ट–" इति क्वचित् ।

२ "हि" इति क्वचित् ।

३ "स्वगुणाद्यैश्च" इति प्र. पाठः ।

४ "सौख्यादिकैर्गुणैः" इति क्वचित् ।

५ "हरिभक्तिर्विरागता" इति क्वचित् ।

६ इतः परं प्र. पाठे "पूर्णं वेदाधिकद्रष्टुर्ब्रह्मणः फलमुच्यते" इति ९८ तमश्लोकानन्तरं पठ्यमानं पद्यार्द्धं पठ्यते । टीकायमपि तथा । कोशेष्वपि क्वचित् तथा ।

७ "उच्चतार्थता" इति प्र. पाठः ।

८ स्वराणां चतुर्णामपि समाहारे । यथा—पुरोहितम् । अथचार्थान्तरम्–वेदेषु तावत् सप्तस्वराः । उदात्तः, उदात्ततरः: अनुदात्तः, अनुदात्ततरः, स्वरितः, समाहारः, प्रचयश्चेति । तथाच भाष्ये अनुदात्तार्थ इति अनुदात्ततरस्यापि ग्रहणम् । दार्ढ्यमेव तस्याप्यर्थः । उदात्तस्येति उदात्ततरस्यापि ग्रहणम् । उच्चतैव तस्याप्यर्थः । तद्यथा—स इत्युदात्तः । प्र इत्युदात्तः । वौ३षट् इत्युदात्ततरः । "उच्चैस्तरां वषट्कारः" इति श्रवणात् । "वौषट्शब्दस्याऽदेः प्लुत उदात्तो विहितः, तदपेक्षयाऽयमुदात्ततरोऽन्त्यस्य विधीयते" इति जयकृष्णः । नः इत्यनुदात्तः । देवः इत्यत्रानुदात्ततरः । उदात्तपरो ह्यनुदात्तः अनुदात्ततरः । तेषाम् इति स्वरितान्तः । उदत्तात् परो ह्यनुदात्तः स्वरितः । अप्स्व१न्तः इति समाहारः । तथाच यत्र केवलमुदात्तश्रुतिः स स्वरितः, यत्रानुदात्तस्यापि श्रुतिः तत्रोभयसमाहारस्य स्फुटत्वात् स स्वरित एव समाहार इति विशिष्य व्यवह्रियते । होतारम् इति प्रचयान्तः । स्वरितात् परो ह्यनुदात्तः प्रचय एकश्रुतिनामा । तदुक्तम् "उदात्तानुदात्तस्वरितानां सन्निकर्षे ऐकश्रुत्यम्" इति । तदेवं सप्तापि स्वराः कथितार्था भवन्ति ।

साधारणो विधिस्त्वेष विशेषो यत्रयत्र च ॥ ९८ ॥ 'पूर्णं वेदाखिलद्रष्टुर्ब्रह्मणः फलमुच्यते । क्रमादेव तदन्येषामृष्यादीनां स्वयोग्यतः । विपर्ययार्थकथने विपरीतं तथा तमः ॥ ९९ ॥ यावत् प्रयोजको ज्ञाने तावत्तावच्छुभाधिकः । तथैव विपरीतेऽपि स्मृतौ ज्ञाने च तत् समम् ॥ १०० ॥ तमोनिरयमानुष्यस्वर्गमोक्षातिरेकतः । योग्यतातारतम्येन फलं सर्वेषु चोच्यते" । इति प्रवृत्तवचनं विवेकेऽप्येतदीरितम्[२] ॥ १०१ ॥ "यादृशो योग्यतां यायात् स ज्ञेयोऽर्थस्तथा[३] स्फुटम् । अनन्तनियमैर्युक्ता अनन्तार्थविशेषिणः ॥ १०२ ॥ वेदा इति समासेन नियमोऽयं समीरितः" । ऋक्संहितागतं वक्यमिति चान्यन्नियामकम् ॥ १०३ ॥ तस्माद् वन्द्याश्च पूज्याश्च ब्रह्माद्या ज्ञानयोजकाः । गुरुत्वेन क्रमेणैव विशेषेणैव[४] केशवः ॥ १०४ ॥ आरभ्य स्वगुरुं[५] यावद् विष्णुरेवोत्तरोत्तराः । क्रमान्निष्फलताऽन्यत्र गुरुतत्त्वे[६] समीरिताः[७] ॥ १०५ ॥ * ॥ एवं स्थितेऽग्निं विष्णुमग्निनामानमेव च । मधुच्छन्दा ऋक्शतेन वाय्वादिगतमेव च । अग्न्यादीन्[८] स्तौति सङ्क्षत्त्वा तत्तन्नामानमेव च ॥ १०६ ॥—

— २ —

[वायो नव, मधुच्छन्दाः, गायत्री, १-३ वायुः, षड्जस्वरः ।]

[पिपीलिकामध्या निचृद्गायत्री[९] ।]

(१०) वायवायाहिदर्शतेमेसोमाअरङ्कृताः । तेषाम्पाहिश्रुधीहवम् ॥ १ ॥

[वायोइति । आ । याहि । दर्शत । इमे । सोमाः । अरम्ऽकृताः ॥

तेषाम् । पाहि । श्रुधि । हवम् ॥ १ ॥]

[१०]"बलत्वादयनाच्चैव वायुरित्यभिधीयते । वात्यायुरिति वा ज्ञानाद् वरणादाश्रयत्वतः ॥ १०७ ॥ वय बन्धन इत्यस्मात् संसारवेर्व्ययादपि । [११]"व्येत्यस्मिन्निति वा वायुर्वेय श्रेष्ठत्व इत्यपि ॥ १०८ ॥

१ इदमर्द्धं प्र. पाठे ९६तमश्लोकादनन्तरं पठितत्वादत्र न पठ्यते । कोशेषु च क्वचित् तथा ।

२ क्वचित् कोशे इतः परं श्लोकद्वयमतिहाय "तस्माद् वन्द्याश्च...." इत्याद्यारभ्य पठ्यते ।

३ "ज्ञेयोऽर्थतया" इति च क्वचित् । ४ "विशेषेण च" इति "विशेषादेव" इति च क्वचित् ।

५ "स्वगुरून्" इति क्वचित् । ६ "गुरुत्वेन" इति क्वचित् ।

७ "समीरिता" इति प्र. पाठः । बहुवचनपाठे ब्रह्माद्या गुरुत्वेन समीरिताः । अन्यत्र निष्फलता च समीरिता । इतः परं क्वचित् कोशे "यादृशो योग्यतां यायात्...." (१०२-१०३) इत्यादि श्लोकद्वयं पठ्यते ।

८ "सोऽग्न्यादीन्" इति क्वचित् । "साग्न्यादिम्" इति प्र. पाठः । "साग्न्यादीन्" इत्यपि क्वचित् ।

९ अत्र 'दर्शत इमे' इति एकाक्षरीभावव्यूहेनाष्टाक्षरत्वं सम्पाद्य केवलगायत्रीत्वं वाच्यम् ।

१० "बलवति वः" इति तारनाथः । "बले वं स्यात्" इति । वायुर्हि बलदेवता । एतेन एतीति वायुरिति निरर्थकं वकारं वदन्तोऽर्वाचीना निरुक्तकारा निरस्ताः । तथाहि यास्कः—"एतेरिति स्थौलाष्ठीविरनर्थको वकारः" इति ।

११ बहुषु च कोशेषु "व्यैत्यस्मिन्" (?) इति पठ्यते ।

मुख्यतो वासुदेवे[1] ते गुणाः सन्त्येव सर्वशः । अनिषिद्धास्तदन्येषु यथायोग्यतया मताः ॥ १०९ ॥ दर्शतस्तत्तदृष्टित्वात् सर्वज्ञोऽसौ यतो विभुः । भक्त्याद्यलङ्कृताः सोमा मनांस्यन्ये हिरण्यतः । हिरण्यालङ्कृता यस्माद्धूयन्ते[2] वायवे सुताः ॥ ११० ॥ तान् पाहि श्रुधि चाऽह्वानं स्वातन्त्र्ये व्यत्ययोऽप्ययम् । मनोऽपि भोग्यमीशस्य प्रीतिमात्रेण केवलम् ॥ १११ ॥ गुणाधिक्यं येन भवेद् वेदस्यार्थः स एव हि । प्रयोजकत्वान्नान्यस्य फलाभावात् तदर्थता ॥ ११२ ॥ उपक्रमाद्यो यत्र तात्पर्यार्थः स एव हि[3] ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[4]]

(११) वायउक्थेभिर्जरन्तेत्वामच्छाजरितारः । सुतसोमाअहर्विदः ॥ २ ॥

[वायोइति । उक्थेभिः । जरन्ते । त्वाम् । अच्छ । जरितारः ॥

सुतऽसोमाः । अहःऽविदः ॥ २ ॥]

[5]स्तुवन्ति शस्त्रैः स्तोतारो यथावद् यज्ञवेदिनः ॥ ११३ ॥ * ॥

(१२) वायोतवप्रपृञ्चतीधेनाजिगातिदाशुषे । उरूचीसोमपीतये ॥ ३ ॥

[वायोइति । तव । प्रऽपृञ्चती । धेना । जिगाति । दाशुषे ॥

उरूची । सोमऽपीतये ॥ ३ ॥]

[6]वाक् त्वत्सम्पर्किणी यज्ञकृते [7]प्रापयतीप्सितम् । सोमपायातिमहती[8] महार्थत्वात् त्वदर्थतः ॥ ११४ ॥ * ॥

---

१ "व्याप्तो वायुरधोक्षजः" इति हि विष्णुसहस्रनामसु ।

२ "यस्मात् सूयन्ते" इति क्वचित् ।

३ एतेन "तेषामेकदेशं पिब" इत्याध्याहृत्याप्यस्वरसं वेदार्थं निर्वदन्तो निरस्ता भवन्ति सायणादयः ।

४ अत्रापि मन्त्रे द्वितीयचरणे 'तुवामच्छा' इति क्षैप्रसंयोगव्यूहेन केवलगायत्रीत्वं सम्पाद्यम् ।

५ जरन्ते स्तुवन्ति । तथाहि वेदनिघण्टुः—"गृणाति । जरते । ह्वयति । नदति" (३. १४.) इति अर्चतिकर्मसु पठति । स्तुतिरेव हि वाचाऽर्चनं नाम । अत एव जरितारः स्तोतार उच्यन्ते । तथाहि त्रयोदशसु स्तोतृनामसु इदमपि पदं पठ्यते—"रेभः । जरिता । कारुः" (३. १६.) इति ।

६ तथाहि वैदिकनिघण्टुः—"धेनाः । माः । विपा । नना । कशा । धिषणा । नौः । अक्षरम् । मही । अदितिः । शची । वाक्" (१.११.) इत्यादि ।

७ जिगाति प्राप्नोति । अत्रान्तर्णीतणिजर्थः । तथाहि निघण्टुः—"जिगाति । पतति । इन्वति । द्रमति । द्रवति" (२.१४.) इत्यादि गतिकर्मसु ।

८ उरूची इत्यतिमहती । तद्यथा वाणी वाणीची । सोमपीतये इति बहुव्रीहिः । पूर्वपदप्रकृतिस्वरत्वात् । तेन

[४-६ इन्द्रवायू देवते]

(१३) इन्द्रवायूइमेसुताउपप्रयोभिरागतम् ॥ इन्दवोवामुशन्तिहि ॥ ४ ॥

[इन्द्रवायूइति । इमे । सुताः । उप । प्रयःऽभिः । आ । गतम् ॥
इन्दवः । वाम् । उशन्ति । हि ॥ ४ ॥]

[1]इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः । ददर्शेदं दीप्तिमत्त्वादिदं रातीति वा भवेत् ॥ ११५ ॥ सोमाभिमानिनो देवा वामिच्छन्ति हि सोमगाः । प्रियैरुपागतं तेनोपेन्द्रः सङ्कर्षणो हरिः ॥ ११६ ॥ द्विरूपता[2] बहुत्वं च विशेषादेव केवलम् । एकस्यैव हरेर्नात्र भेदः शङ्क्यः कथञ्चन ॥ ११७ ॥ "एकमेवाद्वितीयं" "नेह[3] नानाऽस्ति किञ्चन" । "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" ॥ ११८ ॥ "यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवानु विधावति" ॥ ११९ ॥ उक्त्वा धर्मान् पृथक्त्वस्य निषेधादेवमेव हि । विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥ १२० ॥ * ॥

(१४) वायविन्द्रश्चचेतथःसुतानांवाजिनीवसू । तावायातमुपद्रवत् ॥ ५ ॥ [॥ ३ ॥]

[वायोइति । इन्द्रः । च । चेतथः । सुतानाम् । वाजिनीवसूइतिवाजिनीऽवसू ॥
तौ । आ । यातम् । उप । द्रवत् ॥ ५ ॥ ३ ॥

विजानतः सुतानन्नपतौ सूर्ये[4] सदा स्थितौ । द्रवद् द्रुतं[5] सुतात्पर्यद्योतकोऽभ्यास इष्यते ॥ १२१ ॥ * ॥

[निचृद्गायत्री[6]]

(१५) वायविन्द्रश्चसुन्वतआयातमुपनिष्कृतम् । मक्ष्वि१त्थाधियानरा ॥ ६ ॥

---

सोमपायेति लभ्यते । सोमपानायेति सायणः षष्ठीतत्पुरुषं वदन् पाणिनीयां स्वरप्रक्रियां वदन्नपि स्वरविरोधं न परिगणयति ।

१ "इदि परमैश्वर्ये" । "इदन्द्रं सन्तमिन्द्र इत्याचक्षते" इति श्रुतिः । "इदमदर्शम्" इति च । "इन्धी दीप्तौ" "रा ल दाने" इति वोपदेवः । "इदमुद्दिश्य वा द्रुतेः" इति क्वचित् ।

२ "द्विरुपत्वात्" इति प्र. पाठः । ३ "—तीयं तन्नेह" इति प्र. पाठः ।

४ वाजिनीत्युषोनामेति निघण्टौ स्थितम् । योगार्थस्त्वन्नपतित्वरूपः सूर्ये मुख्य इति स एव तदर्थ इति भाष्यभावः । वैदिकपदानां योगार्थे तात्पर्याधिक्यात् ।

५ तथाहि क्षिप्रनामसु निघण्टुः—"नु । मक्षु । द्रवत्" (२.१५.) इत्यादि ।

६ अत्र तृतीयपादे 'मक्षुवित्था' इति क्षैप्रसंयोगव्यूहेनाष्टाक्षरत्वे केवलगायत्रीत्वं च भवति ।

[वायोइति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् ॥
मक्षु । इत्था । धिया । नरा ॥ ६ ॥]

यजन् सुन्वान्[1] कृतस्यानुसारि कर्मैव निष्कृतम् । तदर्थं क्षिप्रमायातं धियेत्थम्भूतयाऽचलौ ॥ १२२ ॥ [2]नरौ तावविनाशित्वादुपचारः क्वचिद् भवेत् । अमरत्ववद् यतो मोक्षो देवतानां सुनिश्चितः[3] ॥ १२३ ॥ * ॥

[७–९ मित्रावरुणौ देवते]

(१६) मित्रंहुवेपूतदक्षंवरुणंचरिशादसम् । धियंघृताचींसाधन्ता ॥ ७ ॥

[मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् ॥
धियम् । घृताचीम् । साधन्ता ॥ ७ ॥]

मित्वा त्रातीति मित्रोऽयं मितमह्ना करोति वा । मितं रातीति वा नित्यं मितं रमयतीति वा ॥ १२४ ॥ आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा । वरमुन्नयतीत्यस्माद् वरानन्दत्वतोऽपि वा[4] ॥ १२५ ॥ पूता दक्षा अनेनेति पूतदक्ष इतीरितः । तमाह्वयामि सुखिनं शमदन् रमते यतः । अनूनसुखभोक्तृत्वाद् रिशादा इति कीर्तितः ॥ १२६ ॥ हरिर्घृतः सुशुद्धत्वाद् घृताची च तदञ्चनात् । स्वधीतिसाधको विष्णुर्भक्तानां च यथार्थतः ॥ १२७ ॥ * ॥

(१७) ऋतेनमित्रावरुणावृतावृधावृतस्पृशा । क्रतुम्बृहन्तमाशाथे ॥ ८ ॥

[ऋतेन । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा ॥
क्रतुम् । बृहन्तम् । आशाथेइति ॥ ८ ॥]

नित्यवृद्धः स भगवानृतेनानुपचारतः । ऋतस्पृग् वेदवाच्यत्वादन्यौ चेद् भगवानृतः । ऋ गतावित्यतः सर्ववस्तुष्वनुगतत्वतः ॥ १२८ ॥ तेन वृद्धौ तत्स्पृशौ च सर्वदा मित्रवारिपौ । संहितायां तु दैर्घ्यादिरुक्ताधिक्ये पदेऽन्यथा । अनन्यार्थत्वविज्ञप्त्या ईशाथे च महाक्रतुम् ॥ १२९ ॥ महत् सुखं वा ॥ * ॥

---

१ "सुन्वन्" इति प्र. पाठः । "सुन्वान् इति पाठे दीर्घश्छान्दसः" इति टीका ।

२ "री गि वधे गतौ" इति "रिषू वधे" इति च वोपदेवः । एतेन "नरौ पुरुषौ पौरुषेणोपेतौ" इति मदन् व्याख्यातः । आर्थिकार्थाद्धि योगार्थो बलवान् ।

३ "विनिश्चितः" इति क्वचित् । ४ "वरुणो वारुणो वृक्षः" इति विष्णुसहस्रनामसु ।

(१८) कवीनोमित्रावरुणातुविजाताउरुक्षया । दक्षन्दधातेअपसम् ॥ ९ ॥ [॥ ४ ॥]

[कवीइति । नः । मित्रावरुणा । तुविऽजातौ । उरुऽक्षया ॥
दक्षम् । दधातेइति । अपसम् ॥ ९ ॥ ४ ॥]

[इति द्वितीयं सूक्तम्]

[1]तुविजौ ब्रह्मजातौ तथाविधौ । हरिस्तथैव भूतत्वात् स्थानं क्षय इहोच्यते ॥ १३० ॥ कर्मापसं[2] च कर्तारं दक्षं कर्तारमेव वा । अस्मदर्थे दधाते तौ नित्यं बुद्धौ[3] गतागतौ ॥ १३१ ॥ * ॥

—३—

[अश्विना द्वादश, मधुच्छन्दाः, गायत्री, १–३ अश्विनौ, षड्जः]

(१९) अश्विनायज्वरीरिषोद्रवत्पाणीशुभस्पती । पुरुभुजाचनस्यतम् ॥ १ ॥

[अश्विना । यज्वरीः । इषः । द्रवत्पाणीइतिद्रवत्ऽपाणी । शुभः । पतीइति ।
(शुभस्पतीइतिशुभःऽपती[4]) ॥ पुरुऽभुजा । चनस्यतम् ॥ १ ॥

---

१ "उरु । तुवि । पुरु । भूरि" (नि.३.१.) इति तुविशब्दस्य भूमवाचित्वात् 'तुवि' इति ब्रह्मोच्यते । तथा जातौ ततो जातौ च तुविजातौ । "क्षि श वासगत्योः" इति वोपदेवः । अस्मिन्नर्थे उरुक्षयौ इति बहुव्रीहिरिति पूर्वपदप्रकृतिस्वरत्वं प्राप्नोति यद्यपि । तथाचोरुशब्दस्यान्तोदात्तत्वं प्राप्नोति । तथाऽपि "परादिश्छन्दसि बहुलम्" इत्यनुमतत्वात् "क्षयो निवासे" इति पूर्वप्राप्तमाद्युदात्तत्वं क्षयशब्दस्य समासो न बाधते । तथाच वार्तिकम्–"परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यतः" इति । अर्थविशेषलाभाय चैवं व्याख्यानम् । उरूणामपि देवादीनां क्षयौ आश्रयाविति व्याख्यानेऽपि न नो हानिः ।

२ "अपः । अप्नः । दंसः" (२.१.) इत्यादि वेदनिघण्टौ । "आपः कर्माख्यायाम्" इत्युणादिसूत्रम् । तद्वानपसः कर्ता च ।

३ "कविः । मनीषी । मन्धाता" (३.१५.) इति मेधाविनामसु निघण्टुः ।

४ यद्यपि शुभः पती इति भिन्ने पदे । पदपाठानुरोधात् । अथापि शुभस्पती इत्यैकपद्यं च युज्यते । पदपाठो ह्ययोगं व्यवच्छिनत्ति । नान्ययोगम् । अत एव टीकायां "पारस्करादित्वात् सुट्" इत्यैकपद्यमाश्रितम् । सम्मतश्चानेकधा पदपाठः । अनेकार्थत्वात् वेदानाम् । अत एव "पुरुष एवेदं सर्वम्" इति पौरुषे मन्त्रे 'पुरुषः' इति पदपाठेऽपि पुरुषे इति विभज्य व्याचक्षते । तथाच शाकलदृष्टपाठस्य पाठान्तरेणाविरोधात् द्वेधाऽपि युज्यते पदपाठः । सत्यनाथतीर्थीये तु पदपाठविरोधात् पारस्करादित्वात् सुडिति टीकावाक्यमेव प्रक्षिप्तमित्युक्तम् ।

अन्नानि यज्ञयोग्यानि[1] क्षिप्रहस्तौ शुभाधिपौ । [2]बहुलोपौ बहुभुजौ नो योजयतमश्विनौ । यज्ञे वृत्तान् स्वभागान् वा संयोजयतमाशु वै ॥ १३२ ॥ आशु वानाद् गतेरश्वी क्षिप्रावगतितोऽथवा[3] । अश्नुतेऽखिलमित्येवाप्यश्वजत्वात् तथाऽश्विनौ ॥ १३३ ॥ * ॥

[निचृद्गायत्री[4]]

(२०) अश्विनापुरुदंससानराशवीरयाधिया । धिष्ण्यावनतंगिरः ॥ २ ॥

[अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया ॥

धिष्ण्या । वनतम् । गिरः ॥ २ ॥]

बहुकर्मकृतौ सोख्यवीर्यात्मिकया धिया गिरः । अस्मदीयाः [5]सम्भजतं धिष्ण्यौ सर्वाश्रयौ सदा ॥ १३४ ॥ * ॥

(२१) दस्रायुवाकवसुतानासत्यावृक्तबर्हिषः । आयातंरुद्रवर्त्तनी ॥ ३ ॥

[दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः ॥

आ । यातम् । रुद्रवर्त्तनीइतिरुद्रऽवर्त्तनी ॥ ३ ॥]

भेदकौ सर्वशत्रूणां दस्रौ सम्बन्धिनो हि वाम् । सुता युवाकवः सोमा यज्वनः स्तृतबर्हिषः । नासत्यौ नासिकासंस्थौ नैव चासद्गुणौ क्वचित् ॥ १३५ ॥ रुजां द्रवणतो रुद्रो वायुस्तदनुवर्त्तनात् । स्नेहतोऽनुवशत्वाद् वा तन्मार्गगतितोऽथवा । कस्मिन्वहमिति श्रुत्या वासुदेवोऽश्विनावपि ॥ १३६ ॥ रुद्रवर्त्तनिशब्दोक्ताः ॥ * ॥

[४–६ इन्द्रो देवता] [पिपीलिकामध्या निचृद्गायत्री[6]]

(२२) इन्द्रायाहिचित्रभानोसुताइमेत्वायवः । अण्वीभिस्तनापूतासः ॥ ४ ॥

[इन्द्र । आ । याहि । चित्रभानोइतिचित्रऽभानो । सुताः । इमे । त्वाऽयवः ॥

अण्वीभिः । तना । पूतासः ॥ ४ ॥]

---

१ "यज्ञभोग्यानि" इति क्वचित् । २ "भुज् धौ त्राणे भक्षे" इति वोपदेवः ।

३ "–गतितोऽपिवा" इति क्वचित् ।

४ अत्र मन्त्रे तृतीयपादे "धिष्णिया" इति विश्लेषेण केवलगायत्रीत्वम् ।

५ "वन सम्भक्तिशब्दयोः" इति वोपदेवः । ६ "तुवायवः" इति विश्लेषेण केवलगायत्रीत्वम् ।

चित्रं भद्रं रतं चितौ । चिद्गतेश्चायनीयत्वा'ददनाद् वा चितोऽमिदा । तादृशा रश्मयो ज्ञानमस्येति भगवान् परः ॥ १३७ ॥ चित्रभानुरिति प्रोक्तस्तेजो वा तादृशं प्रभोः । त्वदिच्छव इमे सोमाः पटीभिः सूक्ष्मतन्तुभिः । विस्तृत्य शोधिताः सूक्ष्मप्रमाभिर्वा[2] मनांसि च ॥ १३८ ॥ सोमानां मनसां चैत्र देवताः सोमरश्मिगाः । सोमभृत्याः समस्तस्य सोम एवाधिपो हरिः ॥ १३९ ॥ * ॥

(२३) इन्द्रायाहिधियेषितोविप्रजूतस्सुतावतः । उपब्रह्माणिवाघतः ॥ ५ ॥

[इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः ॥
उप । ब्रह्माणि । वाघतः ॥ ५ ॥]

अस्मद्बुद्ध्या प्रार्थितो वा स्वबुद्ध्या प्रेरितोऽपि वा । ब्राह्मणैः प्रेरितो भक्त्या वदतो होतुरञ्जसा[3] । ब्रह्माणि सोमयुक्तानि यजमानस्य वेच्छतः[4] ॥ १४० ॥ उपायाह्यपि यःकोऽपि साधको यज्ञकृन्मतः । मानसो वाचिको वा स्याद् यज्ञो होता ह्वयन् स च ॥ १४१ ॥ * ॥

(२४) इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः । सुतेदधिष्वनश्चनः ॥ ६ ॥ [॥ ५ ॥]

[इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः ॥
सुते । दधिष्व । नः । चनः ॥ ६ ॥ ५ ॥]

वेगवांस्तूतुजानः[5] स्यात् संसारमुपसंहरन् । वर्तते येन हरिवा *हरिभिर्वर्ततेऽथवा ॥ १४२ ॥ हरणाद् विषयाणां च प्राणा हरय ईरिताः । तेषु वर्तत इत्यस्मात् तान् वाऽथ गमयेदसौ

---

१ "चायृ निशामेऽर्चे" इति बोपदेवः । २ "प्रमाभिश्च" इति क्वचित् ।

३ यद्यपि "भरताः । कुरवः । वाघतः । वृक्तबर्हिषः" इति निघण्टौ (३.१८.) ऋत्विङ्नामसु पठ्यते । तथाऽपि तृतीयमन्त्रेऽत्र च योगार्थयोगादन्य एवार्थो भाष्य उपक्षिप्तः । व्यासनिरुक्तादिविरोधे निघण्टोरपि नान्ततः प्रामाण्यमिष्यते ।

४ "चेच्छतः" इति क्वचित् ।

५ "आशु । प्राशुः । तूतुजिः । तूतुजानः । तुज्यमानासः" (२.१५.) इति क्षिप्रनामसु निघण्टुः ।

* निघण्टौ तु अग्रगामिनोरश्वयोरेव हरिनामत्वमुक्तम्—"हरी इन्द्रस्य । रोहितोऽग्नेः" (१.१५.) इत्यादि । अत्र तु सर्वेषामिति विशेषः । हरिशब्दस्याश्वसामान्यवाचित्वात् हरिभिरश्वैरिति वा ।

॥ १४३ ॥ हरिवा हरिवान् वाऽपि विष्णुना वर्ततेऽथवा । 'चनो मन इह प्रोक्तं सुखं च क्वचिदीर्यते ॥ १४४ ॥ * ॥

[७-९विश्वे देवा[२] देवताः]

(२५) ओमासश्चर्षणीधृतोविश्वेदेवासआगत । दाश्वांसोदाशुषस्सुतम् ॥ ७ ॥

[ओमासः । चर्षणिऽधृतः । विश्वे । देवासः । आ । गत ॥
दाश्वांसः । दाशुषः । सुतम् ॥ ७ ॥]

आ समन्तात् स्वीकृतमा[३] ओमा इति च कीर्तिताः । ओनामा भगवान् विष्णुस्तेन वा निर्मिताः सुराः । ओता मानेषु मा वैषु प्रोता ओमा इतीरिताः[४] ॥ १४५ ॥ प्रजाश्चर्षणयः[५] प्रोक्ता विश्वे ते च प्रवेशनात् । सर्वे[६] वाऽथ विशां वानाच्छब्दः कस्मै[७] यथा भवेत् ॥ १४६ ॥ दातारो यजमाना वा ॥ * ॥

(२६) विश्वेदेवासोअप्तुरस्सुतमागन्ततूर्णयः । उस्राइवस्वसराणि ॥ ८ ॥

[विश्वे । देवासः । अप्ऽतुरः । सुतम् । आ । गन्त । तूर्णयः ॥
उस्राःऽइव । स्वसराणि ॥ ८ ॥]

---

१ "चायतेरन्ने ह्रस्वश्च" इत्युणादिसूत्रम् । तेन चन इत्यन्ननामेति सर्वे व्याख्यातारः । परन्त्वाचार्यैरत्र वेदपरम्परासिद्धोऽपूर्वोऽर्थः प्रकाशितः । वेदे चन इति क्वचिन्मन उच्यते, क्वचिच्च सुखमिति । "चनो दधिष्व पचतः", इत्यादिषु यद् भौतिकान्नपरतया परे व्याचक्षते तत्र स्वरूपानन्दपरतया आचार्या व्याचक्षत इति महानिहार्थलाभः । युक्तं चैतत् । सुखार्थस्य चन्धातोरेव वेदेषु दर्शनात् । तथाहि प्रयोगः—"चनिष्टं देवा ओषधीषु", "सिषक्ति सा वां सुमतिश्चनिष्ठा" इत्यादिषु । एतेनान्नार्थकत्वं भाष्यकृदसम्मतमिति भाति ।

२ अत्र विश्वे देवा इति न देवतागणविशेषः, किन्तु सर्वे देवा उच्यन्ते ।

३ "स्वीकृता माः" इति मुद्रितः पाठः प्रामादिकः ।

४ अवन्तीत्योमासः रक्षका इति केषाञ्चिद् व्याख्याने चर्षणीधृत इति पुनरुक्तं भवति । प्रजानां धारका रक्षका इति हि तत्राप्यर्थः । प्रकृते तु आ+ऊ+माः । ऊ इत्यूरीकारे । "अक्षरस्साम्यान्निर्ब्रूयात्" इति यास्कोक्तेः ।

५ "जन्तवः । विशः । क्षितयः । कृष्टयः । चर्षणयः" (२.३.) इति निघण्टुः ।

६ तेन विश्वे देवा इति सर्वदैवत्योऽयं मन्त्र इत्युक्तं भवति । यास्कोऽप्येतं मन्त्रमेवमेव व्याचख्यौ–"विश्वे देवाः सर्वे देवाः । तेषामेषा भवति– ओमासश्चर्षणीधृतः" इति, "मनुष्यधृतः सर्वे च देवा इहाऽगच्छत" इति च ।

७ यथा हिरण्यगर्भसूक्ते हिरण्यगर्भवाचकस्य कशब्दस्यासर्वनामत्वेऽपि कस्मै देवायेति सर्वनामकार्यं दृष्टं तद्वत् । यथाच सहस्रनामसु "विश्वं विष्णुः" इति पठितं नाम 'विश्वस्मै नमः' इत्यपि अर्चनेषु केचित् परिवर्तयन्ति । यथावा सोऽहमस्मि' इत्यादौ अहेयत्वदिना भगवति योगवृत्तावपि सर्वनामकार्यं न हीयते तद्वत् ।

अप्तुरः कर्मवेगिनः । उस्रास्तु रश्मयश्चैव[1] स्वसराणि दिनानि[2] च ॥ १४७ ॥ * ॥

(२७) विश्वेदेवासोअस्रिधएहिमायासोअद्रुहः । मेधञ्जुषन्तवह्नयः ॥ ९ ॥

[विश्वे । देवासः । अस्रिधः । एहिऽमायासः । अद्रुहः ॥
मेधम् । जुषन्त[3] । वह्नयः ॥ ९ ॥]

असंसारादस्रिधस्ते देवाश्चेन्मोक्षनिश्चयात् । यथेष्टनिश्चितज्ञाना[4] एहिमायाः समन्ततः ॥ १४८ ॥
अदुःखत्वाददुहस्ते मेधं यज्ञं[5] जुषन्तु नः । वह्नयो वहनादस्य ॥ * ॥

[१०-१२ सरस्वती देवता]

(२८) पावकानस्सरस्वतीवाजेभिर्वाजिनीवती । यज्ञंवष्टुधियावसुः ॥ १० ॥

[पावका । नः । सरस्वती । वाजेभिः । वाजिनीऽवती ॥
यज्ञम् । वष्टु । धियाऽवसुः ॥ १० ॥]

शोधकत्वात्तु पावकः[6] ॥ १४९ ॥ सरणात् सर्वगत्वेन सर्वज्ञो वा सरो हरिः । सरसः सरतित्वाद् वा तद्वत्येव सरस्वती । हरौ गुणाः सरःशब्दा देवी तु हरिवाचिनी ॥ १५० ॥ हरिप्रियत्वतो वायुः सरस्वांस्तत्प्रियाऽथवा । गुणस्त्वेन[7] ततत्वात्तु[8] भगवांश्च[9] सरस्वती ॥ १५१ ॥ स्त्रीरूपश्चैव पुंरूपो भगवान् न नपुंसकः । स्त्रीपुंदोषविहीनत्वादपि तच्छब्दगोचरः ॥१५२ ॥

---

१ "रश्मयः । अभीशवः । दीधितयः । गभस्तयः । वनम् । उस्राः" (१. ५.) इति निघण्टुः ।

२ "स्वसराणि । घ्रंसः । घर्मः । घृणः । दिनम्" (१. ९.) इति निघण्टुः ।

३ अत्र पूर्वमन्त्रे च देवासः, अप्तुरः, इत्यादिपदानामामन्त्रितनिघाताभावेन सम्बोधनासम्भवात् आगन्त आगच्छन्तु, जुषन्त जुषन्तु इति लकारव्यत्ययेन सायणः व्याचख्यौ । वस्तुतस्तु विश्वे देवास आगत इत्युपक्रमात् सम्बोधनान्तत्वं युक्तम् । नच स्वरविरोधः । लकारव्यत्यये प्रायपाठविरोधात् । पाठव्यत्ययात् स्वरव्यत्ययो हि वरम् । तस्मात् यथापाठमेवार्थः करणीयः । विद्यमानमामन्त्रितत्वमविवक्षित्वा च स्वरः प्रवर्तते । "व्यत्ययो बहुलम्" इति स्मरणात् ।

४ "यथेष्टं निश्चितज्ञानाः" इति क्वचित् । "माया । वयुनम् । अभिख्या" (३. ९.) इति प्रज्ञानामसु निघण्टुः । इ इतीच्छनुसारि, हीति निश्चितम् ।

५ "यज्ञः । वेनः । अध्वरः । मेधः" (३. १७.) इति निघण्टुः ।

६ "पावका" इति प्र. पाठः ।

७ "गुणत्वेन" इति मुद्रितपाठः प्रामादिकः ।

८ "ततत्वाद् वा" इति प्र. पाठः ।

९ "भगवांस्तु" इति प्र. पाठः ।

अथैनो वाजिनामीशो वाजिनीः सूर्य[1] उच्यते । वाजीनश्छन्दसां[2] वाऽपि स्वामी प्रोक्तः स वाजिनी ॥ १५३ ॥ छन्दांस्यश्वा[3] यतस्तस्य ते चेना अन्यवाजिनाम्[4] । अन्नवत्त्वाद् वाजिनी वाग् ज्ञानयुद्धत्वतोऽपि वा[5] ॥ १५४ ॥ स पुत्रो वागुमा तस्याः पुत्री तद् वाजिनीवती । सरस्वती हरिर्वाऽपि यज्ञं वहतु[6] नोऽशनैः ॥ १५५ ॥ अन्नदा हि सदा देवी धिया सह वसेद् यतः । धिया-वसुर्नित्यबोधा ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[7]]

(२९) चोदयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् । यज्ञन्दधेसरस्वती ॥ ११ ॥

[चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् ॥
यज्ञम् । दधे । सरस्वती ॥ ११ ॥]

सुवाचां प्रेरका सदा ॥ १५६ ॥ सुबुद्धिज्ञापिका सैव स्वातन्त्र्याल्लुप्तयो भवेत् । अनेनैव प्रकारेण सैव यज्ञादिधारणी[8] ॥ १५७ ॥ * ॥

(३०) महोअर्णस्सरस्वतीप्रचेतयतिकेतुना । धियोविश्वाविराजति ॥ १२ ॥ [॥ ६ ॥]

[महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना ॥
धियः । विश्वाः । वि । राजति ॥ १२ ॥ ६ ॥]

[इति तृतीयं सूक्तम्]

महो अर्णः परं ब्रह्म तेजस्त्वाच्च महत्त्वतः । [9]अरमानन्दरूपत्वाण्णो हि निर्वृतिवाचकः । तज्ज्ञा-

---

१ "वाजिनी सूर्यः" इति प्र. पाठः ।

२ "वाजीनश्छन्दसाम्" इति क्वचित् पठ्यते ।

३ तथाहि श्रुतिः–"एकोऽश्वो वहति सप्तनामा" इति । "सप्तच्छन्दोनामा" इति तत्त्वदीपिकायाम् ।

४ "अन्यवाचिनाम्" इति यत् क्वचित् कोशेषु दृश्यते तदौचित्यं चिन्त्यम् ।

५ "अन्धः । वाजः" (२.७.) इत्यन्ननामसु, "सम्प्रीके । खले । खजे । पौंस्ये । महाधने । वाजे" (२.१७.) इति सङ्ग्रामनामसु च वाजशब्दः पठ्यते निघण्टुषु ।

६ "यज्ञं वष्टुर्विति यदाह यज्ञं वहत्वित्येव तदाह" इति हि श्रुतिः ।

७ अत्र नामि पूर्वस्वरदैर्घ्यविधानात्, मतिशब्दान्तगस्य इकारस्य नामि विहितेन इकारेण य एकाक्षरीभावस्तस्य व्यूहे 'सुमति इनाम्' इत्यष्टाक्षरपूर्तौ केवलगायत्रीत्वं च भवति ।

८ "धारिणी" इति प्र. पाठः ।

९ "परमानन्द—" इति क्वचित् ।

**पयति सा देवी ज्ञानं[1] दत्त्वा महत्तरम् ॥ १५८ ॥ महो अर्णः स्वयं देवः स्वमात्मानं प्रकाशयेत् । विराजयति विश्वाश्च धियः सुज्ञानदानतः[2] ॥ १५९ ॥ * ॥ * ॥**

**सूक्तं त्वानरतं प्रोक्तमनुवागेककालिका । अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम् । वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायणः ॥ १६० ॥ "ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः[5] । यजूंषि निगदांश्चैव तथा सामानि सामतः" ॥ १६१ ॥ एवं पुराणवचनादुद्धृता हि ततस्ततः । ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः ॥ १६२ ॥ मानःस्तेनेतिपूर्वासु ह्यूनता दृश्यतेऽर्थतः । शुनश्शेपोदिताभ्यश्च पठ्यन्तेऽन्यत्र काश्चन[3] । अत्राप्यक्रमतो दृष्टिरिति नैकक्रमो भवेत् ॥ १६३ ॥ अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः । सङ्क्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया ॥ १६४ ॥ [4]अष्टकाध्यायवर्गादिभेदं च कृतवान् स्वयम्[4] । स्वध्यायविश्रमार्थाय तस्मात् क्रमविपर्ययः ॥ १६५ ॥ तत्रतत्रैवान्तरिता दृश्यन्ते च खिला अपि । यत्रार्थे न विशेषोऽस्ति पदान्तरितताऽत्र च । यत्राल्पोऽपि विशेषोऽस्ति पदं नान्तरितं भवेत् ॥ १६६ ॥ * ॥**

[इति प्रथमोऽनुवाकः]

---

१ "केतुः । केतः । चितिः । चित्तम्" (३.९.) इति निघण्टौ प्रज्ञापर्यायाः ।

२ "सुज्ञानदा यतः" इति क्वचित् । "सुज्ञानदोहतः" इति च ।

३ प्रथममण्डले षष्ठोऽनुवाकः, चतुर्विंशादा त्रिंशं सूक्तानि, "कस्य नूनम्—" इत्यादि "अस्मे रयिं नि धारय" इति यावत् न्यूनं शतं मन्त्राः (२५४–३५०) शुनश्शेपदृष्टाः पठ्यन्ते । शतं च मन्त्रास्तद्दृष्टाः । तत्र त्रय इत उद्धृत्य अन्यत्र पठिता इति सङ्ख्यापूर्तिः । तद्यथा अत्रापठितेषु त्रिषु मन्त्रेषु "त्वं नो अग्ने–", इति, "स त्वं नो अग्ने—" इति च द्वौ मन्त्रौ चतुर्थमण्डले प्रथमसूक्ते चतुर्थपञ्चममन्त्रतया पठ्येते । वामदेवदृष्टतया च । "शुनश्चिच्छेपम्—" इति तृतीयो मन्त्रः पञ्चममण्डले द्वितीयसूक्ते सप्तममन्त्रतया पठ्यते । ऋषिश्च तत्राऽत्रेयः । एवञ्च शतचं भवति दर्शनम् ।

४ अष्टकः, अध्यायः, वर्गः इत्येको विभागः । मण्डलम्, अनुवाकः, सूक्तानि इत्यपरः । अष्टावष्टावध्याया अष्टक इत्युच्यते । एवमाहत्याष्टावष्टकाः । प्रत्यध्यायं वर्गो भिद्यते ! तद्यथा प्रथमाध्याये सप्तत्रिंशद् वर्गाः । द्वितीयाध्याये अष्टत्रिंशत् । तृतीयेऽध्याये पञ्चत्रिंशत् । एवमाहत्य समग्रायां शाकलसंहितायां षडुत्तरे द्वे सहस्रे वर्गाः । तदुक्तम्—"तदध्यायाश्चतुःषष्टिर्मण्डलानि च वै दश । वर्गाणां परिसङ्ख्यातं द्वे सहस्रे षडुत्तरे" इति । प्रथममण्डले चतुर्विंशतिरनुवाकाः । १९१ सूक्तानि । द्वितीये चत्वारोऽनुवाकाः । ४३ सूक्तानि । आहत्य च दशसु मण्डलेषु १०१७ सूक्तानि । १०४७२ मन्त्राः खिलवर्जमित्यवगन्तव्यम् । सहस्रमेकं सूक्तानीति तु सामान्यवचनमिति न विरोधः । "ऋचां दश सहस्राणि ऋचां पञ्चशतानि च" इत्यपि स्थूलं परिगणनमेव । तथा पदविभागोऽपि क्वचित् पठ्यते- "शाकल्यदृष्टे पदलक्षमेकं सार्द्धं च वेदे त्रिसहस्रयुक्तम् । शतानि चाष्टौ दशकद्वयं च पदानि षट् चेति हि चर्चितानि" (१,५३,८२६) इति । एवं ३,९४,२२१ अक्षराणीत्याहुः । किन्तु "चत्वारि वाव शतसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि" (४,३२,०००) इत्यक्षरसङ्ख्यानं स्मर्यते ।

५ "कृतवान् प्रभुः" इति प्र. पाठः ।

—४—

[सुरूपकृत्नुं दश, मधुच्छन्दाः, गायत्री, इन्द्रः, षड्जः ।]

(३१) सुरूपकृत्नुमूतयेसुदुघामिवगोदुहे । जुहूमसिद्यविद्यवि ॥ १ ॥

[सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे ॥
जुहूमसि । द्यविऽद्यवि ॥ १ ॥]

विष्णुं [1]सुरूपकर्तारमभिप्रेतार्थसिद्धये । त्राणाय[2] वा कामधेनुमिव दोहाय तत्स्थितेः ॥ १६७ ॥ दिनेदिने[3] स्वाह्वयामः ॥ * ॥

(३२) उपनस्सवनागहिसोमस्यसोमपाःपिब । गोदाइद्रेवतोमदः ॥ २ ॥

[उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब ॥
गोऽदाः । इत् । रेवतः । मदः ॥ २ ॥]

ज्ञानदोऽस्यैव चाधिकम् । ज्ञानाख्यरयियुक्तस्य हिरण्यादिमतोऽपि वा ॥ १६८ ॥ सुखकारी भवान् ॥ * ॥

[विराड्गायत्री[4]]

(३३) अथातेअन्तमानांविद्यामसुमतीनाम् । मानोअतिख्यआगहि ॥ ३ ॥

[अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् ॥
मा । नः । अति । ख्यः । आ । गहि ॥ ३ ॥]

---

१ "स्वरूपकर्तारम्" इति क्वचित् ।

२ ऊतय इत्यस्यार्थद्वयम् । "अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ । प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे । स्वाम्यर्थेऽवगमे कामे कृतौ" इति कविकल्पद्रुमः । अव रक्षे, त्राणाय । अव प्राप्तौ, अभिप्रेतार्थसिद्धये ।

३ "दिनम् । दिवा । दिवेदिवे । द्यविद्यवि" (१. ९.) इत्यहर्नामसु निघण्टुः ।

४ प्रथमद्वितीयपादयोः सप्ताक्षरत्वाद् विराड्गायत्रीत्वम् । "अन्तमअनाम्", "सुमतिइनाम्" इति नामि एकाक्षरीभावव्यूहेन केवलगायत्रीत्वम् ।

तस्माल्लमेम[1] सुमतीस्तव । अन्ते मितास्त्वद्विषया मतयो ह्युत्तमोत्तमाः[2] । अस्मानतीत्य मा पश्य[3] करुणार्द्रदृशा सदा ॥ १६९ ॥ * ॥

(३४) परेहिविग्रमस्तृतमिन्द्रम्पृच्छाविपश्चितम् । यस्तेसखिभ्यआवरम् ॥ ४ ॥

[परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ॥
यः । ते । सखिऽभ्यः । आ । वरम् ॥ ४ ॥]

मन्मनो वाऽथ शक्रो वा दूरेऽपि परमेश्वरम् । गच्छाग्राह्यमनष्टं च ध्यातचित्तं[4] य एव च । सखिभ्य उत्तमो नित्यम्[5] ॥ * ॥

(३५) उतब्रुवन्तुनोनिदोनिरन्यतश्चिदारत । दधानाइन्द्रइद्दुवः ॥ ५ ॥ [॥ ७ ॥]

[उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत ॥
दधानाः । इन्द्रे । इत् । दुवः ॥ ५ ॥ ७ ॥]

[6]निदस्तस्य समीपगाः ॥ १७० ॥ तेऽपि ब्रुवन्तु नो देवं प्राप्नुर्ये चान्यतोऽपि तम् ।

---

१ यद्यपि "विन्दते विन्दतीत्येवं लाभे" (१११) इति दैववचनात् लाभार्थे विन्देमेति भाव्यम् । अथापि व्यत्ययाद् भवतीति वक्तव्यम् । "लभेमहि व्यत्ययात्" इति टीका ।

२ निघण्टौ "आके । उपाके । अर्वाके । अन्तमानाम्" (२. १६.) इत्यन्तिकनामसु पठ्यते । अन्तमा अत्युत्तमा इत्याचार्याः । अर्थाधिक्यं तु भवति । "उत्तमोत्तमात्" इति क्वचित् पाठः । तदा उत्तमोत्तमत्वादिति भावप्रधानो निर्देशः ।

३ चक्षिङ ख्यादेश इति पाणिनीयाः । अत्र तु ख्याधातुरेव चक्षिङर्थः ।

४ निघण्टुस्तु विग्रविपश्चिच्छब्दौ मेधाविनामसु पठति— "विग्रः । गृत्सः । धीरः । वेनः । वेधाः । कण्वः । ऋभुः । नवेदाः । कविः । मनीषी । मन्धाता । विधाता । विपः । मनश्चित् । विपश्चित्' (३.१५.) इति । विग्रः अग्राह्यः, विपश्चित् सर्वज्ञः, इत्याचार्याः । अपुनरुक्तं चैवं भवति । अर्थाधिक्यं च भवति । विग्रमिन्द्रं इहि तदर्थं विपश्चितं पृच्छेति व्यधिकरणेनान्वयेऽपि नार्थविशेषलाभः ।

५ यः वरमभिलषितं प्रयच्छतीत्यध्याहारेण सायणो व्याचख्यौ । यद्यपि उपसर्गः धात्वर्थमाक्षिपतीति वैदिकं मतम् । तथाप्यत्राऽङः दानार्थाक्षेपासामर्थ्यात् प्रयच्छतीत्यनाक्षिप्तधात्वध्याहारः कथमिति चिन्त्यम् । अन्यत्र सावसरत्वात् । वरमिति तु सामान्ये नपुंसकं भवति ।

६ "निदो दवीय इति तु विरुद्धार्थद्वयाभिधौ । दूरसामीप्यवचनौ" इति द्वितीयाध्याये २५७ तमे मन्त्रे भाष्यम् । "णिद णेद कुत्सासन्निकर्षयोः" इति धातुपाठः । "निदो निन्दका इतः निरारत निर्गच्छत" इति तु दवीयो व्याख्यानम् । इन्द्रस्तुतिरूपे मन्त्रे निन्दकनिरासस्य नातीव हि सङ्गतिः । आरतेति लोडर्थे लकारव्यत्ययश्च कर्तव्यो भवति । महार्थलाभश्च तत्र परिहीयते ।

[1]निर्गत्याज्ञानतस्त्वस्माद् दधाना ईश एव च। [2]दुवः प्राणान् ब्रुवन्त्वेव तेऽपि नः परमेश्वरम् ॥ १७१ ॥ * ॥

(३६) उतनस्सुभगाँअरिर्वोचेयुर्दस्मकृष्टयः। स्यामेदिन्द्रस्यशर्मणि ॥ ६ ॥

[उत। नः। सुऽभगान्। अरिः। वोचेयुः। दस्म। कृष्टयः ॥
स्याम। इत्। इन्द्रस्य। शर्मणि ॥ ६ ॥]

अरयोऽपि प्रजा अस्मान् वोचेयुः सुभगान् सदा। शत्रुमेर्दिस्तवेन्द्रस्य स्यामैवानुग्रहे सुखे ॥ १७२ ॥ * ॥

(३७) एमाशुमाशवेभरयज्ञश्रियंनृमादनम्। पतयन्मन्दयत्सखम् ॥ ७ ॥

[आ। ईम्। आशुम्। आशवे। भर। यज्ञऽश्रियम्। नृऽमादनम् ॥
पतयत्। मन्दयत्ऽसखम् ॥ ७ ॥]

[3]आशुवीर्य तवैवाऽशुं सोमं क्षिप्रं मनोऽपिवा। आभर स्वोदरे तुष्ट्या हृदि वा यज्ञभूषणम् ॥ १७३ ॥
ईमेव पुम्मदकरं मदादुत्पतनादिके। हेतुं मन्दत्वहेतुं च तत्सखीनां पुरोगतेः ॥ १७४ ॥ * ॥

(३८) अस्यपीत्वाशतक्रतोघनोवृत्राणामभवः। प्रावोवाजेषुवाजिनम् ॥ ८ ॥

[अस्य। पीत्वा। शतक्रतोइतिशतऽक्रतो। घनः। वृत्राणाम्। अभवः ॥
प्र। आवः। वाजेषु। वाजिनम् ॥ ८ ॥]

---

१ निरित्येतत् निर्गत्येति व्याख्यातम्। उपसर्गाणां धातूपस्थापकत्वात्। तथाहि स्कन्दस्वामी वेदभाष्ये—"उपसर्गो धात्वर्थानुवादी। उपसर्गश्रुतेर्वा योग्यक्रियाध्याहारः" इति।

२ निघण्टौ दुवस्यतीति परिचरणकर्मा पठ्यते। अर्थान्तरं चोच्यतेऽर्थविशेषलाभाय दुवः प्राणान् इति। उपरिष्टाच्च निर्वक्ष्यत्याचार्यः "कामदोहाद् दुवः स्मृताः" इति चतुर्दशसूक्ते प्रथममन्त्रे।

३ आशवे आशुवीर्य इति व्याख्याने यद्यपि "आमन्त्रितस्य" इत्याष्टमिकेन निघातः प्रसज्यते। आमन्त्रितत्वमविवक्षित्वा स्वरः प्रवृत्त इति तु वक्तव्यम्। तद्यथा पूर्वं "विश्वे देवासो अप्तुरः" इति। दृश्यते हि बहुलं स्वरप्रक्रियाविरोधः स्फुटो वेदेषु। वार्तिककृदप्याह— "व्यत्ययो बहुलं यतः" इति। सञ्ज्ञापूर्वकत्वादयं विधिरनित्य इति च वदन्ति। प्रकारान्तरं च सम्भाव्यते। बहुधा हि ऋषयः स्वरप्रक्रियां प्रणिन्युः।

एनं पीत्वा बहुज्ञानाभूत्तमोभिरनावृतः। प्रसादादेव भक्तेषु[1] तमोसह्यतमा घनः ॥ १७५॥ आवृतेरेव वृत्राणि ह्यज्ञानान्यन्नदं नरम्। प्रावो युद्धेषु योद्धारं भक्तं ज्ञानिनमेव वा[2] ॥ १७६ ॥ * ॥

(३९) तन्त्वावाजेषुवाजिनंवाजयामश्शतक्रतो। धनानामिन्द्रसातये ॥ ९ ॥

[तम्। त्वा। वाजेषु। वाजिनम्। वाजयामः। शतक्रतोइतिशतऽक्रतो ॥
धनानाम्। इन्द्र। सातये ॥ ९ ॥ ॥]

योधयामो वयं तं त्वां ज्ञानादिधनलब्धये। अज्ञानाद्यस्मदरिभिः ॥ * ॥

[निचृद्गायत्री[3]]

(४०) योरायो३वनिर्महान्त्सुपारस्सुन्वतस्सखा। तस्माइन्द्रायगायत ॥ १० ॥ [॥ ८ ॥]

[यः। रायः। अवनिः। महान्। सुऽपारः। सुन्वतः। सखा ॥
तस्मै। इन्द्राय। गायत ॥ १० ॥ ८ ॥]

[इति चतुर्थं सूक्तम्]

योऽशेषद्रविणावनिः[4]। सुखदः संसृतेः पारस्तस्मा इन्द्राय गायत ॥ १७७ ॥ कम्पोऽशेषग्रहे क्वापि लज्जायां वा पुरातने। पृथक्त्वेऽधृष्यतायां वा हरिणर्क्संहितोदितः[5] ॥ १७८ ॥ * ॥

—५—

[आत्वा दश, मधुच्छन्दाः, गायत्री, इन्द्रः।]

[विराड्गायत्री[6], षड्जः।]

(४१) आत्वेतानिषीदतेन्द्रमभिप्रगायत। सखायस्स्तोमवाहसः ॥ १ ॥

---

१ "मुक्तेषु" इति प्र. पाठः। २ "ज्ञानिनमेव च" इति प्र. पाठः।

३ अत्र कम्पे उदात्तेन ओकारेण अनुदात्तस्य अकारस्य एकाक्षरीभावात् "स्वरितो वाऽनुदात्ते पदादौ" इति पाणिनिस्मरणात्, "इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु च" इति प्रातिशाख्यवचनाच्च समाहारस्वरः। ततश्च अभिनिहतस्य व्यूहेऽष्टाक्षरत्वसिद्धया केवलगायत्रीत्वं च सेत्स्यति।

४ "-द्रविणावधिः" इति क्वचित्। ५ "हरिणा संहितोदितः" इति क्वचित्।

६ प्रथमद्वितीयपादयोः सप्ताक्षरत्वाद् विराट्त्वम्। "आतुवा" इति क्षैप्रसन्धिव्यूहेन शिथिलद्वित्वे प्रथमपादो-

[आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत ॥
सखायः । स्तोमऽवाहसः ॥ १ ॥]

॥ * ॥

[आर्च्युष्णिक्[१], ऋषभः स्वरः ।]

(४२) पुरूतमम्पुरूणामीशानंवार्याणाम् । इन्द्रंसोमेसचासुते ॥ २ ॥

---

ऽष्टाक्षरो भवति । तथा द्वितीयपादेऽपि "निषीदत इन्द्रम्" इत्यस्मिनिहतसन्धिव्यूहे सोऽप्यष्टाक्षरो भवति । तथा च कात्यायनमतेन केवलगायत्रीत्वम् ।

१ "ऋचां त्रिः" (२.८.) इति पिङ्गलसूत्रम् । "त्रिगुणा षट्सङ्ख्या ऋचां गायत्री भवति" इति हलायुधः । ततश्च "त्रींस्त्रीनृचाम्" (२.१०.) इत्युक्तम् । तथा च ऋचां गायत्रीतस्त्र्यक्षराधिक्ये ऋचामुष्णिक् भवति । एकविंशत्यक्षरा सेयमार्ची उष्णिक् । अत एव ऋषभः स्वरः । गायत्र्या हि षड्जः स्वरः । उष्णिह ऋषभः । तदप्युक्तम्– "स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादा गायत्र्यादिषु क्रमेण" इति ।

तदिमे छन्दसां प्रभेदा भवन्ति—

| छन्दः | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

कात्यायनमते तु गायत्र्येवेयमपि । प्रथमपादे पुरूणामिति नामि दीर्घस्य विश्लेषेणाष्टाक्षरत्वम् । द्वितीयपादे च 'वारियअणाम्' इति क्षैप्रसन्धेर्नामि दीर्घस्य च विश्लेषेणाष्टाक्षरत्वम् । तथा च भवत्यार्षी चतुर्विंशत्यक्षरा गायत्री । एतत्पक्षे षड्ज एव स्वरो भवति ।

['पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् ॥
इन्द्रम् । सोमे । सचा । सुते ॥ २ ॥]

सुपूर्णानां पूर्णतमं वरेण्यानामधीश्वरम् । सुते सोमे सुखेनैव सचा गायत तं प्रभुम् ॥ १७९ ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[२], स्वरः—३-१० षड्जः]

(४३) सघानोयोगआभुवत्सरायेसपुरन्ध्याम् । गमद्वाजेभिरासनः ॥ ३ ॥

[सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् ॥
गमत् । वाजेभिः । आ । सः । नः ॥ ३ ॥]

मुक्तौ योगायाऽ समन्ताद् भवेन्नो घोऽवधारणे । स एव भगवान् ज्ञानवित्ताय स च बुद्धिगः ॥ १८० ॥ बुद्धिः पुराश्रयत्वेन पुरन्धिः पत्न्यथापि वा । पत्न्यर्थत्वे तु तादर्थ्ये सोऽग्नैः सह न आव्रजेत् ॥ १८१ ॥ * ॥

(४४) यस्यसंस्थेनवृण्वतेहरीसमत्सुशत्रवः । तस्माइन्द्रायगायत ॥ ४ ॥

[यस्य । सम्ऽस्थे । न । वृण्वते । हरीइति । समत्ऽसु । शत्रवः ॥
तस्मै । इन्द्राय । गायत ॥ ४ ॥]

यस्य स्थितौ न वृणते हर्यग्रमपि शत्रवः । मनः पुरो वा विषयहरणान्मन एव च । बुद्धिश्च हरिशब्दोक्ते तमआदीनि शत्रवः ॥ १८२ ॥ * ॥

[५-७ निचृद्गायत्री[३]]

(४५) सुतपान्नेसुताइमेशुचयोयन्तिवीतये । सोमासोदध्याशिरः ॥ ५ ॥ [॥ ९ ॥]

---

१ 'पुरुतमम्' इति न तमप् । तथात्वे पित्त्वेन निघातप्राप्त्याऽऽद्युदात्ततया पदपाठविरोधात् । किन्तु? अतिशयार्थे तमस्यापि दर्शनान्न स्वरविरोध इति शक्यं वक्तुम् । "तरतमौ" इति प्रयोगात् । "स व्यासो वीति तमं स वै वि" इति चाग्नेयीशाखावचनं गीताभाष्ये स्थितम् । व्याकरणं च सापवादमेव प्रायः प्रवर्तते । तेन क्वचिदपवादेऽपि न विरोधो भवति । उक्तं हि यास्केन—"न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति" इति ।

२ अत्रापि "पुरन्धियाम्" इति क्षैप्रव्यूहेनाष्टाक्षरत्वात् केवलगायत्रीत्वमपि ।

३ अत्र तृतीयपादे 'दधियाशिरः' इति विश्लेषेण केवलगायत्रीत्वं च ।

[सुतऽपान्ने । सुताः । इमे । शुचयः । यन्ति । वीतये ॥
सोमासः । दधिऽआशिरः ॥ ५ ॥ ९ ॥]

सोमपे शुचयः सोमाः प्राप्त्यै दधिविमिश्रिताः । मनांसि ध्यानयुक्तानि चाऽयान्ति हरये सदा ॥ १८३ ॥ * ॥

(४६) [1]त्वंसुतस्यपीतयेसद्योवृद्धोअजायथाः । इन्द्रज्यैष्ठ्यायसुक्रतो ॥ ६ ॥

[त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः ॥
इन्द्र । ज्यैष्ठ्याय । सुक्रतोइतिसुऽक्रतो ॥ ६ ॥]

सदा पूर्णः[2] शुभज्ञान ज्यैष्ठ्यव्यक्त्यै सुतात्तये । न क्षुदादेरभिव्यक्तोऽभवः ॥ * ॥

(४७) [3]आत्वाविशन्त्वाशवस्सोमासइन्द्रगिर्वणः । शन्तेसन्तुप्रचेतसे ॥ ७ ॥

[आ । त्वा । विशन्तु । आशवः । सोमासः । इन्द्र । गिर्वणः ॥
शम् । ते । सन्तु । प्रऽचेतसे ॥ ७ ॥]

गीर्भिर्वृत प्रभो । प्रकृष्टचेतास्त्वद्भृत्यो योऽस्मै स्युः शङ्कराः सुताः ॥ १८४ ॥ * ॥

[पादनिचृद्गायत्री[4]]

(४८) त्वांस्तोमाअवीवृधन्त्वामुक्थाशतक्रतो । त्वांवर्द्धन्तुनोगिरः ॥ ८ ॥

[त्वाम् । स्तोमाः । अवीवृधन् । त्वाम् । उक्था । शतक्रतोइतिशतऽक्रतो ॥
त्वाम् । वर्द्धन्तु । नः । गिरः ॥ ८ ॥]

---

१ "तुवम्" इति विश्लेषेणाष्टाक्षरत्वे केवलगायत्रीत्वं च । अन्यथा निचृद्गायत्री ।

२ "सदा पूर्ण शुभज्ञान" इति क्वचित् ।

३ "आतुवा" इति विश्लेषे केवलगायत्रीत्वम् । प्रश्लेषे निचृद्गायत्रीत्वम् ।

४ प्रतिपादं सप्ताक्षरत्वादियं पादनिचृदित्युच्यते गायत्री । कात्यायनमतेन तु 'तुवाम्' इति प्रतिपादं क्षैप्रव्यूहेनाष्टाक्षरत्वमेवेति केवलगायत्रीत्वम् ।

[1]व्यञ्जयन्त्यधिकं स्तोमा साम्न्युक्थान्यृक्षु चैव हि । महागुणैर्व्यञ्जयन्तु गिरोऽस्माकमपि प्रभो ॥ १८५ ॥ आकाशवृद्धिवद् वृद्धिर्विष्णौ स्यान्नैव चान्यथा । "न वर्द्धते नो कनीयान्" इति ह्येनं श्रुतिर्जगौ ॥ १८६ ॥ महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् । यद्यन्यापेक्षया वृद्धिरीशत्वं[2] स्यात् कुतोऽस्य च । अक्षितोतिरिति ह्यस्मात् पूर्णाभिप्रायतोदिता ॥ १८७ ॥ * ॥

[निचृद्गायत्री][3]

(४९) अक्षितोतिस्सनेदिमंवाजमिन्द्रस्सहस्रिणम् । यस्मिन्विश्वानिपौंस्या ॥ ९ ॥

[अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् ॥
यस्मिन् । विश्वानि । पौंस्या ॥ ९ ॥]

अनन्तफलदं वाजमसक्तो लभतां[4] स च । ददातु वा पौरुषाणि शक्तयो यत्र चाखिलाः ॥ १८८ ॥ अतश्चानन्तशक्तित्वान्न वृद्ध्याद्याः कथञ्चन । सर्वोपेतेत्येतमर्थमभिप्रेत्याऽह वेदराट् ॥ १८९ ॥ * ॥

(५०) मानोमर्ताअभिद्रुहन्तनूनामिन्द्रगिर्वणः । ईशानोयवयावधम् ॥ १० ॥ [॥ १० ॥]

[मा । नः । मर्त्ताः । अभि । द्रुहन् । तनूनाम् । इन्द्र । गिर्वणः ॥
ईशानः । यवय । वधम् ॥ १० ॥ १० ॥]

[इति पञ्चमं सूक्तम्]

मा मर्ता नस्तनूनां तु द्रोग्धारः स्युः कथञ्चन । ईशोऽस्यपाकुरु वधं तेन नो मुक्तिदानतः ॥ १९० ॥ मनुष्येभ्यस्तनूनां च नैव नः स्युर्विपत्तयः । कालेन दैवतः प्राप्ते स्याददेहत्वतो वधः ॥ १९१ ॥ * ॥ * ॥

---

१ "व्यञ्जयन्त्वधिकम्" इति क्वचित् ।

२ "वृद्धिरीशित्वम्" इति क्वचित् ।

३ तृतीयचरणे सप्ताक्षरेति निचृत् । "पौंसिया" इति क्षैप्रव्यूहे केवलगायत्री ।

४ "षन् सम्भक्तौ" इति वोपदेवः । तेन सनेत् सम्भजेत् । लभतामिति फलितम् ।

— ६ —

[युञ्जन्ति दश, मधुच्छन्दाः, गायत्री, १–२ मरुतः[1] (ब्रह्मादयो देवाः), षड्जः ।]

(५१) युञ्जन्तिंब्रध्नमंरुषञ्चरंन्तम्परितस्थुषंः । रोचंन्तेरोचनादिवि ॥ १ ॥

[युञ्जन्तिं । ब्रध्नम् । अरुषम् । चरंन्तम् । परिं । तस्थुषंः ॥
रोचंन्ते । रोचना । दिवि ॥ १ ॥]

**पौंस्यानि वासुदेवस्य ब्रध्नं वृद्धं दिवाकरम् । अरुणं चरन्तं परितो गिरीन् युञ्जन्ति सर्वदा ॥ १९२ ॥**
**तैरेवान्यानि चन्द्रादिरोचनानि त्रिविष्टपे । रोचयन्ति ॥ * ॥**

[विराड्गायत्री[2]]

(५२) युञ्जन्त्यस्यकाम्याहरीविपंक्षसारथे । शोणांधृष्णूनृवाहंसा ॥ २ ॥

---

१ अत्रानुक्रमणिकारीत्या "युञ्जन्ति ब्रध्नम्—", "युञ्जन्त्यस्य", "केतुं कृण्वन्" इति प्रथमस्तृच इन्द्रदैवत्यः । "आदह–" इत्यस्या मरुतः । "वीळु चित्" इति पञ्चम्या इन्द्रश्च । "देवयन्तः–"इत्यस्यां पुनर्मरुतः । "इन्द्रेण–" इति सप्तम्याः पुनरिन्द्रो मरुतश्च । अष्टमी नवमी च केवलमारुती, दशमी तु केवलमैन्द्री । तथाहि कात्यायनः–"युञ्जन्ति, आदहेत्येताः षण्मारुत्यः, वीळुचित्, इन्द्रेणेत्यैन्द्रयौ च" इति । अत्रानाख्यातदेवतानामृचामिन्द्रो देवतेति च परिभाषा । तदेतदसङ्गतमिति वक्ष्यन् देवताक्रममन्यथैव विवक्षति भगवानाचार्यः । तथाच तदनुसारेण प्रथमा द्वितीया च मारुती । तृतीया मारुती चैन्द्री च । चतुर्थ्यां मरुत इति न विप्रतिपत्तिः । पञ्चम्या इन्द्रो मरुतश्चेति च समानम् । षष्ठीत आदशमि इन्द्र एव देवतेति । प्रथममन्त्रस्य तावद् ब्रह्मादिदेवताकत्वं तैत्तिरीयब्राह्मणे एतन्मन्त्रव्याख्याने स्पष्टम्— युञ्जन्ति ब्रध्नमित्याह । असौ वा आदित्यो ब्रध्नः । आदित्यमेवास्मै युनक्ति । अरुषमित्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । चरंन्तमित्याह । वायुर्वै चरन् । वायुमेवास्मै युनक्ति । परितस्थुष इत्याह । इमे वै लोकाः परितस्थुषः । इमानेवास्मै लोकान् युनक्ति । रोचंन्ते रोचना दिवीत्याह । नक्षत्राणि वै रोचना दिवि । नक्षत्राण्येवास्मै रोचयति" (३. ९. ४.) इति । आदित्याग्निवाय्वादीन् मरुतः देवाः स्वस्वकर्मसु योजयन्तीति हि निष्कर्षः । "भीषाऽस्माद् वातः पवते" इत्यादि च श्रूयते । अत एवं पौंस्यानि वासुदेवस्येत्युक्तम् । एतेनेदं ज्ञायते यदरुषं चरन्तमित्याद्यादित्यविशेषणतया भाष्ये व्याख्यातम्, तदुपलक्षणम्, प्रत्येकमप्यग्न्यादिपरता संभवतीति । अत एवं "सूर्यादीन् स्थापयन्ति च" इति वक्ष्यति । 'परितस्थुषः लोकत्रयवर्तिनः प्राणिनः आदित्यादिरूपेणावस्थितमिन्द्रं स्वकर्मणि युञ्जन्ति" इति व्याख्यान् सायणो वेदपरम्परां दूरत एव विजहौ । नहीन्द्र एव सूर्यादिर्भवति । नापि लोकस्तं नियुङ्क्ते । वैपरीत्यं हि नियोज्यस्य च नियोजकस्य च गदितं भवतीति द्विष्ठं दर्शनम् ।

२ "युञ्जन्ति अस्य कामिया" इति विश्लेषेणाष्टाक्षरत्वं केवलगायत्रीत्वं च ।

[युञ्जन्ति । अस्य । काम्या । हरीइति । विऽपक्षसा । रथे ॥
शोणा । धृष्णूइति । नृऽवाहसा ॥ २ ॥]

हरी चास्य मनोबुद्धी स्वशक्तयः । युञ्जन्त्यधिगुणत्वेन काम्यावश्वावथापि वा ॥ १९३ ॥ विशिष्ट-पक्षसंयुक्ताविव क्षिप्रतरौ सदा । रथे देहेऽपिवा देवाः स्वमनो बुद्धिमेव च ॥ १९४ ॥ अस्य देहे प्रयुञ्जन्ति सूर्यादीन् स्थापयन्ति च । सूर्यादिस्थापकत्वं च ब्रह्मादीनां भवेत् सदा ॥ १९५ ॥ शोणौ च शमणौ प्रोक्तौ सुखप्राप्तौ यतः सदा । श्यामौ मूर्द्धनि शोणौ च शक्राश्वावग्रगौ स्मृतौ । दृष्टौ नॄन् प्रति तं चेशं[1] वहन्तौ तावुभावपि ॥ १९६ ॥ * ॥

[इन्द्रो मरुतश्च देवताः]

(५३) केतुङ्कृण्वन्नकेतवेपेशोमर्याअपेशसे । समुषद्भिरजायथाः ॥ ३ ॥

[केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे ॥
सम् । उषत्ऽभिः । अजायथाः ॥ ३ ॥]

अज्ञाय कुर्वन् सज्ज्ञानं हेमाहेमाय[2] चेश्वरः । उषद्भिः सम्प्रकाशद्भिः शक्तिभिर्व्यक्ततामगाः ॥ १९७ ॥ मर्या मरणवन्तोऽपि देवा एवम्[3] ॥ * ॥

[निचृद्गायत्री,[4] मरुतः (ब्रह्मादयो देवाः)]

(५४) आदहस्वधामनुपुनर्गर्भत्वमेरिरे । दधानानामयज्ञियम् ॥ ४ ॥

[आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे ॥
दधानाः । नाम । यज्ञियम् ॥ ४ ॥]

---

१ ''तं वेशम्'' इति प्र. पाठः ।

२ न विद्यते हेमं यस्य सः । अहेमः । ननु हिधातोः मनिनि नान्तत्वेन भाव्यम् । तत् कथं हेमं अहेमायेत्यादि? नात्र मनिन् । किन्तु मन् । तद्यथा हुधातोर्होम इति भवति तथा हिधातोर्हेममिति भवति । यथाच यक्ष्ममित्यकारान्तं क्वचित् प्रयुज्यते ।

३ ''देवा एव'' इति क्वचित् । देवा अपि न मुख्यतोऽमर्त्याः । तेषामपि जन्ममरणानपायात् ।

४ अत्र प्रथमपादे ''सुवधामनु'' इति विश्लेषेण केवलगायत्रीत्वं च ।

हरेर्वशात् । तदैव सुखमन्वेव पुनर्गूढत्वमापिरे ॥ १९८ ॥ स्वेच्छयैव परेशस्य[1] शक्तयो देवता अपि । यज्ञे वाच्यं दधानाश्च नाम ॥ * ॥

[इन्द्रो मरुतश्च देवताः]

(५५) वीळुचिदारुजत्नुभिर्गुहाचिदिन्द्रवह्निभिः । अविन्दउस्रियाअनु ॥ ५ ॥ [॥ ११ ॥]

[वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र । वह्निऽभिः ॥
अविन्दः । उस्रियाः । अनु ॥ ५ ॥ ११ ॥]

वीळु दृढं ह्यपि ॥ १९९ ॥ आरुजद्भिः स्वसामर्थ्यैर्गुहायां संस्थितोऽपि सन् । वहद्भिरखिलं लोकं प्रकाशत्वानि लब्धवान् । देवैर्वैताट्दशैः[2] साकमानुकूल्येन लब्धवान् ॥ २०० ॥ * ॥

[६–१० इन्द्रो देवता]

(५६) देवयन्तोयथामतिमच्छाविदद्वसुङ्गिरः । महामनूषतश्रुतम् ॥ ६ ॥

[देवऽयन्तः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् । गिरः ॥
महाम् । अनूषत । श्रुतम् ॥ ६ ॥]

सम्यक् प्रद्योतयन्तोऽमुं मतिरूपं यथास्थितम् । विदद्भित्तं महान्तं च विश्रुत सुगिरोऽस्तुवन् ॥ २०१ ॥ * ॥

(५७) इन्द्रेणसंहिदृक्षसेसञ्जग्मानोअबिभ्युषा । मन्दूसमानवर्चसा ॥ ७ ॥

[इन्द्रेण । सम् । हि । दृक्षसे । सम्ऽजग्मानः । अबिभ्युषा ॥
मन्दूइति । समानऽवर्चसा ॥ ७ ॥]

तस्य सन्दर्शनार्थैव सङ्गतस्तेन[3] शङ्करः । मखात्मा पुरुहूतो वा श्रीभूमी च सुखात्मके[4] ॥ २०२ ॥ * ॥

---

१ "रमेशस्य" इति क्वचित् ।
२ "देवैर्वा ताट्दशैः" इति क्वचित् ।
३ "सङ्गतस्तस्य" इति क्वचित् ।
४ "सुखात्मिके" इति प्र. पाठः ।

[निचृद्गायत्री[1]]

(५८) अनवद्यैरभिद्युभिर्मखस्सहस्वदर्चति । गणैरिन्द्रस्यकाम्यैः ॥ ८ ॥

[अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति ॥
गणैः । इन्द्रस्य । काम्यैः ॥ ८ ॥]

अनवद्यैर्महाज्ञानैः प्रियैर्देवगणैः सह । वायुना च सहार्चन्ति सुधीत्वात् परमेश्वरम् ॥ २०३ ॥ * ॥

(५९) अतःपरिज्मन्नागहिदिवोवारोचनादधि । समस्मिन्नृञ्जतेगिरः ॥ ९ ॥

[अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि ॥
सम् । अस्मिन् । ऋञ्जते । गिरः ॥ ९ ॥]

अतो हेतोरिहाऽयाहि दिवो वा सूर्यमण्डलात् । परिज्मन्[2] सर्वगास्माकमधिकृत्य समर्हणाम्[3] । अस्मिन् गिरः प्राप्नुवन्ति[4] सम्यक् परममुख्यतः ॥ २०४ ॥ * ॥ युञ्जन्तीत्यत्र बाहुल्याद् देवयन्तोऽत इत्यपि । बाहुल्याद्दृष्टितो[5] गीर्भिर्विनाऽर्थो नान्य इष्यते ॥ २०५ ॥ * ॥

(६०) इतोवासातिमीमहेदिवोवापार्थिवादधि । इन्द्रम्महोवारजसः ॥ १० ॥[॥ १२ ॥]

[इतः । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि ॥
इन्द्रम् । महः । वा । रजसः ॥ १० ॥ १२ ॥]

[इति षष्ठं सूक्तम्]

---

१ तृतीयपादे "कामियैः" इति व्यूहे केवलगायत्रीत्वम् ।

२ "गौः । ग्मा । ज्मा । क्ष्मा" । (१. १.) इति नैघण्टुकवचनात् परिज्मन् सर्वग । "परितो ज्मां यतश्चरेत् । परिज्माऽतः" इति हि भाष्ये वक्ष्यति । नव्यास्तु वैयाकरणाः परितो जायत इति वृत्तिमाश्रित्य "श्वन्, उक्षन्, पूषन्, प्लीहन्, क्लेदन्, स्नेहन्, मूर्द्धन्, मज्जन्, अर्यमन्, विश्वप्सन्, परिज्मन्" इत्युणादिसूत्रात् परिज्मन्निति निपातयन्ति ।

३ "समर्हणम्" इति प्र. पाठः ।

४ "प्राप्नुयुश्च" इति क्वचित् ।

५ "बाहुल्याद् दृष्टितः" इति क्वचित् ।

इतो दिवो वा पाताळात्[1] सातिं लाभस्वरूपिणम् । महतो रञ्जकाद् विष्णोर्लोकाद् वा तमधीमहे ॥ २०६ ॥ * ॥

—७—

[इन्द्रं दश, मधुच्छन्दाः, गायत्री, इन्द्रः, षड्जः ।]

(६१) इन्द्रमिद्गाथिनोबृहदिन्द्रमर्केभिरर्किणः । इन्द्रंवाणीरनूषत ॥ १ ॥

[इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः ॥
इन्द्रम् । वाणीः । अनूषत ॥ १ ॥]

तमेव गाथिनः साम्ना स्तुवन्त्यृग्भिश्च बह्वृचाः । बृहन्तमन्यवाणीभिरपि ॥ * ॥

[निचृद्गायत्री[2]]

(६२) इन्द्रइद्धर्योस्सचासम्मिश्लआवचोयुजा । इन्द्रोवज्रीहिरण्ययः ॥ २ ॥

[इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा ॥
इन्द्रः । वज्री । हिरण्ययः ॥ २ ॥]

हर्योर्विमिश्रितः ॥ २०७ ॥ रथेऽथवा मनोबुद्ध्योर्वाङ्मात्रेणैव योगिनोः । सचा सुखेन वज्री च ज्ञानानन्दो हि धातुतः[3] । हितश्च रमणीयश्च हिरण्यय इतीरितः ॥ २०८ ॥ * ॥

(६३) इन्द्रोदीर्घायचक्षसआसूर्यरोहयद्दिवि । विगोभिरद्रिमैरयत् ॥ ३ ॥

[इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि ॥
वि । गोभिः । अद्रिम् । ऐरयत् ॥ ३ ॥]

दीर्घकालं दर्शनाय सूर्यमारोहयद् दिवि । ज्ञानैरादरयोग्यं च प्राणात्मानं समैरयत् ॥ २०९ ॥ * ॥

---

१ "पातालात्" इति प्र. पाठः ।
२ "हरियोः सचा" इति विश्लेषेण केवलगायत्रीत्वं च ।
३ "वज् गतौ, रमु क्रीडे" इति वोपदेवः । वजनं वज्, रमणं रम् । तद्वान् वज्री ।

[निचृद्गायत्री[1]]

(६४) इन्द्रवाजेषुनोवसहस्रप्रधनेषुच । उग्रउग्राभिरूतिभिः ॥ ४ ॥

[इन्द्र । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च ॥

उग्रः । उग्राभिः । ऊतिऽभिः ॥ ४ ॥]

बहुभिर्युद्ध्यमानेषु युद्धेष्वपि सदाऽव नः । दुष्टोग्रैः सदभिप्रायैः ॥ * ॥

(६५) इन्द्रंवयंमहाधनइन्द्रमर्भेहवामहे । युजंवृत्रेषुवज्रिणम् ॥ ५ ॥ [॥ १३ ॥]

[इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे ॥

युजम् । वृत्रेषु । वज्रिणम् ॥ ५ ॥ १३ ॥]

महदल्पधनार्थिनः[2] । हवामहेऽरिवर्ज्यं तं तमसां प्रतियोगिनम् ॥ २१० ॥ * ॥

(६६) सनोवृषन्नमुंचरुंसत्रादावन्नपावृधि । अस्मभ्यमप्रतिष्कुतः ॥ ६ ॥

[सः । नः । वृषन् । अमुम् । चरुम् । सत्राऽदावन् । अप । वृधि ॥

अस्मभ्यम् । अप्रतिऽस्कुतः ॥ ६ ॥]

अस्मदीयं चरुं भोज्यमानन्दं त्वमपावृणु[3] । मोक्षगं सर्वदातस्त्वमप्रतिद्वन्द्व[4] नो वृषन् ॥ २११ ॥ * ॥

(६७) तुञ्जेतुञ्जेयउत्तरेस्तोमाइन्द्रस्यवज्रिणः । नविन्धेअस्यसुष्टुतिम् ॥ ७ ॥

---

१ अत्र प्रथमचरणे "नोअव" इत्यभिनिहतस्य व्यूहेन केवलगायत्रीत्वं च ।

२ "–फलार्थिनः" इति क्वचित् ।

३ "तमपावृणु" इति प्र. पाठः ।

४ "स्कु भज् उद्वृत्तौ" इति वोपदेवः । उद्वृत्तिरिति परावृत्तिरेव । तेनाप्रतिष्कुतः अपरावृत्तः, अप्रतिद्वन्द्वः । यास्कस्तु "अप्रतिष्कृतोऽप्रतिस्खलितो वा" इत्याह । अप्रतिद्वन्द्व इत्येव सर्वथाऽपि फलितं भवति ।

[तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः ॥
न । विन्धे । अस्य । सुऽस्तुतिम् ॥ ७ ॥]

त्वयैव प्रेरणे जाते[1] तत्रतत्र य उत्तराः । तेऽपि स्तोमाः सुष्टुतित्वमस्याऽनल्याम्नचाऽप्नुयुः ॥ २१२ ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[2]]

(६८) वृषायूथेववंसगःकृष्टीरियर्त्योजसा । ईशानोअप्रतिष्कुतः ॥ ८ ॥

[वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा ॥
ईशानः । अप्रतिऽस्कुतः ॥ ८ ॥]

प्रतिवीरो वृषा वंसस्तद्धन्ता वंसगो[3] विभीः । यूथान्याकर्षति[4] यथा प्रजाः प्रेरयति प्रभुः । अल्पस्यापि प्रसिद्धयैव दृष्टान्तत्वं च[5] युज्यते ॥ २१३ ॥ * ॥

[पादनिचृद्गायत्री[6]]

(६९) यएकश्चर्षणीनांवसूनामिरज्यति । इन्द्रःपञ्चक्षितीनाम् ॥ ९ ॥

[यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति ॥
इन्द्रः । पञ्च । क्षितीनाम् ॥ ९ ॥]

---

१ "तुजि प्राणेऽवने" इति वोपदेवः । प्राणनं हि प्रेरणमेव । तदिदमुच्यते तुञ्जेतुञ्जे प्रेरणे जाते इति ।

२ मध्यमपादे सप्ताक्षरत्वात् पिपीलिकामध्या । "इयर्तियोजसा" इति क्षैप्रव्यूहे केवलगायत्रीत्वं च ।

३ अपूर्वमिदमाविष्करणम् । सायणस्तु वैदिकपरम्परासिद्धमर्थमजानन् "वननीयगतिः" इत्यर्थमभिधाय पृषोदरादित्वेन सर्वं सेत्स्यतीति मन्यते ।

४ निघण्टौ "इयर्ति । ईर्ते । ईङ्खते" (२. १४.) इति गतिकर्मसु पठ्यते । आकर्षतीति फलितोऽर्थः ।

५ "तु युज्यते" इति प्र. पाठः ।

६ प्रतिपादं सप्ताक्षरत्वात् पादनिचृत् । एकाक्षरीभावव्यूहेन केवलगायत्रीत्वं च । तथाहि "चर्षणिइनाम्" इति प्रथमपादे, "वसुउनाम्" इति द्वितीये, "क्षितिइनाम्" इति च तृतीये ।

[1]राजा भवति विस्तानां प्रजानां चैक एव यः । देवगन्धर्वदैतेयपितृमानुषभेदतः । प्रजानामपि [2]पञ्चानां सामान्याच्च विशेषतः ॥ २१४ ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[3]]

(७०) इन्द्रंवोविश्वतस्परिहवामहेजनेभ्यः । अस्माकमस्तुकेवलः ॥ १० ॥ [॥ १४ ॥]

[इन्द्रम् । वः । विश्वतः । परि । हवामहे । जनेभ्यः ॥
अस्माकम् । अस्तु । केवलः ॥ १० ॥ १४ ॥]

[इति सप्तमं सूक्तम्]

सम्यग्घवामहे सर्वगतं च व्यक्तरूपतः । स्थातुमेकत्र वोऽर्थाय जना नोऽस्तु स केवलः ॥
॥ २१५ ॥ * ॥ * ॥

[इति द्वितीयोऽनुवाकः]

---

—८—

[ऐन्द्र दश, मधुच्छन्दाः, गायत्री, इन्द्रः, षड्जः ।]

[निचृद्गायत्री[4]]

(७१) एन्द्रसानसिंरयिंसजित्वानंसदासहम् । वर्षिष्ठमूतयेभर ॥ १ ॥

[आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् ॥
वर्षिष्ठम् । ऊतये । भर । ॥ १ ॥]

जयिना सहितं लाभयुतं वित्तं सदाबलम् । वर्षिष्ठं सुमहद् रक्षानिमित्तं नित्यदा भर[5] ॥ २१६ ॥ * ॥

---

१ "इरज्यति । पत्यते । क्षयति । राजति" (२. २१.) इति निघण्टावैश्वर्यकर्माणि ।

२ पञ्च क्षितीनामिति पदपाठे भिन्ने पदे । प्रजानामपि पञ्चानामिति भाष्ये त्वैकपद्यमिव भाति । पञ्चेति षष्ठीस्थाने प्रथमेति तु युक्तं समाधानम् । ३ "जनेभियः" इति विश्लेषेण केवलगायत्रीत्वं च ।

४ अत्र "आइन्द्रसानसिम्" इति सन्धिव्यूहेनाष्टाक्षरत्वम् ।

५ आ इत्यस्यार्थः नित्यदा । "नित्यमाभर" इति क्वचित् । "–निमित्तं यत् तदाभर" इति च । आभर आहर । "हृग्रहोर्भश्छन्दसि" इति वार्तिकम् ।

[विराड्गायत्री[1]]

(७२) नियेनमुष्टिहत्ययानिवृत्राऋणधामहै । त्वोतासोन्यर्वता ॥ २ ॥

[नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै ॥
त्वाऽऊतासः । नि । अर्वता ॥ २ ॥]

येनारीन् मुष्टियुद्धेन तमांसि ज्ञानयुद्धतः । त्वत्प्रेरिता निरुन्धामः कांश्चिद् वा तुरगादिभिः ॥ आवृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यति[2] ॥ २१७ ॥ * ॥

(७३) इन्द्रत्वोतासआवयंवज्रंघनाददीमहि । जयेमसंयुधिस्पृधः ॥ ३ ॥

[इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना । ददीमहि ॥
जयेम । सम् । युधि । स्पृधः ॥ ३ ॥]

त्वत्प्रेरिता ज्ञानरतिं दृढत्वेनाऽददीमहि ॥ * ॥

(७४) वयंशूरेभिरस्तृभिरिन्द्रत्वयायुजावयम् । सासह्यामपृतन्यतः ॥ ४ ॥

---

१ तृतीयपादे षडक्षरेति विराट् । "तुवोतासोनियर्वता" इति विश्लेषेणाष्टाक्षरत्वम् ।

२ उपसर्गस्य क्रियायोगित्वस्वारस्यात् 'नितरां मुष्टिहत्यया' इति सायणव्याख्यानं चिन्त्यम् । इयं च प्रथिता वैदिकी रीतिः यदावृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यतीति । तद्यथा ऋग्वेदे—"सं यत् त इन्द्र मन्यवः सं चक्राणि दधन्विरे" (४. ३१. ६.) इति । यथा वा—"सं यदिषो वनामहे सं हव्या मानुषाणाम्" (५. ७. ३.) इत्यादि । शुक्लयजुर्वेदे—"सं वां मनांसि सं व्रता समु चित्तान्याकरम्" (१२. ५८.) इति, "अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः" (११. १७.) इति, "परि द्यावापृथिवी सद्य इत्वा परि लोकान् परि दिशः परि स्वः" (३२. १२.) इत्यादि च । कृष्णयजुर्वेदे च—"सं त्वमग्ने सूर्यस्य वर्चसाऽगथाः समृषीणां स्तुतेन सं प्रियेण धाम्ना" (१.५.५. १९.) इत्यादि । सामवेदे—"सं ते पयांसि समु यन्तु वाजाः" (६०३.) इत्यादि । अथर्वणि च—"सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः । सामिन्द्रो यो धनञ्जयः" (३. १४. २.) इति । यथावा—"नि शीर्षतो नि पत्तत आध्यो नि तिरामि ते" (६. १३१. १.) इत्यादि । "प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे" (२०. १४२. २.) इत्यादि च ।

[वयम् । शूरेभिः । अस्तृऽभि । इन्द्र । त्वया । युजा । वयम् ॥

ससह्याम[1] । पृतन्यतः ॥ ४ ॥]

त्वया पृतन्यतः शत्रूनभिष्याम[2] सुयोद्धृभिः[3] ॥ २१८ ॥ * ॥

[[4]निचृद्गायत्री]

(७५) महाँइन्द्रःपरश्चनुमहित्वमस्तुवज्रिणे । द्यौर्नप्रथिनाशवः ॥ ५ ॥ [॥ १५ ॥]

[महान् । इन्द्रः । परः । च । नु । महिऽत्वम् । अस्तु । वज्रिणे ॥

द्यौः । न । प्रथिना । शवः ॥ ५ ॥ १५ ॥]

यस्मान्महानानादिश्च विष्णुर्जीवोऽवरस्तथा । तस्यैवास्तु महत्त्वं तच्च जीवब्रह्मतां स्मरेत् । आकाशवत् प्रथिम्नाऽसौ शवः सुखबले[5] तथा ॥ २१९ ॥ * ॥

(७६) समोहेवायआशतनरस्तोकस्यसनितौ । विप्रासोवाधियायवः ॥ ६ ॥

[सम्ऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ ॥

विप्रासः । वा । धियाऽयवः ॥ ६ ॥]

अन्यसंवहने वाऽपि[6] ये तं[7] प्राप्ता जनार्दनम् । ज्ञानलाभेन तु नरस्त एव पशवोऽपरे । विप्राश्चैव धिया युक्ता मूर्खाः शूद्रसमा [8]मताः ॥ २२० ॥ * ॥

---

१ सञ्ज्ञापूर्वकविधेरनित्यत्वात् "दीर्घोऽकितः" इति अभ्यासस्य पदपाठे दीर्घो न प्राप्नोति । तेन 'ससह्याम' इति पदपाठे रूपमिति प्राञ्चः ।

२ "शत्रून् हनिष्याम" इति क्वचित् ।

३ "सुयोधिभिः" इति क्वचित् ।

४ चतुर्थपादे "दियौर्न" इति प्रश्लेषशैथिल्येनाष्टाक्षरत्वात् केवलगायत्रीत्वं च ।

५ यद्यपि निघण्टौ "ओजः । पाजः । शवः । तवः" (२. ९.) इति बलनामस्वेव पठ्यते । तथाऽपि शव इति सुखं च भवति । तथाहि प्रयोगः—"सत्यः सो अस्य महिमा गृणे शवः" इति, "शवसा कन्त सूरयः" इत्यादि च । तत्र सुखपरतया व्याख्यानात् । अत उक्तं "शवः सुखबले" इति । शं वमिति प्रत्येकं च सुखं बलं चाभिधत्ते ।

६ "अन्यसंवहनेनापि" इति प्र. पाठः ।

७ "ये च" इति क्वचित् ।

८ "स्मृताः" इति क्वचित् ।

(७७) यःकुक्षिस्सोमपातमस्समुद्रइवपिन्वते । उर्वीरापोनकाकुदः ॥ ७ ॥

[यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते ॥
उर्वीः । आपः । न । काकुदः ॥ ७ ॥]

यः कुक्षिरस्य[1] देवस्य समुद्रइव सोऽखिलान् । कामान् क्षरति[2] भक्ताय महापइव तर्पकाः । काकुदस्तस्य जिह्वास्तु[3] बह्वयो बहुमुखेषु याः ॥ २२१ ॥ * ॥

[निचृद्गायत्री[4]]

(७८) एवाह्यस्यसूनृताविरप्शीगोमतीमही । पक्वाशाखानदाशुषे ॥ ८ ॥

[एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही ॥
पक्वा । शाखा । न । दाशुषे ॥ ८ ॥]

एवमेवास्य वाणी च वेदेता महती तथा । [5]पक्वा शाखेव यजतो वरदात्री विरप्शिनः ॥ २२२ ॥
बलिष्ठस्य हि ते ॥ * ॥

(७९) एवाहितेविभूतयऊतयइन्द्रमावते । सद्यश्चित्सन्तिदाशुषे ॥ ९ ॥

[एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र । माऽवते ॥
सद्यः । चित् । सन्ति । दाशुषे ॥ ९ ॥]

---

१ "कुक्षिस्तस्य" इति प्र. पाठः ।

२ पिन्वते क्षरति । पिवि सेचने । एतेन "पिन्वते वर्द्धते । सेचनार्थो धातुः वृद्धिं लक्षयति" इति वदन् सायणः परास्तः । वाच्यार्थे ह्यनुपपद्यमाने लक्षणा पादं प्रसारयति । नचात्र वाच्यार्थो नोपपद्यते । येन लक्षणाऽऽश्रीयते ।

३ "जिह्वाः स्युः" इति क्वचित् । यद्यपि "काकुत् । जिह्वा । घोषः । स्वरः । शब्दः" (१. ११.) इति नैघण्टुकाः काकुदिति जिह्वेति च वाङ्नामसु पठन्ति ! तथाच भगवद्वाणी भक्तान् तर्पयति अमृतधारेवेति व्याख्यातुं शक्यम् । तथाऽपि काकुदिति जिह्वेति व मुख्यत इन्द्रियमभिधत्ते । तदुच्चार्यत्वाद् वाणी च जिह्वा इति निघण्टुरप्यमुख्यार्थमेवाऽह । तदेतत् स्फुटीकर्तुं 'जिह्वास्तु' इति व्याख्यातम् । उत्तरयर्चा पुनरुक्तं चान्यथा भवति । "काकुच्छब्देन मुखमुपलक्ष्यते" इति वदता परेण व्यर्थमात्मा प्रयासितः ।

४ "एवाहियस्य" इति विश्लेषेण केवलगायत्रीत्वम् ।

५ "पक्वशाखेव यजतः फलदात्री" इति क्वचित् ।

सन्ति सद्योऽपि यजतेऽस्य ते[1] । मावते ज्ञानिने नित्यमूतयश्च विभूतयः ॥ २२३ ॥ * ॥

[वर्द्धमाना गायत्री[2]]

(८०) एवाह्यस्यकाम्यास्तोमउक्थञ्चशंस्या ॥ इन्द्रायसोमपीतये ॥ १० ॥ [॥ १६ ॥]

[एव । हि । अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या ॥
इन्द्राय । सोमऽपीतये ॥ १० ॥ १६ ॥]

[इत्यष्टमं सूक्तम्]

स्तोमा उक्थानि चैवास्य तस्मै काम्यानि सर्वदा । गेयाः शंस्यानि[3] सोमस्य पीतये[4] नान्यथा पिबेत् ॥ २२४ ॥ * ॥ * ॥

— ९ —

[इन्द्रेहि दश, मधुच्छन्दाः, गायत्री, इन्द्रः, षड्जः ।]

[निचृद् गायत्री[5]]

(८१) इन्द्रेहिमथ्स्यन्धसोविश्वेभिस्सोमपर्वभिः ॥ महाँअभिष्टिरोजसा ॥ १ ॥ भि

[इन्द्र । आ । इहि । मथ्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः ॥
महान् । अभिष्टिः । ओजसा ॥ १॥]

---

१ "यजते हि ते" इति प्र. पाठः । "यजतो हि ते", इति "यजतोऽपि ते" इति च क्वचित् ।

२ षडक्षरः प्रथमः पादः । द्वितीयः सप्ताक्षरः । तृतीयोऽष्टाक्षरः । एवं त्रिभिः पादैः वर्द्धमाना गायत्री भवति । तथाहि च्छन्दस्सूत्रम्—"षट्कसप्तकाष्टकैर्वर्द्धमाना" (३. १४.) इति । सर्वानुक्रमणिकायां च "यस्यास्तु षट्कसप्तकाष्टकाः सा वर्द्धमाना" इति । अत्र व्यूहक्रमेण केवलगायत्रीत्वं च । तथाहि प्रथमचरणे —"एवाहियस्यकामिया" इति । द्वितीये "शंसिया" इति ।

३ "शस्यानि" इति क्वचित् ।

४ अत्र तत्पुरुषेऽप्याद्युदात्तत्वं व्यत्ययो बहुलमिति वार्तिकादेव भवति । पाणिनीयां प्रक्रियां नान्ततोऽवलम्बते भगवत्पाद इति च परमार्थः ।

५ अत्र "मथ्सियन्धसः" इति प्रश्लेषशैथिल्येन केवलगायत्रीत्वम् । 'मत्सि' इति वक्तव्ये 'मथ्सि' इति महाप्राणः वैदिकप्रयोगसिद्धः ।

सोमपाः सोमपर्वाणः सर्वे यस्मात् तदिच्छया । अभिष्टिरोजसा नित्यं मदं सुखमवाप्स्यसि ॥
॥ २२५ ॥ * ॥

(८२) एमेनंसृजतासुतेमन्दिमिन्द्रायमन्दिने ॥ चक्रिंविश्वानिचक्रये ॥ २ ॥

[आ । ईम् । एनम् । सृजत । सुते । मन्दिम् । इन्द्राय । मन्दिने ॥
चक्रिम् । विश्वानि । चक्रये ॥ २ ॥]

एनमासृजतेन्दौ च विष्णुं तं मदकारिणम्[1] । मन्दिने विष्णवे सम्यक् कर्मिणं सर्वकर्मिणे ॥
॥ २२६ ॥ * ॥

[निचृद्गायत्री[2]]

(८३) मत्स्वासुशिप्रमन्दिभिस्तोमेभिर्विश्वचर्षणे ॥ सचैषुसवनेष्वा ॥ ३ ॥

[मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे ॥
सचा । एषु । सवनेषु । आ ॥ ३ ॥]

स्वानन्द[3] विश्वजीवेशाऽमत्स्वा[4]स्मद्रक्षया सह ॥ * ॥

(८४) असृग्रमिन्द्रतेगिरःप्रतित्वामुदहासत ॥ अजोषावृषभम्पतिम् ॥ ४ ॥

[असृग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् । उत् । अहासत ॥
अजोषाः । वृषभम् । पतिम् ॥ ४ ॥]

---

१ "मदकारणम्" इति क्वचित् ।

२ "सवनेषुवा" इति विश्लेषेण केवलगायत्रीत्वं च ।

३ सुशिप्र शोभनानन्द । एतेन शिप्रशब्द आनन्दपर्याय इति ज्ञायते । यास्कस्तु "शिप्रे हनू नासिके च" इत्याह ।

४ "—जीवेश मत्स्वास—" इति प्र. पाठः ।

त्वन्निस्सृता वेदवाचस्त्वां प्रत्येवाप्यनारतम्[1]॥ २२७ ॥ उच्चैर्मुख्यतया सम्यग् विसृष्टाः स्वपतिं प्रति । अजोषाः[2] स्तुत्यरूपेण त्वसेव्यास्त्वदृते क्वचित् ॥ २२८ ॥ * ॥

[५–६ पिपीलिकामध्या निचृद्गायत्री[3]]

(८५) सञ्चोदयचित्रमर्वाग्राधइन्द्रवरेण्यम् । असदित्तेविभुप्रभु ॥ ५ ॥ [॥ १७ ॥]

[सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र । वरेण्यम् ॥
असत् । इत् । ते । विऽभु । प्रऽभु ॥ ५ ॥ १७ ॥]

अर्वाङ् नीचान् प्रति त्वस्मान् भद्रं राधः प्रचोदय । अस्त्येव ते विशेषेण प्रकृष्टं शुभमच्युतम् ॥ २२९ ॥ * ॥

(८६) अस्मान्त्सुतत्रचोदयेन्द्रराये रभस्वतः । तुविद्युम्नयशस्वतः ॥ ६ ॥

[अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः ॥
तुविऽद्युम्न । यशस्वतः ॥ ६ ॥

रभस्वतः[4] शब्दवतः स्तोतॄनस्मान् यशस्वतः । तत्र त्वयि महाराये महाकीर्तै[5] सुचोदय ॥ २३० ॥ * ॥

---

१ असृग्रमित्यनारतम् । अपूर्वोऽयमर्थः भाष्योक्तः । अन्ये तु असृजमिति वक्तव्ये असृग्रमिति छान्दसं धातुरूपमिति मन्वते ।

२ "जुष् मुदि सेवे" इति वोपदेवः । तेन अजोषाः असेव्याः । यद्यप्यस्मिन्नर्थे "नञ्सुभ्याम्" इत्यन्तोदात्तत्वं प्राप्नोति । आद्युदात्तश्च पठ्यते । अत एव "व्यत्ययो बहुलम्" इति वार्तिककृदाह । बह्वृषिका च हि स्वरप्रक्रिया । आह च पाणिनिरेव—"नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्" इति स्वरविषये बाहुमत्यमृषीणाम् । आचार्यास्तु न पाणिनीयां स्वरप्रक्रियामनुसस्रुः । प्रत्युत महाव्याकरणाद्युदितामेव प्रक्रियामिति विदितमेव तद्ग्रन्थेष्वधीतिनाम् । उदाजह्रुश्च स्वरविषये महाव्याकरणसूत्राण्यनुव्याख्यानादिष्वित्यवधेयम् । तेन व्याकरणान्तरेणाऽद्युदात्तत्वं च सम्भाव्यते ।

३ "वरेणियम्" इति विश्लेषेण केवलगायत्रीत्वं च । षष्ठमन्त्रे च "चोदय इन्द्र" इति पादान्तसन्धिविश्लेषेण केवलगायत्रीत्वम् ।

४ "रभि शब्दे" इति वोपदेवः ।

५ एतेन द्युम्नमिति कीर्तिनामेति ज्ञायते । निघण्टौ तु "द्युम्नम् । इन्द्रियम् । वसु । रायः" (२.१०.) इति धननामसु पठ्यते । तथाऽप्यत्र द्युम्नमिति न धनमुच्यते । "राये" इति पौनरुक्त्यात् । "राये धनसिद्ध्यर्थम्" इति

[निचृद्गायत्री[1]]

(८७) सन्नोमदिन्द्रवाजवदस्मेपृथुश्रवोबृहत् । विश्वायुर्धेह्यक्षितम् ॥ ७ ॥

[सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मेइति । पृथु । श्रवः । बृहत् ॥
विश्वऽआयुः । धेहि । अक्षितम् ॥ ७ ॥]

अस्मास्वतिबृहज्ज्ञानं[2] नित्यं सन्धेहि[3] चाक्षयम् ॥ * ॥

(८८) अस्मेधेहिश्रवोबृहद्द्युम्नंसहस्रसातमम् । इन्द्रतारथिनीरिषः ॥ ८ ॥

[अस्मेइति । धेहि । श्रवः । बृहत् । द्युम्नम् । सहस्रऽसातमम् ॥
इन्द्र । ताः । रथिनीः । इषः ॥ ८ ॥]

विद्यां कीर्तिं सदेहान्नं[4] बहुलाभयुतं बृहत् । प्रार्थने पौनरुक्त्यं न चोदयेति ततः पुनः ॥ २३१ ॥ * ॥

(८९) वसोरिन्द्रंवसुपतिङ्गीर्भिर्गृणन्तऋग्मियम् । होमगन्तारमूतये ॥ ९ ॥

[वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः । गृणन्तः । ऋग्मियम् ॥
होम । गन्तारम् । ऊतये ॥ ९ ॥]

वसोर्वसूनां च पतिं देवदेवेश्वरं प्रभुम् । ऋङ्मेयमाह्वयामोऽत्र गृणन्तोऽभीष्टसिद्धये ॥ २३२ ॥ * ॥

---

तु लौकिकं व्याख्यानम् । प्रचलितं च निघण्टुनिरुक्तादिपाठं भाष्यकृत् नातीव हि प्रमाणं मन्यते । अत एव "निरुक्ते व्यासनिर्मिते" इत्यवादीत् । रत्नमिति निघण्टौ धननामसु पठितमपि सुखपरतया हि व्याचख्यौ । स्फुटो हि तेन मतभेदः । वैयाकरणं पदनिर्वचनं नात्यन्तमादरणीयमिति यास्क एवाऽह–"न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति" इति ।

१ "धेहियक्षितम्" इति विश्लेषेण केवलगायत्रीत्वम् ।

२ श्रवः धनमिति नव्याः । ज्ञानमित्याचार्याः । इयं ह्याचार्यपरिपाटी–यत् पदजातं धनान्नादिलौकिकफलपरतयाऽन्ये व्याचक्षते तज्ज्ञानसुखादिपरतया आचार्या इति । तेन हि वेदस्य महत्त्वमार्थिकमाविष्कृतं भवति । किमिति लौकिकीमेव पद्यां वेदेऽपि प्रतिपद्यन्ते ।

३ धेहि देहि । "डु धा ञ्लि धारणे पुष्टौ दाने" इति वोपदेवः । "डु धाञ् दानधारणयोः" इति पुरुषकारः । "डु दाञ् दाने । डु धाञ् धारणे च" इति शाकटायनः ।

४ रथिनीः इषः इति सदेहान्नमिति व्याख्यातम् । "शरीरं रथमेव तु" इति वैदिकप्रसिद्धेः । गीतायामपि तथा ।

[निचृद्गायत्री[1]]

(९०) सुतेसुतेन्योकसेबृहद्बृहतएदरिः । इन्द्रायशूषमर्चति ॥ १० ॥ [॥१८ ॥]

[सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः ॥
इन्द्राय । शूषम् । अर्चति ॥ १० ॥ १८ ॥]

[इति नवमं सूक्तम्]

**अविनाश्यरिरुद्दिष्टो बृहच्छूषं[2] सुखं प्रति । सुतेसुते सद्गृहाय देवाय बृहतेऽर्चति ॥ २३३ ॥ * ॥ * ॥**

— १० —

[गायन्ति द्वादश, मधुच्छन्दाः, अनुष्टुप्[3], इन्द्रः, १–३ गान्धारः ।]

[१–३ विराडनुष्टुप्[4]]

(९१) गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे ॥ १ ॥

[गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः ॥
ब्रह्माणः । त्वा । शतक्रतोइतिशतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥ १ ॥]

**गायन्ति सामगास्त्वृग्भिः शंसन्त्यृग्वेदिनोऽतिकम्[5] । विरिञ्चास्त्वां बहुज्ञान शक्रकेतुमिवोच्छ्रितम् ॥ २३४ ॥ व्यजानन्[6] ॥ * ॥**

---

१ "नियोकसे" इति विश्लेषेण केवलगायत्रीत्वम् ।

२ शूषं देहधर्मः बलमिति नैरुक्ताः । "शूषम् । सहः" (२. ९.) इत्यादि बलनामसु पाठात् । आत्मधर्मः सुखमित्याचार्याः ।

३ सरस्वती च रोहिणी चानुष्टुब्देवते । पिङ्गलनागस्तु सोमं देवतामाह । तत्तु भाष्यविरोधादनादरणीयमित्युक्तम् । गान्धारश्चानुष्टुप्स्वर इत्यप्युक्तमेव पुरस्तात् ।

४ तत्राऽयस्तृचः विराडनुष्टुप् । द्वितीयपादे षडक्षरत्वात् । प्रथममन्त्रे "गायत्रिणो अर्चयन्तियर्कमर्किणः" इति, द्वितीये "भूरियस्पष्ट कर्तुवम्" इति, तृतीये "युक्ष्वा ......कक्षियप्रा" इति च विश्लेषेण केवलानुष्टुप्त्वं सम्पाद्यम् ।

५ अर्कमतिकम् । पूर्णसुखम् । "अर्को देवो भवति यदेनमर्चन्ति" इति यास्ककृतमपि निर्वचनं भाष्यकृत्सम्मतमेव । ऊरीकृत्य तमर्थमर्थान्तरं ह्याह ।

६ उद्येमिरे व्यजानन्निति धातूनामनेकार्थत्वात् । तथाहि कृष्णलीलाशुकः—"पाठा व्याख्याश्च धातूनां दृश्यन्ते स्वैरिणः क्वचित् । प्रयोग एव भगवांस्तानवस्थापयेत् पथि" इति ।

(९२) यत्सानोस्सानुमारुहद्भूर्यस्पष्टकर्त्वम् । तदिन्द्रोअर्थंचेततियूथेनवृष्णिरेजति ॥ २ ॥

[यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् ॥
तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥ २ ॥]

उच्चतोऽप्युच्चं सामर्थ्यं करणे तव । ततोऽपि भूरि यत् तेन चेतत्यर्थमतो भवान् मुक्तामुक्तसमूहेन शोभते गूढशक्तिमान्[1] ॥ २३५ ॥ उच्चादुच्चं विरिञ्चादिगतं कर्तृत्वमेव यत् । भूरि स्पष्टमभूत् तेन परेशस्य ततश्च सः । चेतत्यर्थानशेषांश्च महायूथेन चेष्टते[2] ॥ २३६ ॥ * ॥

(९३) युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा । अथानइन्द्रसोमपागिरामुपश्रुतिंचर ॥ ३ ॥

[युक्ष्व । हि । केशिना । हरीइति । वृषणा । कक्ष्यऽप्रा ॥
अथ । नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥ ३ ॥]

कक्ष्याभिपूरकौ पुष्ट्या युङ्क्ष्व त्वं केशिनौ हरी । अथोपगम्य शृणु नो गिरः ॥ * ॥

[भुरिगुष्णिक्[3], स्वरः—ऋषभः ।]

(९४) एहिस्तोमाँअभिस्वराभिगृणीह्यारुव । ब्रह्मचनोवसोसचेन्द्रयज्ञंचवर्द्धय ॥ ४ ॥

---

१ गूढशक्तिमानस्पष्ट इत्येकोऽर्थः । स्पष्टमभूदित्यपरः । "स्पश अज्ञातदृशौ" इति धातुरिति भाष्यकृदेव वक्ष्यति । अत्रापि काचनान्यादृशी स्वरप्रक्रिया भाति । आमन्त्रितत्वे धातुत्वे वा निघातप्राप्तेः । अत्र ह्याद्युदात्तः पठ्यते । व्याकरणान्तरमन्वेषणीयमिति भाति । न च "निपातैर्यद्यदिहन्त—"इति न निघात इति वाच्यम् । तस्य आरुहदिति गतार्थत्वात् । यद्वृत्तान्नित्यम् इति निहतं भवतीति केचिद् व्याचक्षते । तत्रेदं चिन्त्यम्—क्वात्र यच्छब्दः? यदिति हि हेत्वर्थे निपातः । तच्च पूर्वतनेनैव धातुना कृतार्थम् । तेन यद्वृत्तस्य नात्र प्रसर इति भाति ।

२ पूर्वमेजतिः शोभार्थ इत्युक्तम् । इदानीं चेष्टायां व्याख्यायते । एतावान् विशेषः । शोभार्थत्वे वरस्मैभाषत्वं छान्दसम् । गत्यर्थत्वे तु स परस्मै भाष एव । तथाहि दैवम्— "दीप्तौ शाप्येजते तत्र भवेदेजति कम्पने" इति । यद्यप्येजतिः कम्परूपचेष्टाविशेषवाची । अत्र तु चेष्टासामान्ये वर्तते । तथाहि लीलाशुकः—"प्रयोगविशेषादर्थविशेषोऽप्यनेकार्थवदास्थेयः । न पुनः पाठ एव शरणम्" इति ।

३ अष्टाविंशत्यक्षरा हि भवत्युष्णिक् । इयं चैकेनाक्षरेणाधिकेति भुरिगुष्णिग् भवति । यदि चेयादिपूरण इति न्यायेनाक्षराणि व्यूह्येरन् गायत्र्येव तदा भवति । कात्यायनस्य चैतदभिमतम् । तथाहि व्यूहक्रमः—"स्वर अभिगृणीहियारुव" इति पूर्वार्द्धे । "सचाइन्द्रयज्ञंचवर्द्धय" इत्युत्तरार्द्धे च व्यूहेन द्वात्रिंशदक्षरत्वे सम्पन्ने केवलानुष्टुप्त्वम् । अस्मिन् पक्षे तु गान्धार एव स्वरो भवति ।

[आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव ॥
ब्रह्म । च । नः । वसोइति । सचा । इन्द्र । यज्ञम् । च । वर्द्धय ॥ ४ ॥]

अभिस्वर च स्तुतिम्[१] ॥ २३७ ॥ प्रशंसां कुरु[२] शब्दं च पुनर्हर्षान्महत्तरम् । ब्रह्म यज्ञं च नोऽन्तस्थो बहिष्ठश्चैव[३] वर्द्धय ॥ २३८ ॥ * ॥

[विराडनुष्टुप्[४], स्वरः–५–१२ गान्धारः]

(९५) उक्थमिन्द्रायशंस्यंवर्द्धनम्पुरुनिष्षिधे । शक्रोयथासुतेषुणोरारणत्सख्येषुच ॥ ५ ॥

[उक्थम् । इन्द्राय । शंस्यम् । वर्द्धनम् । पुरुनिःऽसिधे ॥
शक्रः । यथा । सुतेषु । नः । ररणत् । सख्येषु । च ॥ ५ ॥]

नित्यवृद्धत्वतो विष्णोर्वर्द्धनं तु प्रकाशतः[५] । बहुशत्रून् निष्षिदसौ हरिर्दनुजघातकः ॥ २३९ ॥ अस्मत्सख्याय शब्दं च चकारास्मासु संस्थितः । यथा सुतेषु सोमेषु करोत्यृत्विक्षु संस्थितः[६] ॥ २४० ॥ * ॥

[निचृदनुष्टुप्[७]]

(९६) तमित्सखित्वईमहेतंरायेतंसुवीर्ये । सशक्रउतनश्शकदिन्द्रोवसुदयमानः ॥ ६ ॥
[॥ १९ ॥]

[तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये ॥
सः । शक्रः । उत । नः । शकत् । इन्द्रः । वसु । दयमानः ॥ ६ ॥ १९ ॥]

---

१ "अभिस्वरवस्तुतिम्" इति मुद्रितपाठः प्रामादिकः ।

२ गृणीहि प्रशंसाशब्दं कुरु । "गॄ शब्दे" । "ज्ञाने गारयते गिरेन्निगरणे शब्दे गृणाति त्रयम्" इति दैवम् ।

३ "बहिस्थश्चैव" इति क्वचित् ।

४ प्रथमपादे "शंसियम्" इति, चतुर्थे "सखियेषु" इति व्यूहेन केवला चानुष्टुप् भवति ।

५ "प्रकाशनम्" इति प्र. पाठः ।

६ "करोत्यृत्विक्षु च स्थितः" इति प्र. पाठः ।

७ "सुवीरिये" इति विश्लेषेण केवला चानुष्टुप् ।

तमेव शरणं नित्यं सखित्वाद्यर्थमीमहे । शक्त्यानन्दस्वरूपत्वाच्छक्रः सर्वत्र चाशकत् । अस्माकं च सदा विश्वं [1]ददद्देव प्रवर्तते ॥ २४१ ॥ * ॥

(९७) सुविवृतंसुनिरजमिन्द्रत्वादातमिद्यशः । गवामपव्रजंवृधिकृणुष्वराधोअद्रिवः ॥ ७ ॥

[सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः ॥
गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥ ७ ॥]

विस्पष्टं सुष्ठ्वकाल्यं[2] च यशस्त्वद्दत्तमेव हि । गूढं ज्ञानसमूहं त्वं [3]विवृण्वृद्धिं च नः कुरु ॥ २४२ ॥ अद्रिरादरणीयत्वात् प्राणस्तद्वर्तकोऽद्रिवा[4] । हरिः शक्रस्तथाऽद्रीणां छेदनाद् वारणादपि ॥ २४३ ॥ * ॥

[निचृदनुष्टुप्[5]]

(९८) नहित्वारोदसीउभेऋघायमाणमिन्वतः ॥ जेषस्स्वर्वतीरपस्सङ्गाअस्मभ्यन्धूनुहि ॥ ८ ॥

[नहि । त्वा । रोदसीइति । उभेइति । ऋघायमाणम् । इन्वतः ॥
जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥ ८ ॥]

न त्वामृघायमाणं हि वर्द्धमानं[6] तु रोदसी । सम्प्राप्नुतः[7] श्रीभूमी च[8] सहिते चाप्रसादतः ॥ २४४ ॥ अपः प्रजाः सुखवतीरजयस्त्वद्वशत्वतः । ज्ञानानि सन्धुनु हि च प्रापयोस्मा अपि स्वयम् ॥ २४५ ॥ * ॥

---

१ दयमान इति ददत् । "दय ङ् ग्रहणे गतौ वधे दानेऽवने" इति वोपदेवः ।

२ निरजमकाल्यमक्षेप्यम् । "अज क्षेपे" इति वोपदेवः ।

३ "प्रवृण्वृद्धिम्" इति क्वचित् ।

४ "अद्रिवाः" इति प्र पाठः ।

५ अत्र तृतीयपादे "सुवर्वतीः" इति व्यूहेन केवला चानुष्टुप् ।

६ ऋघायतिर्वृद्ध्यर्थ इत्येतेन ज्ञायते । हिंसार्थ इत्यन्ये ।

७ "इवि व्याप्तिप्रीणनयोः" इति वोपदेवः । "जिगाति । पतति । इन्वति" (२.१४.) इति गतिकर्मसु निघण्टुः । "इन्वति । नक्षति" (२.१८.) इति च व्याप्तिकर्मसु ।

८ "श्रीर्भूमी च" इति क्वचित् । तदा भूमीति भिन्नं पदम् । ईदन्तं च । तथाहि प्रयोगः मन्दारमरन्दे—"भूमीलोकादिदृक्षया—" इति ।

(९९) आश्रुत्कर्णश्रुधीहवन्नूचिद्दधिष्वमेगिरः। इन्द्रस्तोममिमम्ममकृष्वायुजश्चिदन्तरम् ॥ ९ ॥

[आश्रुत्ऽकर्ण। श्रुधि। हवम्। नु। चित्। दधिष्व। मे। गिरः॥
इन्द्र। स्तोमम्। इमम्। मम। कृष्व। युजः। चित्। अन्तरम्॥ ९ ॥]

बहुश्रवणकर्णास्मदाह्वानं शृणु चाऽदरात्। अत्रैव च गिरो धेहि मयि स्तोमं च मत्कृतम् ॥ २४६ ॥ प्रियं योगादपि कुरु ॥ * ॥

(१००) विद्माहित्वावृषन्तमंवाजेषुहवनश्रुतम्। वृषन्तमस्यहूमहऊतिंसहस्रसातमाम् ॥ १० ॥

[विद्म। हि। त्वा। वृषन्ऽतमम्। वाजेषु। हवनऽश्रुतम्॥
वृषन्ऽतमस्य। हूमहे। ऊतिम्। सहस्रऽसातमाम्॥ १० ॥]

विद्म त्वां शक्तिमत्तमम्। श्रोतारं युत्सु चाऽह्वानमाह्वयामस्तवावनम् ॥ २४७ ॥ बहुलाभोत्तममिति ॥ * ॥ [1]स्थानान्तरगते ऋचौ। दृष्ट्वेन्द्रं यज्ञगं [2]याभ्यां मधुच्छन्दास्तमस्तुवत्। आतून इति तेनैव न विरुद्धा शतर्चिता ॥ २४८ ॥ * ॥ —

(१०१) आतूनइन्द्रकौशिकमन्दसानस्सुतम्पिब। नव्यमायुःप्रसूतिरकृधीसहस्रऽसामृषिम्
॥ ११ ॥

[आ। तु। नः। इन्द्र। कौशिक। मन्दसानः। सुतम्। पिब॥
नव्यम्। आयुः। प्र। सु। तिर। कृधि। सहस्रऽसाम्। ऋषिम्॥ ११ ॥]

मात्रा कुशैर्गृहीतत्वाज्जन्मन्यासीत् स कौशिकः। गाथित्वाद्[3] वा हिरण्याण्डकोशस्थत्वाद्

---

१ ऋचां शतं मधुच्छन्दा वैश्वामित्रो ददर्शेति ता इमाः शतमृचः। अवशिष्टे उत्तरे द्वे देशान्तरे कालान्तरे च दृष्टे, स्थानान्तरगते। अत एते अविवक्षित्वा शतर्चित्वव्यवहारः। ऋषिसाम्यप्रसङ्गादेवात्र पठिते। यथा चोत्तरसूक्तेऽप्यष्टावृचः। न शतान्तर्गततयेति भावः।

२ "ताभ्याम्" इति क्वचित्।

३ "गाधित्वाद् वा" इति प्र. पाठः। 'गाथित्वाद् वा' इत्येव समीचीनमिति भाति। पाणिनिरपि "गाथिविदथिकेशिगणिपणिनश्च" (६.४.१६५.) इत्यृषिनामसु गाथिपदमेव प्रयुङ्क्ते। अनुक्रमणिकायां च— "कुशिक इन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार। तस्येन्द्र एव गाथी पुत्रो जज्ञे" इति। सर्वत्र च प्राचीनकोशेषु गाधीति-

हरिस्तथा ॥ २४९ ॥ मन्दसानो नित्यसुखी स्तुत्यमायुश्च नस्तिर[1] । ऋषिं सहस्रलाभं मां कुरु च ॥ * ॥

(१०२) परित्वागिर्वणोगिरइमाभवन्तुविश्वतः । वृद्धायुमनुवृद्धयोजुष्टाभवन्तुजुष्टयः ॥ १२ ॥ [॥ २० ॥]

[परि । त्वा । गिर्वणः । गिरः । इमाः । भवन्तु । विश्वतः ॥
वृद्धऽआयुम् । अनु । वृद्धयः । जुष्टाः । भवन्तु । जुष्टयः ॥ १२ ॥ २० ॥]

[इति दशमं सूक्तम्]

त्वा इमा[2] गिरः ॥ २५० ॥ सर्वदा परितः सन्तु मदीयाः सर्वलाभिनम् । वृद्धिरूपा गिरो जुष्टाः[3] सेवारूपाश्च सन्तु नः ॥ २५१ ॥ * ॥ * ॥

— ११ —

अष्टावृचः पुनस्तेन दृष्टा अन्यत्रगास्तपः । कुर्वता ॥ * ॥—

[इन्द्रम् अष्टौ, मधुच्छन्दाः[4], अनुष्टुप्, इन्द्रः, १-४ गान्धारः ।]
[१-३ निचृदनुष्टुप्[5]]

(१०३) इन्द्रंविश्वाअवीवृधन्त्समुद्रव्यचसङ्गिरः । रथीतमंरथीनांवाजानांसत्पतिम्पतिम् ॥ १ ॥

---

स्थाने गाथीत्येव लिखन्तीति च गमनीयम् । "यद्यपि विश्वामित्रः कुशिकस्य पुत्रः । तथाऽपि तद्रूपेणेन्द्रस्यैवोत्पन्नत्वात् कुशिकपुत्रत्वम्" इति यत् सायणभाष्ये स प्रमाद एव । विश्वामित्रस्य कुशिकपौत्रतया तत्पुत्रत्वाभावात् । गाथिन एवेन्द्रत्वेन विश्वामित्रस्य तद्रूपत्वाभावाच्च ।

१ तरतिवत् तिरतिरपि वितरणार्थे वेदेषु पठ्यते । यथा "चन्द्रमास्तिरते दिर्घमायुः" इत्यादि । धात्वन्तरं वा स्यात् । अतिशये तृतीय इति अकारस्य इकार इति तु बहवः ।

२ त्वेमा इति वक्तव्ये त्वा इमा इति विश्लेषणं वैलक्षण्यार्थम् । त्वा सर्वतो विलक्षणं त्वाम् इमा गिरः इत्यादि । "विश्लिष्टार्थे च विश्लिष्टम्" इति ह्युक्तम् ।

३ "जुष् मुदि सेवे" इति वोपदेवः । "प्रीतिसेवनयोरिष्टं तुदादेर्जुषतेपदम्" इति दैवम् ।

४ अत्र सूक्ते मधुच्छन्दसः पुत्रः जेता नाम ऋषिरिति यदनुक्रमणिकायामभिहितम्, अध्ययनपरम्पराप्राप्तं च तदृक्संहितादिप्रतनमूलग्रन्थविरोधादसङ्गतमनादरणीयं चेति भाष्ये स्थितम् ।

५ अत्र प्रथममन्त्रे "रथिइनाम्" इति, द्वितीये "तुवामभि" इति, तृतीये "दस्यन्तियूतयः" इति च विश्लेषेण केवलानुष्टुप्त्वं च ।

[इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् । गिरः ॥
रथिऽतमम् । रथिनाम् । वाजानाम् । सत्ऽपतिम् । पतिम् ॥ १ ॥]

सम्यग्गुक्तिगुणव्यक्तिस्तथाविधः[1] ॥ २५२ ॥ * ॥

(१०४) सख्येतइन्द्रवाजिनोमाभेमशवसस्पते । त्वामभिप्रणोनुमोजेतारमपराजितम् ॥ २ ॥

[सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते ॥
त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽजितम् ॥ २ ॥]

(१०५) पूर्वीरिन्द्रस्यरातयोनविदस्यन्त्यूतयः । यदीवाजस्यगोमतस्स्तोतृभ्योमंहतेमघम् ॥ ३ ॥

[पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः ॥
यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ॥ ३ ॥]

प्रथमानि महत्त्वेन ते दानान्यवनानि च । न भिद्यन्ते[2] न नश्यन्ति गोमदन्नं यशस्तथा ॥ २५३ ॥
यदि मंहते[3] ददातीशः ॥ * ॥

(१०६) पुराम्भिन्दुर्युवाकविरमितौजाअजायत । इन्द्रोविश्वस्यकर्मणोधर्तावज्रीपुरुष्टुतः ॥ ४ ॥

[पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत ॥
इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ ४ ॥]

---

१ "—व्यक्तिस्तथाभिधः" इति प्र. पाठः ।

२ "दसु विभेदने" इत्याचार्यसम्मतो धातुपाठः । अत एव दस्मेतिपदं शत्रुभेदिन् इति व्याख्याति पुरा । "दसु उपक्षये" इति च प्रचलितो धातुपाठः । तदप्याह न नश्यन्तीति । "दस्येत् क्षये" इति दैवम् ।

३ यद्यपि "महि वृद्धौ" इत्येव धातुपाठः । "महि दाने" इति च पठनीयम् । अत एव निघण्टुः—"शिक्षति । तुञ्जति । मंहते" इति दानकर्मसु पठति ।

[भुरिगुष्णिक्[1], स्वरः—ऋषभः।]

(१०७) त्वंवलस्यगोमतोपावरद्रिवोबिलम्। त्वान्देवाअबिभ्युषस्तुज्यमानासआविषुः ॥५॥

[त्वम्। वलस्य। गोऽमतः। अप। अवः। अद्रिऽवः। बिलम्॥
त्वाम्। देवाः। अबिभ्युषः। तुज्यमानासः। आविषुः॥ ५ ॥]

वलस्तिर्यग्गतिर्धियः। वाचामन्यार्थबुद्धेस्तु बिलं मूलं तमो हि यत्। तदपावृतवांस्त्वं च प्रदर्श्य विनिवार्य च ॥ २५४ ॥ त्वां हि देवा भयापेताः [2]प्रेर्यमाणास्त्वयैव च। छाद्यमानं गिरा दैत्यैररक्षन्निव सद्गिरा ॥ २५५ ॥ इन्द्रस्य गोसवार्थे च समुत्सृष्टा जगत्यपि। चर्तुं गावो हृता दैत्यैः सरमारक्षिताः पुरा। तस्याः स्वसृत्वमुक्त्वैव[3] तयोच्छिष्टं च गोपयः ॥ २५६ ॥ तदर्थं पणयो नाम ते दैत्या वलपूर्वकाः। इन्द्रेण निहताः पश्चाज्ज्ञात्वा च सरमाकृतम् ॥ २५७ ॥ ताडयित्वा पदा वक्त्रात् स्रुते[4] पयसि तां भयात्। शरणागतां प्रेषयित्वा दौत्येन[5] पणिनां पुनः ॥ २५८ ॥ भित्त्वा गिरिव्रजं तं च गावो यत्र प्रतिष्ठिताः। निस्सारिताः पुनस्ताश्च गोसवेनेष्टमेव च। तदा देवा अभीत्यैव परितो जुगुपुः पतिम्[6] ॥ २५९ ॥ * ॥

[स्वरः—६-८ गान्धारः]

(१०८) तवाहंशूररातिभिःप्रत्यायंसिन्धुमावदन्। उपातिष्ठन्तगिर्वणोविदुष्टेतस्यकारवः ॥ ६ ॥

[तव। अहम्। शूर। रातिऽभिः। प्रति। आयम्। सिन्धुम्। आऽवदन्॥
उप। अतिष्ठन्त। गिर्वणः। विदुः। ते। तस्य। कारवः॥ ६ ॥]

---

१ यथाश्रुतपाठे एकोनत्रिंशदक्षराणीति भुरिगुष्णिक्। प्रथमपादे "तुवं वलस्य" इति, द्वितीये च "गोमतोअपाव" इति, तृतीये "तुवां देवा" इति च विश्लेषे द्वात्रिंशदक्षरा अनुष्टुप् च भवति। तथात्वे गान्धार एव स्वरः।

२ "तुजि प्राणेऽवने" इति वोपदेवः। प्राणनं प्रेरणमित्यनर्थान्तरम्।

३ "स्वृतत्वमुक्त्वैव" इति क्वचित्।

४ "स्रुते" इति क्वचित्। ५ "दूत्येन" इति प्र. पाठः।

६ इयं च कथा ऋग्वेद एव दशममण्डले १०८ तमे सूक्ते पणिसरमासंवादे स्फुटमुक्ता—"किमिच्छन्ती सरमा प्रेदमानट्—", "इन्द्रस्य दूतीरिषिता चरामि—", "कीदृङ्ङिन्द्रः सरमे का दृशीका—", "न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे", "इमा गावः सरमे या ऐच्छः......अस्माकमायुधा सन्ति तिग्मा", "अयं निधिः सरमे अद्रिबुध्नः", "रक्षन्ति तं पणयो ये सुगोपाः", "स्वसारं त्वा कृणवै मा पुनर्गाः", "नाहं वेद भ्रातृत्वं नो स्वसृत्वम्", "गोकामा मे अच्छदयन्", इत्यादिभिर्मन्त्रैः।

तव दानैरहं सिन्धुं नदीं प्रत्यागमं पुनः । त्वामावदन् स्तुतिपदैर्यज्ञदीक्षार्थमुद्यतः[1] ॥ २६० ॥ उपातिष्ठन्त कर्तारो विदुस्त्वां ये गिरोदित[2] ॥ * ॥

[विराडनुष्टुप्[3]]

(१०९) मायाभिरिन्द्रमायिनन्त्वंशुष्णमवातिरः । विदुष्टेतस्यमेधिरास्तेषांश्रवांस्युत्तिर ॥ ७ ॥

[मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः ॥
विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥ ७ ॥]

शक्तिभिः शक्तिमन्तं त्वं[4] शोषकं वृत्रमातिरः ॥ २६१ ॥ तमो वा त्वां विदुर्मेधारतास्तेषां श्रवांसि च । विद्या उच्चैस्तरां देहि ॥ * ॥

[निचृदनुष्टुप्[5]]

(११०) इन्द्रमीशानमोजसाभिस्तोमाअनूषत । सहस्रंयस्यरातयउतवासन्तिभूयसीः ॥ ८ ॥
[॥ २१ ॥]

[इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत ॥
सहस्रम् । यस्य । रातयः । उत । वा । सन्ति । भूयसीः ॥ ८ ॥ २१ ॥]

[इत्येकादशं सूक्तम्]

स्तुवन्ति त्वां[6] सहौजसा ॥ २६२ ॥ * ॥ ऋक्संहितायाः स्वाध्यायात् प्रबन्धाद् व्यासनिर्मितात् । ब्राह्मणेभ्यस्तथा मानात् प्रोक्ताः स्युर्मुनयोऽत्र ये ॥ २६३ ॥ श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते । श्रुतिलिङ्गान्यता यावत् तावत् पूर्वप्रमा भवेत् ॥ २६४ ॥ * ॥ * ॥

इति तृतीयोऽनुवाकः

---

१ "–मुद्यताः" इति प्र. पाठः प्रामादिकः ।
२ "गिर्वणो देवो भवति गीर्भिर्वर्णयन्तीति" इति यास्कः ।
३ द्वितीयपादे "तुवम्" इति, चतुर्थे "श्रवांसियुत्तिर" इति च विश्लेषेण केवला चानुष्टुप् भवति ।
४ "त्वाम्" इति प्र. पाठः प्रामादिकः ।
५ "ओजसाअभि" इति विश्लेषेण केवला चानुष्टुप् ।
६ "त्वा सहौजसा" इति क्वचित् ।

—१२—

शतर्ग्भिरुत्तराभिस्तु वह्निनामानमच्युतम् । अस्तौन्मेधातिथिस्ताभ्य उत्तरा[1] अपि तादृशः[2] ॥ २६५ ॥ अन्यत्रगास्तपस्यन् स ता ददर्श कदाचन । कालस्थानान्तरत्वं चेत् सङ्ख्यातोऽभ्यधिकं भवेत् ॥ २६६ ॥ अन्यस्थानगता अन्यदृष्टा अप्यत्रगा यदि । सङ्ख्यान्तर्भावमेष्यन्ति ता इतोऽपगता यतः ॥ २६७ ॥—

[अग्निं द्वादश, मेधातिथिः काण्वः, गायत्री, अग्निः, षड्जः ।]

(१११) अग्निन्दूतंवृणीमहेहोतारंविश्ववेदसम् । अस्ययज्ञस्यसुक्रतुम् ॥ १ ॥

[अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् ॥
अस्य । यज्ञस्य । सुऽक्रतुम् ॥ १ ॥]

यज्ञभागार्थमत्रस्थो देवसम्प्रे[3]षितो यतः । दूतोऽग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद् यतः । विश्ववेदाः स सर्वज्ञो यज्ञज्ञो यज्ञसुक्रतुः ॥ २६८ ॥ * ॥

(११२) अग्निमग्निंहवीमभिस्सदाहवन्तविश्पतिम् । हव्यवाहम्पुरुप्रियम् ॥ २ ॥

[अग्निम्ऽअग्निम् । हवीमऽभिः । सदा । हवन्त । विश्पतिम् ॥
हव्यऽवाहम् । पुरुऽप्रियम् ॥ २ ॥]

---

१ "या वां कशा—" (मं–२११) इत्यारभ्य "–इन्द्रो विद्यात् सह ऋषिभिः" (मं–२५३.) इत्यन्ताः त्रयश्चत्वारिंशन्मन्त्रा अपि मेधातिथिदृष्टा एव । चतुर्थः पञ्चमश्चेति द्वावनुवाकौ, द्वादश सूक्तान्या त्रयोविंशं १४३ मन्त्राः मेधातिथिदृष्टा इति यावत् । अयं मेधातिथिः काण्वः । अस्य पुत्रोऽपि कण्वनामेति क्वचिच्छ्रूयते । तद्यथा महाभारते–"ऋषिर्मेधातिथेः पुत्रः कण्वः" (शान्ति. २०८–२७.) इति । स्वयं मेधातिथिरपि काण्वः कण्वगोत्रापत्यम् । अत्र परमार्थो मृग्यः ।

२ "तद्दृशः" इति प्र. पाठः । तादृश इति तादृश्यस्तद्दृष्टा एवेत्यर्थः ।

३ "देवैः सम्प्रे—" इति प्र. पाठः । अग्नेर्यज्ञभागवहनार्थं दैवैः प्रेषितत्वं तु श्रुतावेवोक्तम् । तथाह्यग्निं प्रति देवानां वचनम्—"एहि मनुर्देवयुर्यज्ञकामोऽरङ्कृत्या तमसि क्षेष्यग्ने । सुगान् पथः कृणुहि देवयानान् वह हव्यानि सुमनस्यमानः" (ऋ.१०.५१. ५.) इति ।

अग्निनामा जामदग्न्यो भगवान् सम्प्रकीर्तितः । तस्य रूपबहुत्वेन वीप्सा चैवोपपद्यते । हवीमभिर्[1] ऋगाह्वानैराह्वयन्तः[2] प्रजापतिम् ॥ २६९ ॥ * ॥

[निचृद्गायत्री[3]]

(११३) अग्नेदेवाँइहावहजज्ञानोवृक्तबर्हिषे । असिहोतानईड्यः ॥ ३ ॥

[अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे ॥
असि । होता । नः । ईड्यः ॥ ३ ॥]

जज्ञानो व्यज्यमानस्तु वृक्तं प्रस्तृतमुच्यते[4] । यजमानो वृक्तबर्हिः ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[5]]

(११४) ताँउशतोविबोधययदग्नेयासिदूत्यम् । देवैरासत्सिबर्हिषि ॥ ४ ॥

[तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यम् ॥
देवैः । आ । सत्सि । बर्हिषि ॥ ४ ॥]

बोधयेशेच्छतः सुरान् ॥ २७० ॥ देवैः सहोपविशसि ॥ * ॥

[निचृद्गायत्री[6]]

(११५) घृताहवनदीदिवःप्रतिष्मरिषतोदह । अग्नेत्वंरक्षस्विनः ॥ ५ ॥

---

१ अत्र क्वचित् कोशेषु "हवीमहि" इति पठ्यते । प्रमाद एवायम् ।

२ अत्र तु प्रायः "आह्वयन्तः" इति सविसर्गः पाठो दृश्यते । विसर्गविरहे त्वर्थस्वारस्यं भवति । "हवन्त, अह्वयन्त, आहूतवन्तः" इति टीका चात्र संवदते । यद्वा मन्त्रे हवन्तेति भूतलकारः सार्वकालिकः पृष्ठ एव सदापदयोगात् । तदिदमुक्तं आह्वयन्तः इति वर्तमानप्रत्ययेन । तथाच सदा हवन्तेति पदद्वयमाह्वयन्त इत्येकेन पदेन विवृतं भवति ।

३ "ईडियः" इति विश्लेषेण केवलगायत्रीत्वम् ।

४ "प्रस्तुतमुच्यते" इति क्वचित् पाठः प्रामादिकः ।

५ "दूतेयम्" इति विश्लेषेण केवला च गायत्री भवति ।

६ "अग्ने तुवम्" इति विश्लेषेण केवला गायत्री ।

[घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह ॥
अग्ने । त्वम् । रक्षस्विनः ॥ ५ ॥]

यस्य ते सुघृतं हविः । रिषतो नाशकान् रक्षोजनान् प्रतिदहैव च ॥ २७१ ॥ * ॥

[विराड्गायत्री[१]]

(११६) अग्निनाग्निस्समिद्ध्यतेकविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ॥ ६ ॥[॥ २२ ॥]

[अग्निना । अग्निः । सम् । इद्ध्यते । कविः । गृहऽपतिः । युवा ॥
हव्यऽवाट् । जुहुऽआस्यः ॥ ६ ॥ २२ ॥]

यस्याऽस्ये हूयते सोऽग्निः परेशेन समिद्ध्यते । अथवाऽऽहवनीयोऽग्निर्मथितेन[२] समिद्ध्यते ॥
॥ २७२ ॥ * ॥

(११७) कविमग्निमुपस्तुहिसत्यधर्माणमध्वरे । देवममीवचातनम् ॥ ७ ॥

[कविम् । अग्निम् । उप । स्तुहि । सत्यऽधर्माणम् । अध्वरे ॥
देवम् । अमीवऽचातनम् ॥ ७ ॥]

सत्यधर्मा सद्गुणभृद् दुःखघ्नोऽमीवचातनः । चातनं कालनं वा स्यात् ॥ * ॥

(११८) यस्त्वामग्नेहविष्पतिर्दूतन्देवसपर्यति । तस्यस्माप्राविताभव ॥ ८ ॥

[यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्यति ॥
तस्य । स्म । प्रऽअविता । भव ॥ ८ ॥]

---

१ "हवियवाड् जुहुवास्यः" इति "हव्यवाड् जुहुवासियः" इति वा विश्लेषेण केवला गायत्री । अत्र मन्त्रे प्रथमपादे गार्हपत्य आहवनीयश्च देवते इत्यनुक्रमणिका । तथाहि तद्वचनम्—"अग्निं द्वादश, मेधातिथिः काण्वः, आग्नेयम्, अग्निनेति पादो द्व्यग्निदैवतो निर्मथ्य आहवनीयश्च" इति ।

२ आहवनीयोऽग्निः मथितेन गार्हपत्येन सह समिद्ध्यते । सहयोगे तृतीया । आहवनीयः गार्हपत्यश्च समिद्ध्येते इति निर्गळितम् । अत एव द्व्यग्निदैवतः ।

(११९) योअग्निन्देववीतयेहविष्माँआविवासति । तस्मैपावकमृळय ॥ ९ ॥

[यः । अग्निम् । देवऽवीतये । हविष्मान् । आऽविवासति ॥
तस्मै । पावक । मृळय ॥ ९ ॥]

देववीतिस्तु[1] तद्गतिः ॥ २७३ ॥ आवासयति[2] यस्त्वां च तं त्वं मृळय सर्वदा ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[3]]

(१२०) सनःपावकदीदिवोग्नेदेवाँइहावह । उपयज्ञंहविश्चनः ॥ १० ॥

[सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह । आ । वह ॥
उप । यज्ञम् । हविः । च । नः ॥ १० ॥]

त्वत्पूजाविषये[4] देवानावहेन्द्रियमानिनः ॥ २७४ ॥ * ॥

(१२१) सनस्स्तवानआभरगायत्रेणनवीयसा । रयिंवीरवतीमिषम् ॥ ११ ॥

[सः । नः । स्तवानः । आ । भर । गायत्रेण । नवीयसा ॥
रयिम् । वीरऽवतीम् । इषम् ॥ ११ ॥]

गायत्रेण स्तूयमानो दृश्यमानेन नो रयिम् । पुत्रयुक्तामिषं चैव वीर्ययुक्तामथाऽवह ॥ २७५ ॥ * ॥

(१२२) अग्नेशुक्रेणशोचिषाविश्वाभिर्देवहूतिभिः । इमंस्तोमञ्जुषस्वनः ॥ १२ ॥ [॥ २३ ॥]

---

१ देवानां वीतिरिति तत्पुरुषे पूर्वपदप्रकृतिस्वरत्वं बाहुलकात्स्यात् । अत एव "पूर्वान्तश्चापि दृश्यते" इति वार्तिकम् । तथाचात्र "मन्क्तिन्—" इत्यादिना परान्तोदात्तत्वे प्राप्ते व्यत्ययेन पूर्वान्तोदात्तत्वमिति ।

२ निघण्टुस्तु "ऋच्छति । सपति । विवासति" (३.५.) इति परिचरणकर्मसु पठति ।

३ "दीदिवोअग्ने" इति पादसन्धिव्यूहेन केवला गायत्री ।

४ "त्वं पूजाविषये" इति क्वचित् ।

[अग्ने । शुक्रेण । शोचिषा । विश्वाभिः । देवहूतिऽभिः ॥
इमम् । स्तोमम् । जुषस्व । नः ॥ १२ ॥ [॥ २३ ॥]

[इति द्वादशं सूक्तम्]

ज्वलता तेजसा विश्वदेवाह्वानैर्वृणु स्तुतिम् ॥ * ॥ * ॥

—१३—

[आप्रीसूक्तम्[1]]

[सुसमिद्धो द्वादश, मेधातिथिः काण्वः, गायत्री, षड्जः।]

[१–[2]इध्मः, (सुसमिद्धोऽग्निः)]

(१२३) सुसमिद्धोनआवहदेवाँअग्नेहविष्मते । होतःपावकयक्षिच ॥ १ ॥

[सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते ॥
होतरिति । पावक । यक्षि । च ॥ १ ॥

असमद्धविष्मते देवानाहूय यज चाऽदरात् ॥ २७६ ॥ * ॥

---

१ याभिः ऋग्भिः पठिताभिरग्निगो भगवानतितरां प्रीणाति ता आप्रियः। "आप्रियः कस्मात्? आप्नोतेः प्रीणातेर्वा" इति यास्कः। "आप्रीभिराप्रीणाति" इत्यैतरेयब्राह्मणम्। तासामाप्रीणामिदंसूक्तं भवति। यज्ञाङ्गभूतान् देवताभेदान् प्रत्यृचं प्रतिपादयन्त्यस्ता आप्रियो भवन्ति। ताश्च देवता निघण्टौ पठिता यथा—"इध्मः। तनूनपात्। नराशंसः। इळः। बर्हिः। द्वारः (देवीः)। उषासानक्ता। दैव्या होतारा। तिस्रो देवीः। त्वष्टा। वनस्पतिः। स्वाहा(कृतयः)" (५. १.) इति। का इमा देवताः? भौतिकान्येव समिदाज्यादीनीति कात्थक्यप्रमुखा नैरुक्ताः। तासु कानिचन अग्निरूपाणीति शाकपूणिप्रभृतयः। द्वादशाप्यग्नेरेव रूपान्तराणीति सायणः। तासु कानिचिदग्निरूपाणि, अपरा अन्या इति तु स्वपक्षः। तच्च प्रतिमन्त्रं वक्ष्यते।

२ इध्म इति का देवता? यज्ञेध्म इति कात्थक्यः। न युक्तं तत्। इध्मस्य जडत्वात्। अग्निरिति शाकपूणिः। ननु कथमिदम्? प्रत्यृचं भिन्नदेवताकत्वविरोधात्। न विरुध्यते। यतोऽत्र मन्त्रे इध्मगतः इध्ममानी इध्मनामा सुसमिद्धोऽग्निर्देवता। अभिमानभेदेन देवतानां नामरूपयोरपि भेदो भवति। अतो न मन्त्रेषु देवतासाङ्कर्यम्।

[२–तनूनपात्[1] अग्निः]

(१२४) मधुमन्तन्तनूनपाद्यज्ञन्देवेषुनःकवे । अद्याकृणुहिवीतये ॥ २ ॥

[मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे ॥
अद्य । कृणुहि । वीतये ॥ २ ॥]

**तनूभ्यो वाक् ततो देवो ज्ञेयस्तेन[2] तनूनपात् ॥ * ॥**

[३–नराशंसोऽग्निर्देवता[3]]

(१२५) नराशंसमिहप्रियमस्मिन्यज्ञउपह्वये । मधुजिह्वंहविष्कृतम् ॥ ३ ॥

[नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये ॥
मधुऽजिह्वम् । हविःऽकृतम् ॥ ३ ॥]

**नरैः स्तुत्यो नराशंसो वह्नेरन्याऽथवा तनूः ॥ २७७ ॥ * ॥**

[४–(इळः[4] (ईळितोऽग्निर्देवता)]

(१२६) अग्नेसुखतमेरथेदेवाँईळितआवह । असिहोतामनुर्हितः ॥ ४ ॥

---

१ अथ तनूनपादिति का देवता? आज्यमित्येके । "नपादित्यनन्तरायाः प्रजाया नामधेयम् । गौरत्र तनूरुच्यते । तस्याः पयो जायते । पयस आज्यं जायते" इति च निरुक्तिमाहुः । न युक्तं तत् । आज्यस्य जडत्वात् । अग्निरिति शाकपूणिः । "आपोऽत्र तन्व उच्यन्ते । तता अन्तरिक्षे । ताभ्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्य एष जायते" इति च निरुक्तिमाहुः । ननु कथमिदम्? इध्मपदेन साङ्कर्यात् । अत एव निरुक्त्यन्तरमगादि– "तनूभ्यो वाक् ततो देवो ज्ञेयस्तेन तनूनपात्" इति । मुख्यं चैतद् भगवति । यथासम्भवमग्नौ च । तथाच "समिधो यजति, तनूनपातं यजति" इत्यादिब्राह्मणवाक्यात् आज्यगतः आज्यमानी तनूनपान्नामाऽग्निर्देवता इति स्वपक्षः । तनूनपं घृतं अत्ति अभिमानितया नियामयति, आहुतिरूपेण दत्तं भक्षयति चेत्यतश्च हि तनूनपादग्निविशेषः प्रसिद्धः । समिद्भिरिन्धनाद् बाह्योऽग्निरिध्मः प्रथममन्त्रोक्तः । तनूं न पातयतीति देहधारको जाठरोऽग्निर्द्वितीय इति च । "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति हि श्रूयते । तेन च भगवांस्तनूनपात् ।

२ "व्यक्तस्तेन" इति प्र. पाठः ।

३ नराशंस इति का देवता? "नराशंसो यज्ञः" इति कात्थक्यः । नरा अस्मिन् आसीनाः शंसन्तीति । अग्निरिति शाकपूणिः । नरैर्हि स प्रशस्यो भवति । यज्ञमानी नराशंसनामाऽग्निर्देवता इति तु स्वपक्षः ।

४ इड इति का देवताः? इडित्यन्नस्य नाम । अन्नानि तर्हि स्युः । न, जडत्वात् । अन्नमानी अन्नगतोऽग्निस्तर्हि

[अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह ॥
असि । होता । मनुःऽहितः ॥ ४ ॥]

मनूनां च हितत्वेन मनुर्हित[1] इतीरितः ॥ * ॥

[५—बर्हिर्देवता[2] ।]

(१२७) स्तृणीतबर्हिरानुषग्घृतपृष्ठम्मनीषिणः । यत्रामृतस्यचक्षणम् ॥ ५ ॥

[स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः ॥
यत्र । अमृतस्य । चक्षणम् ॥ ५ ॥]

आनुषक् सर्वतो देवस्थानं बर्हिः स्तृणीत च ॥ २७८ ॥ शुद्धस्य विष्णोर्यत् स्थानं घृतपृष्ठं हि तन्मनः । यत्र स्याद् दर्शनं विष्णोर्नित्यामरणधर्मिणः ॥ २७९ ॥ * ॥

[६—श्रियो दास्यः द्वारो देव्यो[3] देवताः ।]

(१२८) विश्रयन्तामृतावृधोद्वारोदेवीरसश्चतः । अद्यानूनञ्चयष्टवे ॥ ६ ॥ [॥ २४ ॥]

[वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः । असश्चतः ॥
अद्य । नूनम् । च । यष्टवे ॥ ६ ॥ २४ ॥]

---

इडित्युच्यते । बहुरूपत्वादिड इति बहुवचनम् । ईड्यत्वादिडिति श्रुतिरेव निरवोचत् । इड एव इळ इत्युच्यन्ते बह्वृचैः ।

१ मनुर्भ्यः देवेभ्यः हितः मनुर्हितः इति चतुर्थीसमासः । भाष्ये तु तात्पर्यकथनम् । न विग्रहप्रदर्शनम् । अत एव मनुर्हित इत्याद्युदात्तं पदं भवति । "क्ते च" इति पाणिनिना क्तयोगे चतुर्थ्यन्तस्य प्रकृतिस्वराभिधानात् । षष्ठीसमासे तु "थाथघञ्क्ताजबित्रकाणाम्" इति पदमन्तोदात्तं स्यात् । स्वरसा चात्र चतुर्थी । हितयोगात् ।

२ बर्हिरिति का देवता? बर्हिरेवेत्येके । अग्निरित्यपरे । बर्हिषि गतः, बर्हिर्मानी बर्हिर्नामा चाग्निर्देवतेति स्वपक्षः ।

३ द्वारो देव्य इति का देवताः । यज्ञशालाया द्वार एवेति कात्थक्यः । अग्निरिति शाकपूणिः । "द्वारमानिन्योऽग्निविशेषमूर्तयः" इति सायणः । न तावत् प्रथमः । द्वारां जडत्वात् । न द्वितीयतृतीये । स्त्रीलिङ्गप्रयोगे विशेषहेत्वदर्शनात् । यज्ञशालाद्वारमानिन्यः श्रियो दास्यः स्त्रीदेवता एव द्वारो देव्य इति स्वपक्षः । द्वारः द्वार-

**ऋतरूपेण हरिणा समृद्धा या ऋतावृधः । द्वारो देव्यः श्रियो दास्यः श्रयन्तामिह नो मखे ॥२८०॥ मानसे बाह्ययज्ञे वा ह्यसङ्गत्वादसश्चतः । अद्याहनि तथा नूनमद्यैव यजनार्थतः ॥ २८१ ॥ द्वारभूतः स भगवानपि साक्षान्मुमुक्षतः । स्त्रीरूपश्च सः ॥ * ॥**

[७-८ पिपीलिकामध्या निचृद् गायत्री[1]]

[७-[2]नक्ता (दुर्गा), उषाश्च देवते ।]

(१२९) नक्तोषासासुपेशसास्मिन्यज्ञउपह्वये । इदन्नोबर्हिरासदे ॥ ७ ॥

[नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये ॥
इदम् । नः । बर्हिः । आऽसदे ॥ ७ ॥]

**नक्ता[3] स्याद्गाक्तो यस्मात् स सर्वतः । उषाः प्रकाशरूपत्वात् सुभद्रे[4] ते उपह्वये ॥ २८२ ॥ अस्मिन् बर्हिषि संस्थित्यै ॥ * ॥**

[८-दैव्यौ होतारौ[5] गार्हपत्याहवनीयौ देवते ।]

(१३०) तासुजिह्वाउपह्वयेहोतारादैव्याकवी । यज्ञन्नोयक्षतामिमम् ॥ ८ ॥

---

भूता उपसर्जनभूताः । श्रिय इत्युपस्कारः । तथा द्वारः द्वारस्य यज्ञगृहस्येत्युपस्कारः देव्योऽभिमानिन्यः । पञ्चरूपोऽग्निः स्तुतः । इदानीं द्वारदेवताः प्रस्तूयन्ते ।

१ "सुपेशसाअस्मिन्" इति विश्लेषेण केवला च गायत्री । उत्तरमन्त्रे च "होतारा दैविया कवी" इति विश्लेषेण ।

२ नक्तोषसा इति के देवते? काल एवेति केचित् । अग्निरूपे एवेति सायणादयः । रात्रिसूक्तप्रतिपाद्या रात्रिदेवता दुर्गैव नक्ता, उषोऽभिमानिनौ ब्रह्मवायू अश्विनोर्भार्या चोषा इति स्वपक्षः । तथाहि च्छन्दोगभाष्ये (३.१.)—"एकत्रिंशत्तु घटिकाः साधिका वसुदैवताः । तदर्द्धा रुद्रदैवत्यास्तत आदित्यदैवताः । तदर्द्धा मारुता ब्राह्मास्तदर्द्धा देशतस्तथा" इति । तदेवं देवानां मुखमग्निस्तत्तत्साधनसन्निधिभेदात् पञ्चधा प्रपञ्चितः । भगवांश्च पञ्चरूपः । षष्ठ्या चर्चा यज्ञशाला रक्षिता । देशतः सुरक्षणे सम्पन्न इदानीं कालतोऽपि सुरक्षितत्वाय कालाभिमानिन्यौ प्रार्थ्येते भगवांश्च तत्तद्गत इति ।

३ "नक्तः" इति क्वचित् ।

४ "पिष्टम् । पेशः । कृशनम्" (३.७.) इति रूपनामसु निघण्टुः । तेन सुपेशसा सुभद्रे सुरूपे इति यावत् ।

५ दैव्यौ होतारौ इति के देवते? अग्निरेवेति सर्वेषामैककण्ठ्यम् । "अग्निर्वै देवानां होता" इति श्रूयते । द्विवचनेन द्विरूप उच्यते गार्हपत्य आहवनीयश्च । तावेतावग्नी एकयोक्त्या "प्रचेतसौ" इत्युच्यन्ते । "दैव्यौ होतारौ प्रचेतसौ" इत्यनुक्रमणिका । तदेवं सप्तभिः परिकरपूर्ताविदानीमष्टमयर्चा प्रधानाग्नी प्रस्तूयेते । जामदग्न्यश्च भगवानात्मान्तरात्मरूपेण द्विविधः ।

[ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवीइति ॥
यज्ञम् । नः । यक्षताम् । इमम् ॥ ८ ॥]

**होतारौ देवगावपि । मध्यमानोऽपरश्चैव वह्नी तद्गोऽथवा हरिः ॥ २८३ ॥ आत्मान्तरात्मरूपेण द्विरूपो वा व्यवस्थितः । देवेषु यजतां[1] यज्ञमस्मदीयमिमं सदा ॥ २८४ ॥ * ॥**

[९–निचृद्गायत्री[2]]

[९–इळा (श्रीः), मही (भूः, भारती च), सरस्वती च देवताः[3] ।]

(१३१) इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः । बर्हिस्सीदन्त्वस्रिधः ॥ ९ ॥

[इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ॥
बर्हिः । सीदन्तु । अस्रिधः ॥ ९ ॥]

**इळेड्यत्वाद्धरिः श्रीर्वा भूरूपा सैव चापरा[4] । मही तु भारती नाम वायव्या ब्रह्मणोऽपरा । तद्गतस्तादृशै रूपैः पृथक्स्थो वा हरिस्तथा ॥ २८५ ॥ * ॥**

---

१ "यज देवार्चादानसङ्गतौ" इति वोपदेवः । अत्र तु दानार्थः । देवेषु प्रयच्छतु । "देवेषु यक्षताम्" इति च क्वचित् पठ्यते ।

२ "सीदन्तुवस्रिधः" इति विश्लेषेण केवला च गायत्री ।

३ तिस्रो देवीरिति का देवताः? इळा सरस्वती भारती च । तथा चानुक्रमणिकायाम्—"तिस्रो देव्य इळासरस्वतीभारत्यः" इति । अत्र च भारती महीतिपदेनोक्ता । अग्नेरेव रूपाण्येतन्नामानीति सर्वमग्निमयं सायणस्य । उपक्रान्ते यज्ञे सुसम्पन्ने तस्य सौमनस्याय वाग्देवताः प्रस्तूयन्ते इति स्वपक्षः । ताश्च—श्रीर्भूरिति द्विरूपा लक्ष्मीः, सरस्वती भारती च । अत्र महीपदेन भूरपि । श्रीर्भूरितिभेदभिन्ना लक्ष्मीरेकैवेति न त्रित्वभङ्गः । उपरिष्टाच्च यत्रक्व च आप्रीसूक्ते महीति न पठ्यते, अपितु भारतीत्येव पठ्यते, "भारतीळे सरस्वति या वः सर्वा उपब्रुवे" (१.१८८.८.) इत्यादिषु, तत्रेळाशब्देनैव श्रीभुवोर्ग्रहणम् । क्वचित्तु चतसृणामपि देवीनां प्रत्येकमपि निर्देशो दृश्यते—"शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती । इळा सरस्वती मही बर्हिः सीदन्तु यज्ञियाः" (१.१४२.९.), "भारती पवमानस्य सरस्वतीळा मही" (९.५.८.) इत्यादिषु । तथाचैवं व्यवस्था—यत्र भारतीपदं न पठ्यते तत्र महीपदेन भूभारत्योर्ग्रहणम् । यत्र च न महीपदम्, तत्रेळापदेन श्रीभुवोर्ग्रहणम् । यत्र चोभे अपि पठ्येते तत्र प्रत्येकं चतसृणां ग्रहणमिति । तदेवं श्रीर्भूर्दुर्गा, ब्रह्मवायू, सरस्वती, भारती चेति परशुक्लत्रयं प्रस्तुतं भवति ।

४ "भूरूपा चैव साऽपरा" इति क्वचित् ।

[१०–त्वष्टा देवता[1]]

(१३२) इहत्वष्टारमग्रियंविश्वरूपमुपह्वये । अस्माकमस्तुकेवलः ॥ १० ॥

[इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप । ह्वये ॥
अस्माकम् । अस्तु । केवलः ॥ १० ॥]

**त्वष्टा तेजस्त्वतो विष्णुर्बलत्वाद् वा समीरितः । विश्वरूपकरत्वाच्च विश्वरूपोऽथ पूर्तितः ॥ २८६ ॥ * ॥**

[११–१२, पिपीलिकामध्या निचृद्गायत्री[2]]
[११–[3]वनस्पतिर्देवता]

(१३३) अवसृजावनस्पतेदेवदेवेभ्योहविः । प्रदातुरस्तुचेतनम् ॥ ११ ॥

[अव । सृज । वनस्पते । देव । देवेभ्यः । हविः ॥
प्र । दातुः । अस्तु । चेतनम् ॥ ११ ॥]

**वननीयपतित्वेन वनस्पतिरितीरितः । ज्ञानं तु चेतनम्[4] ॥ * ॥**

---

१ त्वष्टेति का देवता? अग्निरिति शाकपूणिः । नैतद् युक्तम् । "अग्निस्तु देवता नेष्टुस्त्वष्टा वा" इति भेदेन तयोर्वक्ष्यमाणत्वात् । कश्चात्र स्वपक्षः । प्रसिद्धस्त्वष्टैव त्वष्टेति । परित्यागे कारणादर्शनात् । तथाहि पठ्यते त्वष्टा नामाऽदित्येषु— "एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते" इत्यादि । "विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु" (ऋ.१०.१८४.१.) इति विश्वरूपत्वं च त्वष्टुः श्रूयते । विश्वरूपस्य पिता च त्वष्टा देवपुरोधाः कश्चिद् यजुर्वेदेषु पठ्यते । सङ्कर्षणो भगवांश्च त्वष्टा । "त्वेषात् त्वष्टा द्वितीयकः" इति, "रूपं सङ्कर्षणाद् भवेत्" इति च वचनात् ।

२ "देवेभियोहविः" इति विश्लेषेण केवला च गायत्री ।

३ वनस्पतिरिति का देवता? यूप इति कात्थक्यः । अग्निरिति शाकपूणिः । कः स्वपक्षः? यूपगतः यूपमानी वनस्पतिनामा देवता । का देवता? अग्निर्वा स्यात् । "सोमाय वनस्पतये" इत्यादि श्रवणात् सोमो वा स्यात् । अन्योऽपि वा स्यात् । विशिष्यानाख्यानात् । अभिमानिव्यपदेश इतीयांस्तु निर्णयस्य पन्थाः । नृसिंहो वनस्पतिदेवता । "नृसिंहाख्यः स आरण्याश्रयो मतः" इति, "कक्षश्वभ्रे नृसिंहस्य" इति च वचनात् ।

४ "चेतना" इति क्वचित् पाठः प्रामादिकः । चेतनमित्येव प्रतीकग्रहणौचित्यात् ।

[१२–स्वाहा देवी[1] देवता]

(१३४) स्वाहायज्ञङ्कृणोतनेन्द्राययज्वनोगृहे । तत्रदेवाँउपह्वये ॥ १२ ॥ [॥ २५ ॥]

[स्वाहा । यज्ञम् । कृणोतन । इन्द्राय । यज्वनः । गृहे ॥
तत्र । देवान् । उप । ह्वये ॥ १२ ॥ २५ ॥]

[इति त्रयोदशं सूक्तम्]

**स्वाहा स्वभागगतिमान् स्मृतः[2] ॥ २८७ ॥ अव्ययत्वादमोषश्च[3] ॥ * ॥ * ॥**

—१४—

[ऐभिरग्ने द्वादश, मेधातिथिः काण्वः, गायत्री, विश्वदेवाः[4], षड्जः ।]

(१३५) ऐभिरग्नेदुवोगिरोविश्वेभिस्सोमपीतये । देवेभिर्याहियक्षिच ॥ १ ॥

[आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये ॥
देवेभिः । याहि । यक्षि । च ॥ १ ॥]

**कामदोहाद् दुवः स्मृताः ॥ * ॥**

---

१ स्वाहादेवीति का देवता? स्वाहाकृतय इत्यनुक्रमणिका । अग्निरूपाणि तथेति सायणः । कः स्वपक्षः? प्रसिद्धा स्वाहैव स्वाहेति भाति । "नचाविरोधे प्रसिद्धः परित्यज्यते" इति न्यायात् । तेन चाग्निभार्या स्वाहैवात्र स्वाहेति स्यात् । अत एव मध्यमपुरुष एव तनबादेशस्य वैयाकरणसम्मतत्वेऽपि 'स्वाहा देवी कृणोतन करोतु' इति व्यत्ययेन व्याकुर्वता टीकाकृताऽपीदमभ्यनुज्ञातमिति गम्यते । तदिमा आप्रियः । निखिले चर्ग्वेदे एवमाहत्य दश आप्रीसूक्तानि पठ्यन्ते । प्रथममण्डले त्रीणि सूक्तानि (१३, १४२ तथा १८८) । द्वितीय एकम् (३) । तृतीये चैकम् (४) । तथा पञ्चमे (५) सप्तमे(२) नवमे(५) चैकैकम् । दशमे च द्वे सूक्ते (७० तथा ११०) इति । अयं तु विशेषः—आभिर्द्वादशभिर्देवताभिः सह क्वचिदिन्द्रोऽपि त्रयोदशः पठ्यते । यथा प्रथममण्डले १४२तमे सूक्ते । क्वचिदेकादशैव विना नराशंसम् । यथा प्रथममण्डले १८८तमे सूक्ते, तृतीये चतुर्थसूक्ते नवमे च पञ्चमे सूक्ते, दशमे च ११०तमे सूक्ते । क्वचिच्च विना तनूनपातमेकादश पठ्यन्ते । यथा द्वितीयमण्डले तृतीयसूक्ते, पञ्चमे पञ्चमसूक्ते, सप्तमे द्वितीये, दशमे च सप्ततितम इति ।

२ "[illegible]" इति क्वचित् । ३ "—[illegible]" इति क्वचित् ।

४ विश्वे देवा इति सर्वदेवाः । नतु देवतागणविशेषः ।

(१३६) आत्वाकण्वाअहूषतगृणन्तिविप्रतेधियः । देवेभिरग्नआगहि ॥ २ ॥

[आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः ॥
देवेभिः । अग्ने । आ । गहि ॥ २ ॥]

(१३७) इन्द्रवायूबृहस्पतिम्मित्राग्निम्पूषणम्भगम् । आदित्यान्मारुतङ्गणम् ॥ ३ ॥

[इन्द्रवायूइति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ॥
आदित्यान् । मारुतम् । गणम् ॥ ३ ॥]

बृहन् पतिर्बृहत्या वा वाच एव बृहस्पतिः ॥ २८८ ॥ मित्रेति मित्रावरुणौ पूषा नाम स पोषणात् । पूर्णत्वाद् वा भगः प्रोक्तः पूर्णैश्वर्यादिकत्वतः ॥ २८९ ॥ आदिस्थत्वात् स आदित्य आददानः प्रयाति वा । बहुरूपत्वतश्चैव मानोक्तत्वात् स[1] मारुतः ॥ २९० ॥ * ॥

(१३८) प्रवोभ्रियन्तइन्दवोमत्सरामादयिष्णवः । द्रप्सामध्वश्चमूषदः ॥ ४ ॥

[प्र । वः । भ्रियन्ते । इन्दवः । मत्सराः । मादयिष्णवः ॥
द्रप्साः । मध्वः । चमूऽसदः ॥ ४ ॥]

मत्सरा मदकारित्वात् ताच्छील्यादुत्तरं पदम् । द्रप्सास्ते[2] द्रवणाच्चैव चमसस्थाश्चमूषदः । शिरश्च चमसं[3] प्रोक्तमिष्टदानात् तथेन्दवः[4] ॥ २९१ ॥ * ॥

(१३९) ईळतेत्वामवस्यवःकण्वासोवृक्तबर्हिषः । हविष्मन्तोअरङ्कृतः ॥ ५ ॥

---

१ "मानोक्तत्वात्तु मारुतः" इति च पाठः ।

२ "द्रप्सास्तु" इति क्वचित् । ३ "चमसः" इति क्वचित् ।

४ नव्या वैयाकरणास्तु "उन्देरिच्चाऽदेः" इत्युणादिसूत्रात् 'उन्दी क्लेदने' इति क्लेदनार्थकादुन्दीधातोरिन्दुशब्दं निष्पादयन्ति । इष्टं ददत इतीन्दव इत्याचार्यसम्मतोऽर्थः । यास्कोऽप्याह—"अक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव न निर्ब्रूयात्" इति ।

[ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः ॥
हविष्मन्तः । अरम्ऽकृतः ॥ ५ ॥]

अवस्युर्यजमानः स्यादवनार्थप्रवृत्तितः । आत्मस्थं वा बहुवचो बहवो मुनयोऽत्र वा[1] ॥ २९२ ॥
उत्तराणां वचस्त्वेन स्वयं वदति चेश्वरः । अरङ्कृतोऽतिकर्तारस्त्वलङ्कर्तार एव वा ॥ २९३ ॥ * ॥

(१४०) घृतपृष्ठामनोयुजोयेत्वावहन्तिवह्नयः । आदेवान्त्सोमपीतये ॥ ६ ॥ [॥ २६ ॥]

[घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः ॥
आ । देवान् । सोमऽपीतये ॥ ६ ॥ २६ ॥]

स्निग्धपृष्ठाः समारूढा हरिणा वा विदोषिणा । मनोमात्रेण योज्याश्च त्वां देवांश्चाऽवहन्ति[2] ये ॥ २९४ ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[3]]

(१४१) तान्यजत्राँऋतावृधोग्नेपत्नीवतस्कृधि । मध्वस्सुजिह्वपायय ॥ ७ ॥

[तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि ॥
मध्वः । सुऽजिह्व । पायय ॥ ७ ॥]

तैर्देवान् यजतः स्तोतॄन् ज्ञातेन[4] ब्रह्मणेधितान्[5] । पत्नीभिर्योजयाऽगन्तुं सह मध्वश्च पायय ॥ ॥ २९५ ॥ * ॥

[निचृद्गायत्री[6]]

(१४२) येयजत्रायईड्यास्तेतेपिबन्तुजिह्वया । मधोरग्नेवषट्कृति ॥ ८ ॥

---

१ कण्वाः कण्वगोत्रोद्भवा इत्याचार्याः । निघण्टुस्तु "धीरः । वेनः । वेधाः । कण्वः" (३. १५.) इति मेधाविनामसु पठति ।

२ "देवांश्च वहन्ति" इति प्र. पाठः ।

३ "ऋतावृधोअग्ने" इति विश्लेषेण केवलगायत्रीत्वम् ।

४ "ज्ञानेन" इति क्वचित् पाठः । ५ "ब्रह्मणैधितान्" इति प्र. पाठः ।

६ "यईडियाः" इति विश्लेषेण केवलगायत्रीत्वम् ।

[ये । यजत्राः । ये । ईड्याः । ते । ते । पिबन्तु । जिह्वया ॥
मधोः । अग्ने । वषट्ऽकृति ॥ ८ ॥]

ते षष्ठ्यतोऽनुदात्तः[1] स्यादुदात्तो बहुवाचकः । आवृत्तस्तु भवत्यर्थस्ते[2] पिबन्तु वषट्कृतौ ॥ २९६ ॥ * ॥

(१४३) आकींसूर्यस्यरोचनाद्विश्वान्देवाँउषर्बुधः । विप्रोहोतेहवक्षति ॥ ९ ॥

[आकीम् । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः ॥
विप्रः । होता । इह । वक्षति ॥ ९ ॥]

सूर्यस्य रोचनात् स्वर्गाद्वा वक्षत्यग्निरिन्दुपान्[3] । उषः प्रकाशनाद् ब्रह्म तद्विदस्त उषर्बुधः ॥ * ॥

[१०–११ विराड्गायत्री[4]]

(१४४) विश्वेभिस्सोम्यम्मध्वग्नइन्द्रेणवायुना । पिबामित्रस्यधामभिः ॥ १० ॥

---

१ "षष्ठ्यर्थोऽनुदात्तः" इति "षष्ठ्यर्थेऽनुदात्तः" इति च कचित् । "षष्ठ्यन्तोऽनुदात्तः" इति प्र. पाठः । "षष्ठ्यतोऽनुदात्तः" इत्येव सङ्गतष्टीकादिसम्मतश्च पाठः । तथाहि टीका—'द्वितीयस्तेशब्दः षष्ठी । अत एव ह्यनुदात्तः स्वरः स्यात्' इति । अयमर्थः— यदि द्वितीयस्ते इति बच्छब्दरूपं तेते इति वीप्सा च स्यात् तर्हि पदपाठे तेते इति संहितापाठ इव स्वरितस्वर एव प्रसज्येत । "तस्य परमाम्रेडितमनुदात्तं च" इति आवृत्तस्यानुदात्तस्वरे प्राप्ते "उदात्तादनुदात्तस्य" इति स्वरितप्रसक्तेः । नच स्वरितस्वरः श्रूयते । किन्त्वनुदात्त एव । तेन ज्ञायते ते इति भिन्नं पदं षष्ठ्यन्तं चेति । तेन भिन्नपदत्वे सत्यनुदात्तत्वं षष्ठीत्वप्रयोजकम् । अनुदात्तत्वमात्रं वीप्सायां द्वितीयतच्छब्देऽपि गतम् । भिन्नपदत्वमात्रं तु प्रथमतेशब्देऽपि समानमिति अव्याप्तिः स्यात् । ते इति भिन्नं पदमिति तु पदपाठसिद्धम् । अथाप्यनुदात्तः पठ्यते । तेन ज्ञायते तें इति षष्ठीति । अथवा अनुदात्तत्वम् षष्ठीत्येव पर्याप्तम् । भिन्नपदत्वे सतीति न निवेश्यम् । ऐकपद्ये स्वरितप्राप्त्या अनुदात्तत्व[illegible]त् । यतः षष्ठी अतोऽनुदात्तः इति यथाश्रुतान्वये षष्ठीत्वादनुदात्तः इत्यप्यर्थः शक्यते कर्तुम् । सोऽपि सङ्गत एव ।

२ "भवेदर्थस्ते" इति प्र. पाठः ।

३ कचित् कोशेषु "इन्दुवान्" इति पाठः प्रामादिकः ।

४ "सोमियं मधुवग्ने" इति विश्लेषेण केवला च गायत्री । उत्तरमन्त्रे च "तुवंहोता" इति, "हितो अग्ने" इति च विश्लेषेण ।

[विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना ॥
पिब । मित्रस्य । धामऽभिः ॥ १० ॥]

देवास्ते विष्णुधामत्वान्मित्रधामान[1] ईरिताः ॥ २९७ ॥ * ॥

(१४५) त्वंहोतामनुर्हितोग्नेयज्ञेषुसीदसि । सेमन्नोअध्वरंयज ॥ ११ ॥

[त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि ॥
सः । इमम् । नः । अध्वरम् । यज ॥ ११ ॥]

[निचृद्गायत्री[2]]

(१४६) युक्ष्वाह्यरुषीरथेहरितोदेवरोहितः । ताभिर्देवाँइहावह ॥ १२ ॥ [॥ २७ ॥]

[युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः ॥
ताभिः । देवान् । इह । आ । वह ॥ १२ ॥ २७ ॥]

[इति चतुर्दशं सूक्तम्]

अग्निवाहा अश्वतर्यो दूर्वापद्माग्निसप्रभाः । लोहिताः क्वचिदश्वाश्च रोहिन्मृग्योऽपि[3] कुत्रचित् ॥ २९८ ॥ * ॥ * ॥

---

१ एतेन धामशब्दः पुंलिङ्गेऽप्यस्तीति गम्यते । "लिङ्गमशिष्यम्" इति हि वदन्ति । तथा च कर्मशब्दवदिदं द्रष्टव्यम् । तद्यथा कर्मशब्दः पुंलिङ्गेऽप्यस्ति नपुंसकत्वमेव च प्रायः प्रयोगेषु । तथाहि रुद्रोऽवादीत्—"कर्मव्याप्ये क्रियायां च पुन्नपुंसकयोर्मतम्" इति । तद्वदयं धामशब्दः ।

२ इयमपि "युक्षुवा" इति विश्लेषेण भवति केवला गायत्री ।

३ तथाहि निघण्टुः—"रोहितोऽग्नेः" (१. १५.) इति । रोहिदिति हरिणीविशेष उच्यते । "रोहिच्छब्दाभिधेया वडवाः" इति सायणव्याख्यानं त्वनादरणीयमेव । प्रमाणाभावात्, प्रमाणविरोधाच्च । "रोहिन्मृग्यां लताभेदे स्त्री" इति मेदिनी ।

— १५ —

[इन्द्रसोमं द्वादश, मेधातिथिः काण्वः, गायत्री, षड्जः।]

[१–पिपीलिकामध्या निचृद्गायत्री[१]]

[१–ऋतवः (कालाभिमानिदेवताः), इन्द्रश्च देवताः]

(१४७) इन्द्रसोमम्पिबऋतुनात्वाविशन्त्विन्दवः। मत्सरासस्तदोकसः॥ १॥

[इन्द्र। सोमम्। पिब। ऋतुना। आ। त्वा। विशन्तु। इन्दवः॥
मत्सरासः। तत्ऽओकसः॥ १॥]

[२–भुरिग्गायत्री[२]]

[२–ऋतवः, मरुतश्च देवताः]

(१४८) मरुतःपिबतऋतुनापोत्राद्यज्ञम्पुनीतन। यूयंहिष्ठासुदानवः॥ २॥

[मरुतः। पिबत। ऋतुना। पोत्रात्। यज्ञम्। पुनीतन॥
यूयम्। हि। स्थ। सुऽदानवः[३]॥ २॥]

[३–ऋतवः, नेष्टा च (विष्णुरिन्द्रोऽग्निस्त्वष्टा[४] च) देवताः]

(१४९) अभियज्ञङ्गृणीहिनोग्नावोनेष्टःपिबऋतुना। त्वंहिरत्नधाअसि॥ ३॥

---

१ अत्र "तुवा विशन्त्विन्दवः" इति वा, "त्वाविशन्तुविन्दवः" इति वा विश्लेषेण केवलगायत्रीत्वम्। अथवा "पिबर्तुना" इति प्रश्लेषेण प्रथमपादस्याष्टाक्षरत्वमादौ सम्पाद्यम्। ततश्च "तुवाविशन्तुविन्दवः" इति द्वितीयपादस्याप्यष्टाक्षरत्वमिति चतुर्विंशत्यक्षरा भवति गायत्री।

२ अत्र "पिबतर्तुना" इत्यक्षरप्रश्लेषेणैकाक्षरह्रासे चतुर्विंशत्यक्षरैव गायत्री भवति।

३ अत्र हि यस्माद् यूयं सुदानवः स्थ इति व्याख्याने आमन्त्रितत्वाभावात् कथं निघात इति मृग्यम्। आमन्त्र्य कथने यथा दार्ढ्यं भवति विवक्षितम्, तद्वदत्रापि सुदानशीलत्वे निरवधिकदार्ढ्यबोधनाय निहतं पदं कृतमिति स्यात्। अत एव सायणोऽपि बहुषु स्थानेषु निर्दिष्टां स्वरप्रक्रियां वक्तुमप्रभवन् "सर्वे विधयश्छन्दसि विकल्पन्ते" इत्यात्मानं जुगोप।

४ यद्यप्यनुक्रमणिकायां "ऐन्द्री, मारुती, त्वाष्ट्री" इति नेष्टेति त्वष्टैवोच्यते। तथाऽपि त्वष्ट्रादीनां चतुर्णामपि नेष्टृदेवतात्वेन भाष्ये निर्देशात् ताः सर्वा मन्त्रदेवता अपि भवन्ति। अत्र मन्त्रेऽपि "पिबर्तुना" इति प्रश्लेषे तु "तुवं हि" इति विश्लेषेणाक्षरपूर्तिः।

[अभि । यज्ञम् । गृणीहि । नः । ग्नावः । नेष्टरिति । पिब । ऋतुना ॥
त्वम् । हि । रत्नऽधाः । असि ॥ ३ ॥]

ऋतुर्मार्गस्तु नेतृत्वान्नेष्टाऽग्निर्हरिरेव वा । ईष्टे न कश्चिदस्येति[1] ग्ना नद्यश्च[2] समीरिताः । गतिशीलत्वतो ग्नास्ता ज्ञातृनेतृत्वतो हरिः ॥ २९९ ॥ गमनान्नयनाद् वा ग्ना ऋतुपात्रमृतुस्तथा । सोमास्तदोकसः प्रोक्ता ऋतुपात्रस्थिता यतः ॥ ३०० ॥ पत्नीनेतृत्वतो नेष्टा नेष्टर्त्विक् सम्प्रकीर्तितः । ज्ञापयन्ति स्वलिङ्गानीत्यृतवः [3]षट् प्रकीर्तिताः ॥ ३०१ ॥ पावनाच्चैव[4] पोतारो मरुतः पोतृदेवताः । अग्निस्तु देवता नेष्टुस्त्वष्टेन्द्रो विष्णुरेव वा[5] ॥ ३०२ ॥ * ॥

[४—भुरिग्गायत्री[6]]

[४—ऋतवः, अग्निश्च देवताः]

(१५०) अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ॥ ४ ॥

[अग्ने । देवान् । इह । आ । वह । सादय । योनिषु । त्रिषु ॥
परि । भूष । पिब । ऋतुना ॥ ४ ॥]

[7]वेद्युत्तरा सदश्चैव प्राग्वंशो योनयः[8] स्मृताः । भूष भूषय नो यज्ञम् ॥ * ॥

---

१ "कश्चित् तस्येति" इति क्वचित् ।

२ ग्नाशब्दोऽनेकार्थः । निघण्टुस्तं वाङ्नामसु पठति—"धेना । ग्ना" (१. ११.) इत्यादि । स्त्रीपर्याय इति यास्कः—"मेना ग्ना इति स्त्रीणां । मेना मानयन्त्येनाः । ग्ना गच्छन्त्येनाः" इति । नद्यश्च ग्ना इत्याचार्याः । चकारेण वाक्स्त्रीपर्यायत्वमनुजानाति । अत्र त्वभिमतोऽर्थः नदीत्येव । न तावद् वागिति । गृणीहीति पुनरुक्तेः । नापि स्त्रीति । नेष्टरिति पुनरुक्तेः । यागशालां प्रति हि पत्नीनेता नेष्टा ऋत्विक् । तद्देवतास्वपि सैव निरुक्तिर्भवति । तेन ग्नाव इति नदीसाहित्यमेवार्थः ।

३ "ऋतवः सम्प्रकीर्तिताः" इति च प्र. पाठः ।

४ "पवनाच्चैव" इति क्वचित् ।

५ "विष्णुरेव च" इति क्वचित् !

६ अत्रापि पूर्ववत् "पिबर्तुना" इति प्रश्लेषेणैव केवलगायत्रीत्वम् ।

७ अत्र विशेष्यविशेषणयोर्व्यत्ययेन प्रयोगः—उत्तरवेदिरिति वक्तव्ये वेद्युत्तरेति । तद्यथा अखिलवेदद्रष्टुरिति वक्तव्ये वेदाखिलद्रष्टुरित्युक्तम् । अथवा भूमीशब्दवदीबन्तः वेदीशब्दोऽप्यस्ति । तेन वेदी उत्तरा इति युज्यते । अत एव भारते "वेदीतीर्थे नरः स्नात्वा" (वन.८३.९९) इति, "अथ वेदीं समासाद्य" (वन.८४.४७) इति च प्रयोगः ।

८ योनयः स्थानानि । तानि त्रीणि । उत्तरवेदिः, सदः, प्राग्वंशश्चेति । पशुसंस्कारार्थं होमीयद्रव्यासादनार्थं वा कृतसंस्कारा परिष्कृता चतुरश्रादिरूपा भूमिर्वेदिः । सा चान्तर्वेदिर्दक्षिणवेदिरुत्तरवेदिरित्यादिभेदभिन्ना भवति ।

[५–ऋतवः, इन्द्रश्च देवताः ।]

(१५१) ब्राह्मणादिन्द्रराधसःपिबासोममृतूँ रनु । तवेद्धिसख्यमस्तृतम् ॥ ५ ॥

[ब्राह्मणात् । इन्द्र । राधसः । पिब । सोमम् । ऋतून् । अनु ॥
तव । इत् । हि । सख्यम् । अस्तृतम् ॥ ५ ॥]

ब्राह्मणाच्छंसिपात्रतः । पिबेन्द्र नो राधसोऽर्थे त्वमनु त्वर्तुदेवताः[1] ॥ २०३ ॥ स्तृतं छिन्नमिति[2] प्रोक्तम् ॥ * ॥

[६–ऋतवः, मित्रावरुणौ च देवताः]

(१५२) युवन्दक्षन्धृतव्रतमित्रावरुणदूळभम् । ऋतुनायज्ञमाशाथे ॥ ६ ॥[॥ २८ ॥]

[युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् ॥
ऋतुना । यज्ञम् । आशाथेइति ॥ ६ ॥ २८ ॥]

अस्तभ्यं[3] दुर्दभं[4] स्मृतम् । दक्षाख्यं यजमानं वाऽपीशाथे[5] यज्ञमेव च । सोमं पीत्वर्तुपात्रेण सह वा तेन चर्तुना ॥ २०४ ॥ * ॥

---

"अपरेणाऽहवनीयं वेदिं खनति त्र्यङ्गुलखाताम्" इत्यादि श्रौतसूत्रम् । सदस्यानामाहूतानां निषदनस्थानं सदः । हविर्गृहात् पूर्वभागे यजमानादिस्थित्यर्थं गृहं प्राग्वंशः ।

१ "त्वामनु त्वृतुदेवताः" इति प्र. पाठः । "त्वमनूक्तर्तुदेवताः" इति क्वचित् । "त्वर्तुदेवताः" इति पाठे त्व ऋतुदेवताः इति च्छेदः । त्वं पिब । त्वामनु ऋतुदेवताश्च पिबन्तु ।

२ "भिन्नमिति" इति क्वचित् ।

३ "अस्तम्भ्यम्" इति क्वचित् ।

४ "दुर्दहम्" इति तु बहुशः कोशेषु पठ्यते । तत्रेदं बीजं स्यात् यत् हकारभकारयोर्लिपिसाम्यं तौळवाक्षरेषु । यद्यपि सायणोऽपि तथैव व्याचष्ट—"दूळभं दुर्दहं, दह भस्मीकरणे, हकारस्य भकारः" इति । न जानीमहे–यद् दूळभशब्दस्यैव स्वरसतः सिद्धिसम्भवे दुर्दहमित्यस्य दूळभमिति च्छान्दसं रूपमिति वदतः किं हृदयमिति । तथाहि वार्तिकभाष्यम्–"दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च" इति । तथा च दुःखेन दम्यते अपनुद्यते इति दूडभः स्वकर्मणि निष्ठित इत्यर्थः । नहि दहिपरस्य दुर ऊत्वमुत्तरपदादेः ष्टुत्वं वा विहितम् । 'दम्भ दम्भे' । यद्यपि दुर ऊत्वमित्येव पर्याप्तम् । ष्टुत्वमपि नापेक्षितम् । यतो 'डभ दम्भे' इत्यपि धातुरस्ति डादिः । अत एव दम्भ इतिवत् डम्भ इत्यपि पदं भवति, पुराणादिष्वसकृत् प्रयोगात् ।

५ "चापीशाथे" इति च प्र. पाठः ।

[७-१० ऋतवः, द्रविणोदाश्च (होतृस्थोऽग्निः) देवताः]

(१५३) द्रविणोदाद्रविणसोग्रावहस्तासोअध्वरे । यज्ञेषुदेवमीळते ॥ ७ ॥

[द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे ॥
यज्ञेषु । देवम् । ईळते ॥ ७ ॥]

[1]होता च होतृकाश्चैव द्रविणोदा द्रवीणसः । अग्निश्चैवाग्नयस्तेषां देवता विष्णुमीळते ॥ ३०५ ॥ * ॥

(१५४) द्रविणोदाददातुनोवसूनियानिशृण्विरे । देवेषुतावनामहे ॥ ८ ॥

[द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे ॥
देवेषु । ता । वनामहे ॥ ८ ॥]

(१५५) द्रविणोदाःपिपीषतिजुहोतप्रचतिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥

[द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत ॥
नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥ ९ ॥]

पातुमिच्छति सोमं स सोमस्तस्मै प्रतिष्ठिताः । ऋतुपात्रैर्देवताभिः सहैवैनमभीप्सत[2] ॥ ३०६ ॥ * ॥

(१५६) यत्त्वातुरीयमृतुभिर्द्रविणोदोयजामहे । अधस्मानोददिर्भव ॥ १० ॥

[यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽदः । यजामहे ॥
अध । स्म । नः । ददिः । भव ॥ १० ॥]

चतुर्थवारमपि यत् त्वां[3] यजामो ददिर्भव ॥ * ॥

---

१ होता प्रधानहोता । होतृका उपहोतारः । तथा अग्निश्च प्रधानाग्निश्च द्रविणोदाः । अग्नयश्च अवान्तराग्नयश्च द्रविणसः ।

२ "–मभीच्छत" इति क्वचित् पाठः ।

३ "यं त्वाम्" इति क्वचित् ।

[११–पिपीलिकामध्या निचृद्गायत्री[1]]

[ऋतवः, अश्विनौ च देवताः]

(१५७) अश्विनापिबतम्मधुदीद्यग्नीशुचिव्रता । ऋतुनायज्ञवाहसा ॥ ११ ॥

[अश्विना । पिबतम् । मधु । दीद्यग्नीइतिदीदिऽअग्नी । शुचिऽव्रता ॥
ऋतुना । यज्ञऽवाहसा ॥ ११ ॥

दीद्यग्नी इति दीप्ताग्नी ॥ * ॥

[१२—निचृद्गायत्री[2]]

[१२—ऋतवः, अग्निश्च देवताः]

(१५८) गार्हपत्येनसन्त्यऋतुनायज्ञनीरसि । देवान्देवयतेयज ॥ १२ ॥ [॥ २९ ॥]

[गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि ॥
देवान् । देवऽयते । यज ॥ १२ ॥ २९ ॥]

[इति पञ्चदशं सूक्तम्]

**सन्त्योऽग्निः सन्ततत्वतः ॥ ३०७ ॥ विष्णुर्वेत्वेधिपो विष्णुः केशवादिस्वरूपतः[3] । "ग्रहान्त्सोमस्य मिमते[4]" इति तस्यैव कथ्यते । गार्हपत्येन पात्रेण यजमानस्तु देवयन् ॥ ३०८ ॥ देवान् यातीति ॥ * ॥**

—१६—

[आत्वा नव, मेधातिथिः काण्वः, गायत्री, इन्द्रः, षड्जः ।]

(१५९) आत्वावहन्तुहरयोवृषणंसोमपीतये । इन्द्रत्वासूरचक्षसः ॥ १ ॥

---

१ "दीदियग्नी" इति विश्लेषेण केवलगायत्रीत्वं च ।

२ "सन्तिय" इति विश्लेषेण केवला च गायत्री । ३ "केशवादिस्वरूपकः" इति क्वचित् ।

४ "सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति । छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश" (१०. ११४. ५.) इत्यृग्वेदे ।

[आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये ॥
इन्द्र । त्वा । सूरऽचक्षसः ॥ १ ॥]

सुष्ठूरीकुर्वन्ति विषयान् यतः । चक्षूंषीन्द्रस्य[1] हरयस्तेनोक्ताः सूरचक्षसः ॥ ३०९ ॥ * ॥

(१६०) इमाधानाघृतस्नुवोहरीइहोपवक्षतः । इन्द्रंसुखतमेरथे ॥ २ ॥

[इमाः । धानाः । घृतऽस्नुवः । हरीइति । इह । उप । वक्षतः ॥
इन्द्रम् । सुखऽतमे । रथे ॥ २ ॥]

भक्तिस्नुतानि धानानि बुद्धेर्धाना इति ह्यपि ॥ * ॥

[पिपीलिकामध्या[2] निचृद्गायत्री]

(१६१) इन्द्रम्प्रातर्हवामहइन्द्रम्प्रयत्यध्वरे । इन्द्रंसोमस्यपीतये ॥ ३ ॥

[इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे ॥
इन्द्रम् । सोमस्य । पीतये ॥ ३ ॥]

प्रातरित्यादिवाक्येन सवनत्रयमीरितम् । समासत्वात् सोमपीतिस्तृतीयं सवनं मतम्[3] ॥ ३१० ॥
सदा ॥ * ॥

(१६२) उपनस्सुतमागहिहरिभिरिन्द्रकेशिभिः । सुतेहित्वाहवामहे ॥ ४ ॥

[उप । नः । सुतम् । आ । गहि । हरिऽभिः । इन्द्र । केशिऽभिः ॥
सुते । हि । त्वा । हवामहे ॥ ४ ॥]

---

१ एतेन त्वा हरय इति व्याख्यातम्—त्वा ते हरय इति । "चक्षुषीन्द्रस्य" इति क्वचित् पाठः प्रामादिकः ।

२ "प्रयतियध्वरे" इति विश्लेषेण केवला च गायत्री ।

३ "स्मृतम्" इति प्र. पाठः ।

[पिपीलिकामध्या निचृद्गायत्री[1]]

(१६३) सेमन्नस्तोममागह्युपेदंसवनंसुतम् । गौरोनतृषितःपिब ॥ ५ ॥ [॥ ३० ॥]

[सः । इमम् । नः । स्तोमम् । आ । गहि । उप । इदम् । सवनम् । सुतम्
गौरः । न । तृषितः । पिब ॥ ५ ॥ ३० ॥]

(१६४) इमेसोमासइन्दवस्सुतासोअधिबर्हिषि । ताँइन्द्रसहसेपिब ॥ ६ ॥

[इमे । सोमासः । इन्दवः । सुतासः । अधि । बर्हिषि ॥
तान् । इन्द्र । सहसे । पिब ॥ ६ ॥]

विष्णुविवक्षायां यजमानबलं सहः । तदिष्टस्यैत्र दानाय तद्गुणव्यक्तिरेव वा ॥ ३११ ॥ "पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते" । "हेयोपादेयहारितगुणपूर्णो हरिः सदा । अनुग्रहव्यक्तिरेव तद्गुणानां[3] नचान्यथा" ॥ ३१२ ॥ इत्यादिवेदवाक्येभ्यो नैव वृद्धिर्हरेः क्वचित् ॥ * ॥

(१६५) अयन्तेस्तोमोअग्रियोहृदिस्पृगस्तुशन्तमः । अथासोमंसुतम्पिब ॥ ७ ॥

[अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः ॥
अथ । सोमम् । सुतम् । पिब ॥ ७ ॥]

(१६६) विश्वमित्सवनंसुतमिन्द्रोमदायगच्छति । वृत्रहासोमपीतये ॥ ८ ॥

[विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति ॥
वृत्रऽहा । सोमऽपीतये ॥ ८ ॥]

---

१ "आगहियुपेदम्" इति विश्लेषेण केवलगायत्रीत्वम् ।

२ गौर इति ईषद् गवयेन समानधर्मा, ईषच्च हरिणेन एकशफः वन्यो मृगः । एकशफत्वं यथा—"खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः" (भाग. ३. १०. २२.) इति । वन्यत्वं यथा—"महोरगाश्चापि भयाद् द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः" (भाग. ८. २. २१.) इति ।

३ "तद्गुणानां च नान्यथा" इति प्र. पाठः ।

[विराड्गायत्री[1]]

(१६७) सेमन्नःकाममापृणगोभिरश्वैश्शतक्रतो । स्तवामत्वास्वाध्यः ॥ ९ ॥ [॥ ३१ ॥]

[सः । इमम् । नः । कामम् । आ । पृण । गोभिः । अश्वैः । शतक्रतोइतिशतऽक्रतो
स्तवाम । त्वा । सुऽआध्यः ॥ ९ ॥ ३१ ॥]

[इति षोडशं सूक्तम्]

**पृण सम्पूरय स्वाध्यः सुधीतय[2] इतीरिताः[3] ॥ ३१३ ॥ * ॥**

— १७ —

[इन्द्रावरुणयोर्नव, मेधातिथिः काण्वः, गायत्री, इन्द्रावरुणौ, षड्जः ।]

(१६८) इन्द्रावरुणयोरहंसम्राजोरवआवृणे । तानोमृळातईदृशे ॥ १ ॥

[इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ॥
ता । नः । मृळातः । ईदृशे ॥ १ ॥]

**अविकारेण संस्थानमीदृक्त्वं[4] सम्प्रकीर्तितम् ॥ * ॥**

[यवमध्या विराड्गायत्री[5]]

(१६९) गन्ताराहिस्थोवसेहवंविप्रस्यमावतः । धर्तारांचर्षणीनाम् ॥ २ ॥

[गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः ॥
धर्तारा । चर्षणीनाम् ॥ २ ॥]

**मावतो ज्ञानयुक्तस्य प्रजाश्चर्षणयः स्मृताः ॥ * ॥**

---

१ "स्तवाम त्वा सुवाधियः" इति विश्लेषेण केवलगायत्रीत्वम् । २ "स्वधीतयः" इति क्वचित् ।

३ "इति स्मृताः" इति च कोशेषु बहुलं पठ्यते ।

४ "ईदृक्त्वं नाम कीर्तितम्" इति प्र. पाठः ।

५ "स्थोअवसे" इति, "चर्षणिइनाम्" इति च विश्लेषेण केवलगायत्रीत्वम् ।

(१७०) अनुकामन्तर्पयेथामिन्द्रावरुणरायआ । तावान्नेदिष्ठमीमहे ॥ ३ ॥

[अनुऽकामम् । तर्पयेथाम् । इन्द्रावरुणा । रायः । आ ॥
ता । वाम् । नेदिष्ठम् । ईमहे ॥ ३ ॥

नेदिष्ठत्वं समीपत्वं क्षिप्रं शरणमीमहे ॥ ३१४ ॥ * ॥

[पादनिचृद्गायत्री[1]]

(१७१) युवाकुहिशचीनांयुवाकुसुमतीनाम् । भूयामवाजदाव्नाम् ॥ ४ ॥

[युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् ॥
भूयाम । वाजऽदाव्नाम् ॥ ४ ॥]

युवयोरेव वाक्यानां[2] सुमतीनां च सर्वशः । भवेमान्नप्रदातॄणां सर्वदा विषया वयम् ॥ ३१५ ॥
॥ * ॥

[भुरिगार्ची (ह्रसीयसी) गायत्री[3]]

(१७२) इन्द्रस्सहस्रदाव्नांवरुणश्शंस्यानाम् । क्रतुर्भवत्युक्थ्यः ॥ ५ ॥ [॥ ३२ ॥]

[इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् ॥
क्रतुः । भवति । उक्थ्यः ॥ ५ ॥ ३२ ॥]

क्रतुः प्रधान उक्थ्यश्च शस्त्रैः स्तुत्यो विशेषतः ॥ * ॥

---

१ प्रतिपादं सप्ताक्षरत्वादियं पादनिचृत् । "क्वचित् त्रिपादृषिभिः", "सा पादनिचृत्" (३.९–१०) इति पिङ्गलनागः । नचात्राक्षरव्यूहेन केवलगायत्रीत्वं सम्पाद्यम् । "क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत" इति वदता, ततश्च इयादिपूरणेन एतावत्पर्यन्तं पठितानां सर्वासामप्यृचां पूर्णच्छन्दस्त्वमभिप्रयताऽपि कात्यायनेनास्य पादनिचृत्त्वाङ्गीकारात् । तथाहि तद्वचनम्—"युवाकु पादनिचृतौ" इति ।

२ शचीनां वाक्यानाम् । सप्तपञ्चाशत्सङ्ख्येषु वाङ्नामसु "शची । वाक्" (१.११.) इति हि पठ्यत इत्युक्तम् ।

३ अष्टादशाक्षरा ह्यार्ची गायत्री । प्रतिपादं षडक्षरा । अत्र तु प्रथमपादे एकाक्षराधिक्यमिति भुरिगार्ची । कात्यायनमतेन त्विदं पादनिचृद् वा गायत्री, ह्रसीयसी वा गायत्री । "इन्द्रो ह्रसीयसी वा" इति तदुक्तेः । तथाच तत्पक्षे "वरुणः शंसियानाम्" इति "क्रतुर्भवत्युक्थियः" इति च व्यूहेन प्रतिपादं सप्ताक्षरत्वात् पादनिचृत्त्वम् ।

[निचृद्गायत्री[१]]

(१७३) तयोरिदवसावयंसनेमनिचधीमहि । स्यादुतप्ररेचनम् ॥ ६ ॥

[तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि ॥
स्यात् । उत । प्रऽरेचनम् ॥ ६ ॥

रक्षणेन तयोर्वित्तं ज्ञानं वा प्राप्नुमः सदा । निधीमहि च दानं च स्यादेवास्माकमर्थिने ॥ ३१६ ॥ * ॥

(१७४) इन्द्रावरुणवामहंहुवेचित्रायराधसे । अस्मान्त्सुजिग्युषस्कृतम् ॥ ७ ॥

[इन्द्रावरुणा । वाम् । अहम् । हुवे । चित्राय । राधसे ॥
अस्मान् । सु । जिग्युषः । कृतम् ॥ ७ ॥]

ह्रस्वता संहितायां तु देवतैक्यप्रदर्शिनी । स्वरूपैक्यं हरौ तत्तु मत्यैक्यं भिन्नयोरपि ॥ ३१७ ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[२]]

(१७५) इन्द्रावरुणनूनुवांसिषासन्तीषुधीष्वा । अस्मभ्यंशर्मयच्छतम् ॥ ८ ॥

[इन्द्रावरुणा । नु । नु । वाम् । सिसासन्तीषु । धीषु । आ ॥
अस्मभ्यम् । शर्म । यच्छतम् ॥ ८ ॥]

अद्य वां नु नुमो[३] लोपः स्वातन्त्र्यार्थे हि सूत्रतः । साधयन्तीषु धीष्वेव शर्मास्मभ्यं प्रयच्छतम् ॥ * ॥

---

अथवा नाक्षरव्यूहः करणीयः । प्रथमपादे सप्ताक्षराणि । द्वितीयतृतीययोः षडेव । ततश्च ह्रसीयसी नाम गायत्री भवति । तथाह्यनुक्रमणिकायां—"द्वौ षट्कौ सप्तकश्च ह्रसीयसी" इति । अत्र षट्कौ सप्तक इति क्रमो न विवक्षितः । तेन सप्तकः षट्कौ च ह्रसीयसी भवति । या च कात्यायनमते ह्रसीयसी सैव पिङ्गलनागमते भुरिगार्ची । नहि स ह्रसीयसीं नाम गायत्रीं पठति ।

१ "सियादुत" इति विश्लेषेण केवलगायत्रीत्वम् ।  २ "धीषुवा" इति विश्लेषेण केवला गायत्री ।

३ "वां तु नुमो" इति क्वचित् । नु इति प्रतीकम् नुम इति व्याख्यानमिति स्वरसम् । "नूनु अतिशयेन क्षिप्रम् । द्विरावृत्तिबलादातिशय्यं लभ्यते" इति सायणः । समानपदस्याऽऽवृत्तौ पदपाठे किमिति नैकपद्यमिति स प्रष्टव्यः ।

(१७६) प्रवामश्नोतुसुष्टुतिरिन्द्रावरुणयांहुवे । यामृधाथेसधस्तुतिम् ॥ ९ ॥[॥ ३३ ॥]

[प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे ॥
याम् । ऋधाथेइति । सधऽस्तुतिम् ॥ ९ ॥ ३३ ॥]

[इति सप्तदशं सूक्तम्]

**यथास्थितस्तुतिं यां च वर्द्धयेथे सदैव मे ॥ ३१८ ॥ * ॥**

इति चतुर्थोऽनुवाकः

---

—१८—

[सोमानं नव, मेधातिथिः काण्वः, गायत्री, षड्जः]

[१–विराड्गायत्री[१]]

[१–३ ब्रह्मणस्पतिः (विष्णुर्वायुश्च) देवता[२]]

(१७७) सोमानंस्वरणङ्कृणुहिब्रह्मणस्पते । कक्षीवन्तंयऔशिजः ॥ १ ॥

[सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते ॥
कक्षीवन्तम् । यः । औशिजः ॥ १ ॥]

**सौम्यं शब्दं कृणु त्वं नो विष्णो वायो सुवाक्पते । कक्षीवन्तं प्रति हि यो दत्तो यः स उशिक्सुतः । विवक्षितो मुनिः सोऽपि तस्मादर्थोऽपि मां प्रति ॥ ३१९ ॥ * ॥**

(१७८) योरेवान्योअमीवहावसुवित्पुष्टिवर्द्धनः । सनःसिषक्तुयस्तुरः ॥ २ ॥

---

१ अत्राऽऽद्यपादे "सोमअनं सुवरणम्" इत्याष्टक्षरत्वं सम्पाद्य कात्यायनमतेन केवलगायत्रीत्वं वक्तव्यम् ।

२ "सोमानमिति पञ्च ब्राह्मणस्पत्यम्" इति कात्यायनः । ब्रह्मणस्पतिरिति काचन देवतेति सायणादयः । तेषां भ्रान्तिरिति दर्शयन् वक्ष्यत्याचार्यः—"विष्णो वायो" इति ।

[यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्द्धनः ॥
सः । नः । सिषक्तु । यः । तुरः ॥ २ ॥]

वित्तवान् रोगहा ज्ञानवेत्ताऽस्माभिः सयुग्[1] भवेत् । तुरो वेगाद् हरिर्वायुः ॥ * ॥

[३–पिपीलिकामध्या निचृद्गायत्री[2]]

(१७९) मानश्शंसोअररुषोधूर्तिःप्रणङ्मर्त्यस्य । रक्षाणोब्रह्मणस्पते ॥ ३ ॥

[मा । नः । शंसः । अररुषः । धूर्तिः । प्रणक् । मर्त्यस्य ॥
रक्ष । नः । ब्रह्मणः । पते ॥ ३ ॥]

अररुद् चातिरोषवान्[3] । तस्य धूर्तिवचो[4] नास्मान् पूरयेद् रक्ष नो हरे ॥ ३२० ॥ * ॥

[४–निचृद्गायत्री[5]]

[४–ब्रह्मणस्पतिरिन्द्रः सोमश्च देवताः ।]

(१८०) सघावीरोनरिष्यतियमिन्द्रोब्रह्मणस्पतिः । सोमोहिनोतिमर्त्यम् ॥ ४ ॥

[सः । घ । वीरः । न । रिष्यति । यम् । इन्द्रः । ब्रह्मणः । पतिः ॥
सोमः । हिनोति । मर्त्यम् ॥ ४ ॥]

घेति ह्यावधृतिश्चैव सोमः सौम्यत्वतो हरिः । उना मया च युक्तत्वादूमैर्युक्तत्वतोऽथवा[6] ॥ ३२१ ॥ अमः स इति वा ॥ * ॥

---

१ "सुयुक्" इति क्वचित् ।

२ "मर्तियस्य" इति विश्लेषेण केवलगायत्रीत्वम् ।

३ "चातिरोषणात्" इति प्र. पाठः ।

४ "धूर्तिर्वचो–" इति प्र. पाठः ।

५ "मूर्तियम्" इति विश्लेषेण केवलगायत्रीत्वम् ।

६ "त्वतोऽपिवा" इति प्र. पाठः । ऊमं नगरमित्येके । "अविसिविसिशुषिभ्यः कित्" इत्युणादिसूत्रेण अव-धातुनिष्पन्नत्वादूमाः रक्षका इत्यन्ये वेदभाष्यकाराः । ऊमानि भूतानीत्याचार्यसम्मतोऽर्थः ।

[५– पादनिचृद्गायत्री[1]]

[५–ब्रह्मणस्पतिः, सोमः, इन्द्रः, दक्षिणा(श्रीः) च देवताः ।]

(१८१) त्वन्तम्ब्रह्मणस्पतेसोमइन्द्रश्चमर्त्यम् । दक्षिणापात्वंहसः ॥ ५ ॥ [॥ ३४ ॥]

[त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् ॥
दक्षिणा । पातु । अंहसः ॥ ५ ॥ ३४ ॥]

साक्षाच्छ्रीर्दक्षेना तु[2] दक्षिणा । दक्षिणा चतुरत्वाद् वा स्वयमेव जनार्दनः ॥ ३२२ ॥ * ॥

[६– पिपीलिकामध्या निचृद्गायत्री[3]]

[६–८ सदसस्पतिः (विष्णुर्वायुरग्निर्वा)[4] देवता ।]

(१८२) सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम् । सनिम्मेधामयासिषम् ॥ ६ ॥

[सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् ॥
सनिम् । मेधाम् । अयासिषम् ॥ ६ ॥]

[5]सदसस्पतिर्हरिः साक्षाद् वायुरग्निरथापि वा । लाभज्ञानस्वरूपोऽसौ शरणं तमयासिषम् ॥ ३२३ ॥ * ॥

(१८३) यस्मादृतेनसिद्ध्यतियज्ञोविपश्चितश्चन । सधीनांयोगमिन्वति ॥ ७ ॥

[यस्मात् । ऋते । न । सिद्ध्यति । यज्ञः । विपःऽचितः । चन ॥
सः । धीनाम् । योगम् । इन्वति ॥ ७ ॥]

धीप्रेरकः स ध्येयश्च धीभिर्योगं तदाप्नुते ॥ * ॥

---

१ "तुवन्तम्", "मूर्तियम्", "पातुवंहसः" इति च त्रिषु पादेषु विश्लेषेण केवलगायत्रीत्वम् ।

२ "दक्षेनेति" इति प्र. पाठः । "दक्षेणेति" इति क्वचित् ।

३ "कामियम्" इति विश्लेषेण केवलगायत्रीत्वम् ।

४ सदसस्पतिनामैव काचिद् देवतेति केचित् । तदसारमित्युत्तरभाष्येण स्फुटम् ।

५ "सदस्पतिर्हरिः" इति क्वचित् ।

[८– पिपीलिकामध्या निचृद्गायत्री[1]]

(१८४) आद्दध्नोतिहविष्कृतिम्प्राञ्चङ्कृणोत्यध्वरम् । होतादेवेषुगच्छति ॥ ८ ॥

[आत् । ऋध्नोति । हविःऽकृतिम् । प्राञ्चम् । कृणोति । अध्वरम् ॥
होत्रा । देवेषु । गच्छति ॥ ८ ॥]

**तस्माद्धविष्कृतः स्वृद्धिं करोति यजतो विभुः । करोति चोत्तमं यज्ञं देवाह्वानानि गच्छति ॥ ३२४ ॥ * ॥**

[९–सदसस्पतिः, नराशंसो वा देवता[2] ।]

(१८५) नराशंससुधृष्टममपश्यंसप्रथस्तमम् । दिवोनसद्ममखसम् ॥ ९ ॥ [॥ ३५ ॥]

[नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् ॥
दिवः । न । सद्मऽमखसम् ॥ ९ ॥ ३५ ॥]

[इत्यष्टादशं सूक्तम्]

**नरैः स्तुत्यो नराशंसो हरिर्धृष्टतमश्च सः[3] । गुणानां प्रथिमाधिक्यात्[4] सप्रथस्तम ईरितः । यस्य स्वर्गादपि गृहं मखः प्रियमिवेयते ॥ ३२५ ॥ * ॥ * ॥**

—१९—

[प्रतित्यं नव, मेधातिथिः काण्वः, गायत्री, अग्निर्मरुतश्च, षड्जः ।]

(१८६) प्रतित्यञ्चारुमध्वरङ्गोपीथायप्रहूयसे । मरुद्भिरग्नआगहि ॥ १ ॥

[प्रति । त्यम् । चारुम् । अध्वरम् । गोऽपीथाय । प्र । हूयसे ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥ १ ॥]

**यज्ञं प्रतिप्रति त्वं तं सम्यक् शास्त्रोक्तलक्षणम् । आहूयसे ॥ * ॥**

---

१ "कृणोतियध्वरम्" इति विश्लेषेण केवलगायत्रीत्वम् ।

२ सदसस्पतिर्नराशंस इत्यग्नेरेव द्वे रूपे, सदसस्पतिरिति वायुश्चेत्युक्तं पुरस्तात् ।

३ "–तमः स्वतः" इति क्वचित् ।

४ "—क्यात् प्रथस्तम इतीरितः" इति क्वचित् ।

[निचृद्गायत्री[1]]

(१८७) नहिदेवोनमर्त्योमहस्तवक्रतुम्परः । मरुद्भिरग्नआगहि ॥ २ ॥

[नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः ॥—॥ २ ॥]

पुमान् नैव त्वदन्यो[2] हि क्रतुं प्रति ॥ ३२६ ॥ विष्णौ तु[3] मुख्यतोऽर्थोऽयमग्नौ कांश्चिद्वते सुरान् ॥ * ॥

(१८८) येमहोरजसोविदुर्विश्वेदेवासोअद्रुहः । मरुद्भिरग्नआगहि ॥ ३ ॥

[ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः ॥—॥ ३ ॥]

महतो रञ्जकात् स्वर्गादद्रोग्धारोऽखिलं विदुः ॥ ३२७ ॥ * ॥

(१८९) यउग्राअर्कमानृचुरनाधृष्टासओजसा । मरुद्भिरग्नआगहि ॥ ४ ॥

[ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा ॥—॥ ४ ॥]

प्राता अर्के विशेषेण सन्निधिस्तत्र यद् हरेः ॥ * ॥

(१९०) येशुभ्राघोरवर्पसस्सुक्षत्रासोरिशादसः । मरुद्भिरग्नआगहि ॥ ५ ॥ [॥ ३६ ॥]

[ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ॥—॥ ५ ॥ ३६ ॥]

शुद्धा घोरबलाः क्षेत्रत्रातारः क्षतितोऽपि वा । रम्यसत्सुखभोक्तारो मरुतो मारुतत्वतः ॥ ३२८ ॥ एतादृशानि रूपाणि प्राणाग्निस्थानि चेशितुः । पृथग् वा तादृशान्येव देवगान्यपि सर्वशः ॥ ३२९ ॥ * ॥

(१९१) येनाकस्याधिरोचनेदिविदेवासआसते । मरुद्भिरग्नआगहि ॥ ६ ॥

[ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ॥—॥ ६ ॥]

---

१ "न मर्तियो" इति विश्लेषेण केवलगायत्रीत्वम् । २ "त्वदन्योऽस्ति" इति प्र. पाठः ।
३ "विष्णौ हि" इति प्र. पाठः ।

स्वर्गोपरि प्रकाशे च सूर्यादावासते सुराः । नाको निर्दुःखरूपत्वाद् द्यौः प्रकाशस्वरूपतः ॥ ३३० ॥ * ॥

(१९२) यईङ्खयन्तिपर्वतान्तिरस्समुद्रमर्णवम् । मरुद्भिरग्नआगहि ॥ ७ ॥

[ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् ॥—॥ ७ ॥]

प्रतोळयन्ति[1] च गिरींस्तिरस्कृत्य च सागरम्[2] । पुरुषान् प्रकृतिं वाऽपि पर्ववन्तो हि जन्मना[3] । पुरुषाः सुसमुद्रेकात् समुद्रः प्रकृतिर्मता ॥ ३३१ ॥ प्रकृतेः पुरुषाणां च प्रेरकः सन् सदा हरे । [4]स्वरूपैर्बहुभिर्युक्त आयाहि सम सद्गुणैः ॥ ३३२ ॥ * ॥ * ॥ * ॥

(१९३) आयेतन्वन्तिरश्मिभिस्तिरस्समुद्रमोजसा । मरुद्भिरग्नआगहि ॥ ८ ॥

[आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा ॥—॥ ८ ॥]

[पिपीलिकामध्या निचृद्गायत्री[5]]

(१९४) अभित्वापूर्वपीतयेसृजामिसोम्यम्मधु । मरुद्भिरग्नआगहि ॥ ९ ॥ [॥ ३७ ॥]

[अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु ॥—॥ ९ ॥ ३७ ॥]

[इत्येकोनविंशं सूक्तम्]

॥ इति प्रथमाष्टके प्रथमोऽध्यायः ॥

---

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमदृग्भाष्ये

प्रथमाष्टकस्य प्रथमोऽध्यायः

---

१ "प्रतोलयन्ति" इति प्र. पाठः । "प्रतोळयन्ति हि गिरिम्" इति क्वचित् ।

२ "सागरान्" इति क्वचित् ।

३ "–वन्तोऽभिजन्मना" इति क्वचित् । "–वन्तो हि जन्मतः" इति च ।

४ "सुरूपैर्बहु–" इति क्वचित् ।

५ "सोमियं मधु" इति विश्लेषेण केवलगायत्रीत्वम् ।

—२०—

[अयम् अष्टौ, मेधातिथिः काण्वः, गायत्री, ऋभवः[1], षड्जः]

(१९५) ॐ ॥ अयन्देवायजन्मनेस्तोमोविप्रेभिरासया । अकारिरत्नधातमः ॥ १ ॥

[अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया ॥
अकारि । रत्नऽधातमः ॥ १ ॥]

**सर्वजन्मकृते विष्णुदेवायेयं स्तुतिः कृता । मुखेन विप्रैः काण्वाद्यैः सैव यद् रतिधातमा[2] ॥ १ ॥**
**॥ * ॥**

(१९६) यइन्द्रायवचोयुजाततक्षुर्मनसाहरी । शमीभिर्यज्ञमाशत ॥ २ ॥

[ये । इन्द्राय । वचःऽयुजा । ततक्षुः । मनसा । हरीइति ॥
शमीभिः । यज्ञम् । आशत ॥ २ ॥]

**वाङ्मात्रेणैव योज्यौ ये चक्रुरिन्द्राय वाजिनौ । [3]शमीभिर्विष्णुनिष्ठाभिर्यज्ञभागं च लेभिरे ॥ २ ॥**
**भगवांश्चैतदखिलं कृतवानृभुषु स्थितः । पृथग् वा फलदातृत्वात् ॥ * ॥**

---

१ ऋभुः, विभ्वा, वाजः इति त्रयोऽपि देवा एकयोक्त्या ऋभव इत्युच्यन्ते । तथा हि बृहद्देवतायां शौनकः— "सुधन्वन आङ्गिरसस्याऽसन् पुत्रास्त्रयः पुरा । ऋभुर्विभ्वा च वाजश्च शिष्यास्त्वष्टुश्च तेऽभवन्" (३.८३.) इति । "तेषामाद्यान्त्ययोर्नाम्ना दृश्यते बहुवत् स्तवः" (३. ८९.) इति च ।

२ रतिदातृतमा । डु धाञ् दाने ।

३ यद्यपि "शमी । शिमी । शक्तिः । शिल्पम्" (२.१.) इति निघण्टौ कर्मनामसु शमीति पठ्यते । तथाऽपि विष्णुनिष्ठैव हि कर्मसु मुख्यं कर्मेति विष्णुनिष्ठाभिरिति व्याख्यातम् । अपि च "शमो मन्निष्ठता बुद्धेर्दम इन्द्रिय-निग्रहः" इति पुराणवचनसंवादोऽप्यस्मिन्नर्थे भवति ।

[विराड्गायत्री[1]]

(१९७) तक्षन्नासत्याभ्याम्परिज्मानंसुखंरथम् । तक्षन्धेनुंसबर्दुघाम् ॥ ३ ॥

[तक्षन् । नासत्याभ्याम् । परिऽज्मानम् । सुऽखम् । रथम् ॥
तक्षन् । धेनुम् । सबःऽदुघाम् ॥ ३ ॥]

**परितो ज्मां यतश्चरेत् ॥ ३ ॥ परिज्माऽतो रथः काम्यं सबरित्यभिधीयते[2] । ब कामन इति ह्यस्मात् ॥ * ॥**

[निचृद्गायत्री[3]]

(१९८) युवानापितरापुनस्सत्यमन्त्राऋजूयवः । ऋभवोविष्टयक्रत ॥ ४ ॥

[युवाना । पितरा । पुनरिति । सत्यऽमन्त्राः । ऋजुऽयवः ॥
ऋभवः । विष्टी । अक्रत ॥ ४ ॥]

**सुधन्वैषां पिता स्मृतः ॥ ४ ॥ बृहस्पतेः कामधेनुः[4] ऋजुभक्ता ऋजूयवः । अवेतनं स्वामिबलात् कर्म विष्ट्यत्र तेऽक्रत ॥ ५ ॥ ऋतभूमिर्ज्ञानभूमिर्भगवानृभुरीरितः । येषां भूतमृतं कर्म यज्ञभागाप्तितोऽपि ते ॥ ६ ॥ * ॥**

---

१ "तक्षन्नासतियाभियाम्" इति विश्लेषेण केवला गायत्री । अपरथा प्रथमपादे षळक्षरत्वाद् विराट्त्वम् ।

२ "सबः पयो दोग्धीति सबर्दुघा" इति सायणः । "धेनुं सबर्दुघां चक्रुरमृतं सबरुच्यते" इति शौनकः । पयो दोग्धीति धेनुसामान्यधर्मः । ऋभुनिर्माणे नैव महत्त्वमाधत्ते । अमृतस्रवणादपि कामितदोहात् कामधेनुरिति तु रमणीयम् । दशममण्डले ६९तमे सूक्ते अष्टमे मन्त्रे "सबर्धुक् अमृतदोग्ध्री" इति व्याकुर्वता सायणेन प्रथममण्डले यदुक्तम्—"सबरिति रेफान्तं प्रातिपदिकं क्षीरवाचीति सम्प्रदायविदः" इति तद् विस्मृतमिति प्रतिभाति । नचामृतमिति तत्र क्षीरमेवोच्यते । तत्र मन्त्रे पूर्वं पठितेन "सुदुघां" इति पदेन पुनरुक्तेः । तेन स्वयमेव पूर्वोत्तरयोः परस्परं विप्रतीपं वदन् स उपेक्ष्य एव ।

३ तृतीयपादे सप्ताक्षरत्वात् निचृत् । "विष्टीयक्रत" इति विश्लेषे केवलैव गायत्री ।

४ "कामधेनुम्" इति प्र. पाठः । धेनुमपि नासत्याभ्यां तक्षन्निति भ्रमवारणायेदमुदितम् । अत एव बृहद्देवतायाम्—"धेनुं सबर्दुघां चक्रुः......बृहस्पतेरि"त्युक्तम् । उत्तरत्र श्रुतिरेवाऽह च—"इन्द्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपाजत" (ऋ.१.१६१.६.) इति । एतेनाश्विभ्यां धेनुमिति केचिद् व्याचक्षाणा निरस्ताः । "सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन" (१.१६१.७.) इति रथकर्तृत्वं च तेषामवगम्यते ।

[पिपीलिकामध्या निचृद्गायत्री[1]]

(१९९) संवोमदासोअग्मतेन्द्रेणचमरुत्वता । आदित्येभिश्वराजभिः ॥ ५ ॥ [॥ १ ॥]

[सम् । वः । मदासः । अग्मत । इन्द्रेण । च । मरुत्वता ॥
आदित्येभिः । च । राजऽभिः ॥ ५ ॥ १ ॥]

सहेन्द्रेण[2] सहाऽदित्यैः प्राप्ता युष्माकमिन्दवः ॥ * ॥

(२००) उतत्यञ्चमसन्नवन्त्वष्टुर्देवस्यनिष्कृतम् । अकर्तचतुरःपुनः ॥ ६ ॥

[उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःऽकृतम् ॥
अकर्त । चतुरः । पुनरिति ॥ ६ ॥]

[3]"एकं चमसं चतुरः" कुरुतेत्याह तान् पुरा । त्वष्टाऽग्निश्चैव देवानां वाक्यात् तदपि तैः कृतम् ॥ ७ ॥ [4]द्व्यादि स्वोक्तं परित्यज्य त्वष्टुः शुश्रूषणं कृतम् । तं [5]पूर्वकृतमेवैकं चमसं चतुरोऽकृत ॥ ८ ॥ * ॥

(२०१) तेनोरत्नानिधत्तनत्रिरासाप्तानिसुन्वते । एकमेकंसुशस्तिभिः ॥ ७ ॥

[ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते ॥
एकम्ऽएकम् । सुशस्तिऽभिः ॥ ७ ॥]

---

१ "अग्मत इन्द्रेण" इति पादविश्लेषेण केवला च गायत्री ।

२ "अपिबत् सोममिन्द्रश्च तैस्तत्र सवने सह । तेषां स्तुतिरिदं सूक्तम्" (बृह. ३.९०.) इति शौनकश्च ।

३ तथाहि श्रुतिः—"एकं चमसं चतुरः कृणोतन तद् वो देवा अब्रुवन् तद् व आगमम् । सौधन्वना यद्येवा करिष्यथ साकं देवैर्यज्ञियासो भविष्यथ" (१.१६१.२.) इति ।

४ "ज्येष्ठ आह चमसा द्वा करेति कनीयान् त्रीन् कृणवामेत्याह । कनिष्ठ आह चतुरस्करेति त्वष्ट ऋभवस्तत् पनयद् वचो वः" (४.३३.५.) इति च श्रूयते । तदेतदुक्तं "द्व्यादि स्वोक्तं परित्यज्य" इत्यादि । शौनकश्चाऽह— "एकं चमसमित्युक्ते ज्येष्ठ आहेत्यथो दिवि । उक्त्वा ततश्चतुश्चमसान् यथोक्तं तेन हर्षिताः । त्वष्टा च सविता चैव देवदेवः प्रजापतिः । सर्वान् देवान् समामन्त्र्य अमृतत्वं ददुश्च ते" (३.८७–८.) इति ।

५ "तं पूर्वं कृत—" इति क्वचित् ।

सप्तसङ्ख्यानि रत्नानि त्रिकालेष्वपि धत्तन । पुराणपञ्चरात्रेतिहासवेदान् हरिस्तथा ॥ ९ ॥
मीमांसातर्कसहितान् पञ्च वेदानथापिवा । सप्त च्छन्दांसि वैकैकं[1] तद्गुणैरखिलैः सह ॥ १० ॥ * ॥

[पिपीलिकामध्या[2] निचृद्गायत्री]

(२०२) अधारयन्तवह्नयोभजन्तसुकृत्यया । भागन्देवेषुयज्ञियम् ॥ ८ ॥ [॥ २ ॥]

[अधारयन्त । वह्नयः । अभजन्त । सुऽकृत्यया ॥
भागम् । देवेषु । यज्ञियम् ॥ ८ ॥ २ ॥

[इति विंशं सूक्तम्]

सुकर्मणा यज्ञभागमभजन्नप्यधारयन् । वह्नयो धारकत्वेन स्थिरत्वेन यथा[ऽ]गतिः ॥ ११ ॥
॥ * ॥ * ॥

—२१—

[इहेन्द्राग्नी षट्, मेधातिथिः काण्वः, गायत्री, इन्द्राग्नी, षड्जः]

(२०३) इहेन्द्राग्नीउपह्वयेतयोरित्स्तोममुश्मसि । तासोमंसोमपातमा ॥ १ ॥

[इह । इन्द्राग्नीइति । उप । ह्वये । तयोः । इत् । स्तोमम् । उश्मसि ॥
ता । सोमम् । सोमऽपातमा ॥ १ ॥]

ह्वये सोमं प्रति च तौ ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[3]]

(२०४) तायज्ञेषुप्रशंसतेन्द्राग्नीशुम्भतानरः । तागायत्रेषुगायत ॥ २ ॥

---

१ "चैकैकम्" इत्यपि कोशेषु पठ्यते ।

२ "वह्नयो अभजन्त" इति विश्लेषेण केवला च गायत्री ।

३ "प्रशंसत इन्द्राग्नी" इति पादविश्लेषेण केवला च गायत्री ।

[ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नीइति । शुम्भत । नरः ॥
ता । गायत्रेषु । गायत ॥ २ ॥]

**शुम्भनं[1] भूषणं मतम् ॥ * ॥**

(२०५) तामित्रस्यप्रशंस्तयइन्द्राग्नीताहवामहे । सोमपासोमपीतये ॥ ३ ॥

[ता । मित्रस्य । प्रऽशंस्तये । इन्द्राग्नीइति । ता । हवामहे ॥
सोमऽपा । सोमऽपीतये ॥ ३ ॥]

**तौ मित्रस्य प्रशास्त्यर्थौ ह्वरेः ॥ * ॥**

(२०६) उग्रासन्ताहवामहउपेदंसवनंसुतम् । इन्द्राग्नीएहगच्छताम् ॥ ४ ॥

[उग्रा । सन्ता । हवामहे । उप । इदम् । सवनम् । सुतम् ॥
इन्द्राग्नीइति । आ । इह । गच्छताम् ॥ ४ ॥]

[निचृद्गायत्री[2]]

(२०७) तामहान्तासदस्पतीइन्द्राग्नीरक्षउब्जतम् । अप्रजास्सन्त्वत्रिणः ॥ ५ ॥

[ता । महान्ता । सदस्पतीइति । इन्द्राग्नीइति । रक्षः । उब्जतम् ॥
अप्रजाः । सन्तु । अत्रिणः ॥ ५ ॥]

---

१ "शुभ शुम्भ शोभार्थौ" इति पुरुषकारः ।

२ "सन्तु अत्रिणः" इति विश्लेषेण केवला गायत्री ।

**रक्षांसि चोब्जतम्[1] ॥ १२ ॥ रक्षोरक्ष्याः प्रजा यस्मादत्र्यो[2] मार्गत्रयोज्झिताः । पितृदेवमनुष्याणां गत्यभावादधोगतेः ॥ १३ ॥ * ॥**

(२०८) तेनसत्येनजागृतमधिप्रचेतुनेपदे । इन्द्राग्नीशर्मयच्छतम् ॥ ६ ॥ [॥ ३ ॥]

[तेन । सत्येन । जागृतम् । अधि । प्रऽचेतुने । पदे ॥
इन्द्राग्नीइति । शर्म । यच्छतम् ॥ ६ ॥ ३ ॥]

[इत्येकविंशं सूक्तम्]

**सत्येन गुणपूर्णेन विष्णुना तेन जागृतम् । स्वगुणैरेव विष्णुस्तु प्रकृष्टे चेतने हरौ ॥ १४ ॥ पदे गम्यत्वतः सम्यक् तस्मिन्नेव स्वभावतः । तथा स्थितौ[3] तु जागृतमिति विष्णुर्विशेषतः ॥ १५ ॥ उक्तः ॥ * ॥ * ॥**

—२२—

[प्रातर्युजा एकविंशतिः, मेधातिथिः काण्वः, गायत्री, षड्जः]

[१-२ पिपीलिकामध्या निचृद्गायत्री[4]]

[१-४ अश्विनौ देवते[5]]

(२०९) प्रातर्युजाविबोधयाश्विनावेहगच्छताम् । अस्यसोमस्यपीतये ॥ १ ॥

---

१ "उब्ज आर्जवे" इति पठ्यते । अत्र तु वधोऽर्थ इति प्रतीयते । यथायोग्यं स्थितिरेवाऽर्जवमिति रक्षसां वध एवर्जूकरणमिति वा वक्तव्यम् । नच रक्षसामृजूकरणमेवार्थः । तमसो नाशः सत्त्वस्य समुदयश्च हि प्रार्थ्यते । नहि तमस एव सत्त्वभावः । नह्यासुरी प्रकृतिः कदाऽपि दैवी भवति । दैवी वाऽऽसुरी । "द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च" इत्यादि स्मरणात् ।

२ "यस्मादत्री मार्गत्रयोज्झितः" इत्यपि पाठान्तरम् । "अत्रिणः भक्षका राक्षसा अनुत्पन्नाः सन्तु" इति सायणः । पूर्वार्द्धे रक्षसामृजूकरणं प्रार्थितमिति तदनुसारेण उत्पत्स्यमाना अपि ऋजवोऽभक्षकाश्च सन्त्वित्येव प्रार्थनीयम् । तत् किमित्ययमुत्तरार्द्धे रक्षसामुपर्याकस्मिक आक्रोशः? अथत्र विपर्यये पर्यवसानमित्यभिमतं तथाऽपि अत्रिणः न सन्तु इत्येव वक्तव्यम् । अप्रजा इति तु कृत्यं चिन्त्यम् ।

३ "तथास्थितौ जागृतमिति" इति क्वचित् कोशेषु ।

४ "बोधय अश्विनावेह" इति विश्लेषेण केवला गायत्री । द्वितीयमन्त्रे च "रथितमा उभा" इति विश्लेषेण ।

५ "तृतीयस्यस्याऽदिरश्विनौ" इति बृहद्देवता । द्वितीयाध्याये तृतीयसूक्तस्य आदिरश्विनाविति । "चतस्र आश्विन्यः" इति कात्यायनः ।

[प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् ॥
अस्य । सोमस्य । पीतये ॥ १ ॥]

प्रातः स्तुतत्वेन प्रोक्तौ प्रातर्युजाविति । अश्विनौ भगवांश्चैव प्रातर्योगेन[1] गम्यते ॥ १६ ॥
स्तुतिशब्दः स्तुतौ यस्माद् बुद्ध्यते वर्तमानकः । बोधयेत्यत उक्तं तत् परतो बुद्ध्यते कथम् ॥ १७ ॥ * ॥

(२१०) यासुरथारथीतमोभादेवादिविस्पृशा । अश्विनाताहवामहे ॥ २ ॥

[या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा ॥
अश्विना । ता । हवामहे ॥ २ ॥]

[३–निचृद्गायत्री[2]]

(२११) यावाङ्कशामधुमत्यश्विनासूनृतावती । तयायज्ञम्मिमिक्षतम् ॥ ३ ॥

[या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती ॥
तया । यज्ञम् । मिमिक्षतम् ॥ ३ ॥]

कशाया स्पृष्टिमात्रेण मधुरं कुरुतोऽखिलम् । अतो मिमिक्षतमिति स्पर्शो मेक्षणमुच्यते ॥ १८ ॥
वेदवाक्यस्तुतत्वेन कशा सा सूनृतावती । तयैव घृतसोमादि स्पृशतं याज्ञिकं वसु ॥ १९ ॥ * ॥

(२१२) नहिवामस्तिदूरकेयत्रारथेनगच्छथः । अश्विनासोमिनोगृहम् [॥ ४ ॥]

[नहि । वाम् । अस्ति । दूरके । यत्र । रथेन । गच्छथः ॥
अश्विना । सोमिनः । गृहम् ॥ ४ ॥]

---

१ "अर्पणीयो हरौ नित्यं प्रातर्योगो महानयम्" इति भगवानाचार्य एव तन्त्रसारसङ्ग्रहे श्वासरूपहंसमन्त्रस्य प्रातर्योगत्वं स्फुटमाह हि । भगवानपि तेन मन्त्रेण प्रातर्युज्यत इति सोऽपि प्रातर्युक् ।

२ "मधुमती अश्विना" इति विश्लेषेण केवला गायत्री ।

[५–८ सविता देवता[१]]

(२१३) हिरण्यपाणिमूतयेसवितारमुपह्वये । सचेत्तादेवतापदम् ॥ ५ ॥ [॥ ४ ॥]

[हिरण्यऽपाणिम् । ऊतये । सवितारम् । उप । ह्वये ॥
सः । चेत्ता । देवता । पदम् ॥ ५ ॥ ४ ॥]

[२]हितत्वाद् रमणीयत्वाद्धिरण्यं वर्णतोऽपिच । रूपं नारायणस्यैव[३] पाणिशब्दोपलक्षितम् ॥ २० ॥
स्रष्टृत्वात् सविता विष्णुः स ज्ञाता स्वपदादिकम् । स एव देवता मुख्या तद्गुणैक्येन देवता ॥ २१ ॥ * ॥

[निचृद्गायत्री[४]]

(२१४) अपान्नपातमवसेसवितारमुपस्तुहि । तस्यव्रतान्युश्मसि ॥ ६ ॥

[अपाम् । नपातम् । अवसे । सवितारम् । उप । स्तुहि ॥
तस्य । व्रतानि । उश्मसि ॥ ६ ॥]

व्यक्तत्वात् पार्थिवे देहे सोऽपां नप्ता[५] जनार्दनः ॥ * ॥

(२१५) विभक्तारंहवामहेवसोश्चित्रस्यराधसः । सवितारंनृचक्षसम् ॥ ७ ॥

[विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः ॥
सवितारम् । नृऽचक्षसम् ॥ ७ ॥]

---

१ "हिरण्यपाणिं सावित्र्यश्चतस्रश्चाप्यथोत्तराः" (३. ९१.) इति शौनकः ।

२ यास्कोऽप्याह—"हिरण्यं कस्मात्? हितरमणं भवतीति वा, हृदयरमणं भवतीति वा" इति ।

३ एवकारेण आदित्यपक्षे पाणिमात्रस्य हिरण्यत्वमप्यभ्यनुजानाति । तथाहि कौषीतकिब्राह्मणम्—"सवित्रे प्राशित्रं प्रतिजह्रुस्ततस्तत् पाणी प्रचिच्छेद तस्मै हिरण्मयौ दधुः तस्माद्धिरण्यपाणिः" इति । भगवत्पक्षे तु पाणिरिति सर्वं रूपम् । यथा पादशब्दस्तथा पाणिशब्दोऽपि स्वरूपवाची वेदेषु प्रयुज्यते ।

४ "व्रतानियुश्मसि" इति विश्लेषण केवला गायत्री ।

५ "अनन्तरां प्रजामाहुर्नपादिति कृपण्यवः" (२. २७.) इति शौनकः । अद्भ्यः पृथिवी । तदात्मकश्च देहः । तत्र व्यक्तो नपात् ।

सदा विभज्य दातारं वसोरुत्तमराधसः ॥ २२ ॥ अशेषपुण्यपापादिविशेषैश्चितिदर्शकम् । आह्वयामः ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[1]]

(२१६) सखायआनिषीदतसवितास्तोम्योनुनः । दाताराधांसिशुम्भति ॥ ८ ॥

[सखायः । आ । नि । सीदत । सविता । स्तोम्यः । नु । नः ॥
दाता । राधांसि । शुम्भति ॥ ८ ॥]

स राधांसि शोभयत्यञ्जसा हरिः ॥ २३ ॥ * ॥

[९—अग्निः, देवपत्न्यः, त्वष्टा च देवताः[2]]

(२१७) अग्नेपत्नीरिहावहदेवानामुशतीरुप । त्वष्टारंसोमपीतये ॥ ९ ॥

[अग्ने । पत्नीः । इह । आ । वह । देवानाम् । उशतीः । उप ॥
त्वष्टारम् । सोमऽपीतये ॥ ९ ॥]

[१०—अग्निः,[3] नद्यः, भारती लक्ष्मीश्च देवताः]

(२१८) आग्नाअग्नइहावसेहोत्रांयविष्ठभारतीम् । वरूत्रीन्धिषणांवह ॥ १० ॥ [॥ ५ ॥]

[आ । ग्नाः । अग्ने । इह । अवसे । होत्राम् । यविष्ठ । भारतीम् ॥
वरूत्रीम् । धिषणाम् । वह ॥ १० ॥ ५ ॥]

---

१ "स्तोमियो नु नः" इति विश्लेषेण केवला गायत्री ।

२ इयमाग्नेयीति कात्यायनः । "एकाऽग्नेः" इति शौनकोऽप्याह । देवपत्नीनां त्वष्टुश्चाऽऽह्वानं तेषामप्येतन्मन्त्र-देवतात्वं द्योतयतीति तु साम्प्रतम् ।

३ दशम्यामप्यृचि अग्निरेव देवतेति कात्यायनः । "आग्नेय्यौ द्वे" इत्यनुक्रमणिकायां स्मरणात् । नैतदपि युक्तम् । पूर्वोक्तहेतोरेव । "द्वे तु देवीनाम्" इति वदन् शौनकस्तु दशम्येकदश्योर्द्वयोरपि देवपत्न्यो देवता इत्याह । तत्र पूर्वमन्त्रे प्रैषगोचरस्याप्यग्नेर्देवतात्वमभ्यनुजानन् सम्प्रति किमिति तस्य तथात्वं तत्याजेति न ज्ञायते । ग्ना नद्य इत्याचार्यपक्षे तु देवपत्नीनां प्रस्ताव एव नास्ति । तथाच प्रैषगोचरोऽग्निः, ग्नापदोक्ता नद्यः, भारती, धिषणा-पदोक्ता लक्ष्मीश्चात्र देवता इति तु साम्प्रतम् ।

नदीश्च भारतीं चैव होत्रामाहुतिरूपतः। वरूत्रीं वरणीयत्वात् प्राणाद् बुद्धिस्वरूपिणीम्॥ २४॥
विष्णुश्च प्राणसम्बन्धाद् भारतीत्येव चोदितः। प्राणस्तु भरतो भारततत्वाद् भर्तृरूपतः॥ २५॥
होत्रा हुतत्वतो विष्णुः श्रीर्वाऽपि धिषणा मता॥ *॥

[११-प्राणः, देवपत्न्यश्च देवताः[1]]

(२१९) अभिनोदेवीरवसामहश्शर्मणानृपत्नीः। अच्छिन्नपत्रास्सचन्ताम्॥ ११॥

[अभि। नः। देवीः। अवसा। महः। शर्मणा। नृऽपत्नीः॥
अच्छिन्नऽपत्राः। सचन्ताम्॥ ११॥]

शर्म दत्वैव महतो विष्णो रक्षन्तु नोऽभितः॥ २६॥ प्राणेनैवावसा साकं यस्मादविधवाः सदा।
अतो ह्यच्छिन्नपत्रास्ताः[2] सदायुक्तकर्णभूषणाः॥ २७॥ *॥

[१२-पिपीलिकामध्या निचृद्गायत्री[3]]
[१२-इन्द्राणी, वरुणानी, अग्नायी च देवताः[4]]

(२२०) इहेन्द्राणीमुपह्वयेवरुणानींस्वस्तये। अग्नायींसोमपीतये॥ १२॥

[इह। इन्द्राणीम्। उप। ह्वये। वरुणानीम्। स्वस्तये॥
अग्नायीम्। सोमऽपीतये॥ १२॥]

[१३-१४ द्यावापृथिव्यौ देवते[5]]

(२२१) महीद्यौःपृथिवीचनइमंयज्ञम्मिमिक्षताम्। पिपृतान्नोभरीमभिः॥ १३॥

---

१ अत्र देवपत्न्यो देवता इति शौनककात्यायनयोरैककण्ठ्यम्। भारती पूर्वमन्त्रोक्तेति भारतीपतिः प्राणोऽप्यत्रोच्यत इत्याचार्यपादाः।

२ "अच्छिन्नपत्राः अच्छिन्नपक्षाः। नहि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचिच्छिद्यन्ते" इति सायणः। अर्थास्वारस्यं स्फुटम्।

३ "सुवस्तये" इति विश्लेषेण केवला गायत्री।

४ तथाहि शौनकः—"द्वादश्या देवपत्नयः। इन्द्राणी वरुणानी च अग्नायी च पृथक् स्तुताः" (३.९२.) इति। "एकेन्द्राणीवरुणान्यग्नायीनाम्" इति च कात्यायनः।

५ "द्यावापृथिव्यौ द्वे" (३.९३.) इति शौनकः। "द्यावापृथिव्ये द्वे" इति च कात्यायनः। द्यावापृथिव्याविति

[मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् ॥
पिपृताम् । नः । भरीमऽभिः ॥ १३ ॥]

भरणैर्नः पारयेतां दुःखेभ्यः श्रीश्च भूश्च ते । स्वयं वा भगवानन्ये रोदसी लोकदेवते ॥ २८ ॥ * ॥

(२२२) तयोरिद्घृतवत्पयोविप्रारिहन्तिधीतिभिः । गन्धर्वस्यध्रुवेपदे ॥ १४ ॥

[तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः ॥
गन्धर्वस्य । ध्रुवे । पदे ॥ १४ ॥]

तयोः पयस्तु विज्ञानं घृतवत् सापरोक्षकम् । यल्लोकदेवताऽपि स्याद् भारती ज्ञानदेवता ॥ २९ ॥
विष्णोर्नित्यपदस्थं यज्ज्ञानं [1]तद् घृतवत् पयः । लिहन्ति विप्रास्तज्ज्ञानं बुद्धिभिस्तत्प्रसादतः ।
गां धारयन् वर्तते यद् गन्धर्वस्तेन केशवः ॥ ३० ॥ * ॥

[१५–विराड्गायत्री[2]]

[१५–पृथिवी देवता[3]]

(२२३) स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानश्शर्मसप्रथः ॥ १५ ॥[॥ ६ ॥]

[स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी ॥
यच्छ । नः । शर्म । सऽप्रथः ॥ १५ ॥ ६ ॥]

---

मुख्यतः श्रीश्च भूश्चोच्येते । अमुख्यतश्च तन्नामानाववान्तरदेवते । परममुख्यतस्तु भगवान् नारायण इति । अत्रोत्तरमन्त्रभाष्यानुसारेण श्रीभूभ्यां सह भारत्यपि द्यावापृथिवीदेवतेति ज्ञायते । श्रीभूभारत्यः मन्त्रद्वयदेवता इति पर्यवसितम् ।

१ यद् घृतवत्'' इति प्र. पाठः ।

२ "सियोना पृथिवि भव अनृक्षरा निवेशनी" इति विश्लेषेण केवला गायत्री ।

३ "स्योनेत्यृक् पार्थिवी स्मृता'' (३.९३.) इति शौनकः । "एका पार्थिवी" इति कात्यायनः । [illegible] पृथिवीति भूः भारती चोच्येते ।

**स्योना सुखकरी[1] स्या[2] नो यतो नश्यसि नो नृवत् । निवेशनी साऽऽधारत्वाच्छर्म[3] यच्छ महत्तरम् ॥ ३१ ॥ * ॥**

[१६–देवाः, विष्णुश्च देवताः[4]]

(२२४) अतोदेवाअवन्तुनोयतोविष्णुर्विचक्रमे । पृथिव्याःसप्तधामभिः ॥ १६ ॥

[अतः । देवाः । अवन्तु । नः । यतः । विष्णुः । विऽचक्रमे ॥
पृथिव्याः । सप्त । धामऽभिः ॥ १६ ॥]

**असुरेभ्यो जगद्धृत्वा यतो विष्णुस्त्रिभिः क्रमैः[5] । आरभ्य पृथिवीं सप्तलोकैः[6] साकं जगत्पतिः । चक्रे सुरान् पदस्थानप्यतो देवा अवन्तु नः ॥ ३२ ॥ विशिष्टबलचेष्टत्वाद् विष्णुरित्यभिधा हरेः । प्राणं बलं षकारं च णकारं चाऽह हि श्रुतिः ॥ ३३ ॥ * ॥**

[१७–१८ पिपीलिकामध्या निचृद्गायत्री[7]]
[१७–२१ विष्णुर्देवता]

(२२५) इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूळ्हमस्यपांसुरे ॥ १७ ॥

[इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् ॥
समऽऊळ्हम् । अस्य । पांसुरे ॥ १७ ॥]

**रमन्ति पांसवो यत्र पांसुरं पदमीरितम् । समूढं तत्र विश्वं हि पांसुवज्जगतःपतेः ॥ ३४ ॥ * ॥**

---

१ "स्योनम् । सुम्नम् । शेवम् । शिवम् । शम् । कम्" (३.६.) इति निघण्टुः ।

२ "स्यान्नो—" इति प्र. पाठः ।

३ "शर्मेति न सुखमुच्यते । स्योनेति पुनरुक्तेः । किन्तु गृहमुच्यते । तेन निवेशनीति लोकाधारत्वमुक्त्वा" स्वस्यापि शरणं भूया इति प्रार्थ्यत इति भवति । "सद्म । शरणम् । वरूथम् । छर्दिः । छदिः । छाया । शर्म । अज्म" (३.४.) इति गृहनामसु निघण्टुः । "यच्छ नः शर्म शरणं सर्वतः पृथिवि" इति यास्कः ।

४ "देवानां वाऽत इत्येषा सूक्तशेषस्तु वैष्णवः" (३.९३.) इति शौनकः । "षड् वैष्णव्योऽतो देवा दैवी वा" इति कात्यायनः । अत्र वाशब्देन विकल्पोऽवभासते । तथाऽपि देवानां विष्णोश्च स्फुटं स्तुतिप्रतीतेः समुच्चय इत्येव समीचीनम् । अत एव "आद्या दैवी च" इति टीकायामुक्तम् ।

५ "विष्णुस्त्रिविक्रमैः" इति प्र. पाठः ।

६ यद्यपि पदपाठे "सप्त धामभिः" इभि भिन्ने पदे । सप्तलोकैरिति विशेष्यविशेषणतया च व्याचख्यौ भाष्यकृत् । तेन ज्ञायते सप्तेति तृतीयार्थे प्रथमेति । "सप्तसु प्रथमा" इति श्रवणात् ।

७ 'त्रेधा' इत्यत्र गुणव्यूहेन "त्रइधा" इत्यष्टाक्षरत्वे केवला गायत्री । उत्तरमन्त्रे च "अदाभिमः" इति विश्लेषेण ।

(२२६) त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः । अतोधर्माणिधारयन् ॥ १८ ॥

[त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः ॥
अतः । धर्माणि । धारयन् ॥ १८ ॥]

**वेदान् कालान् गुणान् लोकान् देवमानुषदानवान् । चेतनाचेतनान् मिश्रान् त्रीणि पदा विचक्रमे ॥ ३५ ॥ रक्षकत्वेन सर्वाणि स्रष्टृहर्तृत्वतस्तथा[1] । मोक्षदत्वेन च विभुः स्तम्भनीयो न केनचित् । धारकांश्चैव वाय्वादीन् धारयन् वर्तते ततः ॥ ३६ ॥ * ॥**

[१९—निचृद्गायत्री[2]]

(२२७) विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे । इन्द्रस्ययुज्यस्सखा ॥ १९ ॥

[विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे ॥
इन्द्रस्य । युज्यः । सखा ॥ १९ ॥]

**जानीथ विष्णुकर्माणि प्राणिकर्माण्यशेषतः । यतो जातान्यविज्ञातो[3] भगवान् सर्वदैव च । [4]स्पशाज्ञातदृशौ यस्मादिन्द्रस्य सहितः सखा[5] ॥ ३७ ॥ [6]प्राणस्यैवेन्द्रनाम्नश्च कस्मिन् त्वहमिति श्रुतेः । [7]त्वयेदिन्द्रेतिवचनात् प्राण इन्द्राभिधो मतः ॥ ३८ ॥ * ॥**

(२२८) तद्विष्णोःपरमम्पदंसदापश्यन्तिसूरयः । दिवीवचक्षुराततम् ॥ २० ॥

[तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः ॥
दिविऽइव । चक्षुः । आऽततम् ॥ २० ॥]

---

१ "—भर्तृत्वतस्तथा" इति प्र. पाठः ।
२ "इन्द्रस्य युजियः सखा" इति विश्लेषेण केवला गायत्री ।
३ "जानात्यविज्ञातो—" इति क्वचित् कोशेषु पठ्यते ।
४ "स्पर्शाज्ञातदृशौ" इति यत् कोशेषु पठ्यते स प्रमाद एवेति भाति ।
५ "सहितः सदा" इति क्वचित् । ६ "प्राणस्य चेन्द्रनाम्नश्च" इति च पाठः ।
७ "त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः । त्वमस्माकं तव स्मसि" (ऋ. ८. ९२. ३२.) इति समग्रो मन्त्रः ।

रमाब्रह्मशिवादिभ्यो यद् विष्णोः परमं पदम् । रूपं पश्यन्ति निर्मुक्ताः संसारात् सूरयः सदा। चक्षुर्दिवीव व्याप्तं यदद्दश्यं फलदर्शितम् ॥ ३९ ॥ * ॥

(२२९) तद्विप्रा॑सोविप॒न्यवो॑जागृ॒वांस॒स्समि॑न्धते । विष्णो॒र्यत्प॑र॒मम्प॒दम् ॥ २१ ॥ [॥ ७ ॥]

[तत् । विप्रा॑सः । विप॒न्यवः॑ । जागृ॒ऽवांसः॑ । सम् । इ॒न्ध॒ते ॥
विष्णोः॑ । यत् । प॒र॒मम् । प॒दम् ॥ २१ ॥ ७ ॥]

[इति द्वाविंशं सूक्तम्]

सन्दीपयन्ति विज्ञानैः संसारात् प्राप्तजागराः । विपन्यवो ज्ञानितमा[1] विष्णोर्यत् परमं पदम् । तात्पर्याभ्यधिकज्ञप्त्या[2] अर्थमेतं पुनर्जगौ ॥ ४० ॥ * ॥ * ॥

—२३—

[तीव्राः चतुर्विंशतिः, मेधातिथिः काण्वः]

[१–निचृद्गायत्री[3], १–१८ षड्जः स्वरः] [१–वायुर्देवता[4]]

(२३०) ती॒व्रास्सोमा॑सआग॒ह्याशी॑र्वन्तस्सु॒ताइ॒मे । वायो॒तान्प्रस्थि॑तान्पिब ॥ १ ॥

[ती॒व्राः । सोमा॑सः । आ । ग॒हि॒ । आ॒शीःऽवन्तः । सु॒ताः । इ॒मे ॥
वायो॒ इति॑ । तान् । प्रऽस्थि॑तान् । पि॒ब ॥ १ ॥]

वीर्यवन्तश्च ये सोमा यजमानेष्टसाधकाः । पिब तान् ॥ * ॥

---

१ "मनीषी । मन्धाता । विधाता । विपः । मनश्चित् । विपश्चित् । विपन्यवः" (३.१५.) इति मेधाविनामसु निघण्टुः । यद्यपि "विप्रः । विग्रः । गृत्सः । धीरः" इति विप्रशब्दोऽपि मेधाविनामसु पठ्यत इति "विप्रासो विपन्यवः" इत्यापाततः पुनरुक्तमिव । तथाऽपि "विप्रैः काण्वाद्यैः" इति भाष्यकृता पुरैवान्यथा व्याख्यातत्वान्न पुनरुक्तिरित्यवगन्तव्यम् । विप्रा इति जातिकृतं श्रैष्ठ्यमाह । विपन्यव इति ज्ञानकृतम् ।

२ "तात्पर्याधिवयविज्ञप्त्या—" इति प्र. पाठः । तात्पर्यस्याभ्यधिकं यथा स्यात् तथा ज्ञप्तिः तात्पर्याभ्यधिकज्ञप्तिः । अभ्यधिकतात्पर्यज्ञप्त्यै इति वक्तव्ये विशेषणस्य परनिपातो वा ।

३ "आगहिआशीर्वन्तः" इति विश्लेषेण केवला गायत्री ।

४ "तीव्राश्चतुर्विंशतिर्वायव्यैका" इति कात्यायनः । "वायोस्तीत्रेन्द्रवायुभ्यां द्वयृचो द्वाभ्यां ततः परम्" इति शौनकः ।

[पिपीलिकामध्या निचृद्गायत्री[1]]

[२-३ इन्द्रवायू देवते[2]]

(२३१) उभादेवादिविस्पृशेन्द्रवायूहवामहे । अस्यसोमस्यपीतये ॥ २ ॥

[उभा । देवा । दिविऽस्पृशा । इन्द्रवायूइति । हवामहे ॥
अस्य । सोमस्य । पीतये ॥ २ ॥]

**सर्वदेवानां ज्ञानाधिक्यौ[3] दिविस्पृशौ ॥ ४१ ॥ * ॥**

[३-११ गायत्री]

(२३२) इन्द्रवायूमनोजुवाविप्राहवन्तऊतये । सहस्राक्षाधियस्पती ॥ ३ ॥

[इन्द्रवायूइति । मनःऽजुवा । विप्राः । हवन्ते । ऊतये ॥
सहस्रऽअक्षा । धियः । पतीइति ॥ ३ ॥]

**मनसः प्रेरकौ चैव बहुज्ञानौ धियस्पती ॥ * ॥**

[४-६ मित्रावरुणौ देवते[4]]

(२३३) मित्रंवयंहवामहेवरुणंसोमपीतये । जज्ञानापूतदक्षसा ॥ ४ ॥

[मित्रम् । वयम् । हवामहे । वरुणम् । सोमऽपीतये ॥
जज्ञाना । पूतऽदक्षसा ॥ ४ ॥]

**जज्ञानौ व्यज्यमानौ तु यजमानस्य शोधकौ ॥ ४२ ॥ * ॥**

---

१ "दिविस्पृशा इन्द्रवायू" इति विश्लेषेण केवला गायत्री ।

२ "ऐन्द्रवायव्यौ" इति कात्यायनः । ३ "ज्ञाताधिक्यौ" इति क्वचित् पाठः ।

४ "मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः" इति कात्यायनः । "तृचो मित्रावरुणयोस्तथेन्द्राय मरुत्वते । तृचो विश्वेषां देवानां पूष्ण आघृणये तृचः" (३. ९४-५) इति शौनकश्च ।

(२३४) ऋतेनयावृतावृधावृतस्यज्योतिषस्पती । तामित्रावरुणाहुवे ॥ ५ ॥ [॥ ८ ॥]

[ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पतीइति ॥
ता । मित्रावरुणा । हुवे ॥ ५ ॥ ८ ॥]

परेण ब्रह्मणा तस्मिन् वृद्धौ सत्यपती सदा । सत्यं ज्योतिः प्रकाशत्वात् तौ मित्रावरुणौ हुवे ॥ ४३ ॥ * ॥

(२३५) वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः । करतान्नस्सुराधसः ॥ ६ ॥

[वरुणः । प्रऽअविता । भुवत् । मित्रः । विश्वाभिः । ऊतिऽभिः ॥
करताम् । नः । सुऽराधसः ॥ ६ ॥]

संसिद्धान् कुरुतां नस्तौ ॥ * ॥

[७–९ एकोनपञ्चाशन्मरुतः, इन्द्रश्च[१] देवताः]

(२३६) मरुत्वन्तंहवामहइन्द्रमासोमपीतये । सजूर्गणेनतृम्पतु ॥ ७ ॥

[मरुत्वन्तम् । हवामहे । इन्द्रम् । आ । सोमऽपीतये ॥
सऽजूः । गणेन । तृम्पतु ॥ ७ ॥]

सगणस्तृप्यतां हरिः ॥ * ॥

(२३७) इन्द्रज्येष्ठामरुद्गणादेवासःपूषरातयः । विश्वेममश्रुताहवम् ॥ ८ ॥

[इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः ॥
विश्वे । मम । श्रुत । हवम् ॥ ८ ॥]

पूषा पूर्णत्वतो विष्णुस्तन्मित्राः पूषरातयः ॥ ४४ ॥ * ॥

---

१ पूर्वसूक्ते भाष्योक्तदिशा अत्रापि मरुद्गणसहितः प्रधानमरुत्प्राण एव मुख्यत इन्द्र इत्यवधेयम् ।

(२३८) हतवृत्रंसुदानवइन्द्रेणसहसायुजा । मानोदुश्शंसईशत ॥ ९ ॥

[हत । वृत्रम् । सुऽदानवः । इन्द्रेण । सहसा । युजा ॥
मा । नः । दुःऽशंसः । ईशत ॥ ९ ॥]

सहसा बलरूपेण शक्रेण सहिताः सुराः । मद्ज्ञानं हतातीव दानशीला न शक्नुयात् ॥ ४५ ॥ दुर्वाक् तद्वान् पुमान् वा नः ॥ * ॥

[१०–१२ विश्वे देवा देवताः]

(२३९) विश्वान्देवान्हवामहेमरुतस्सोमपीतये । उग्राहिपृश्निमातरः ॥ १० ॥ [॥ ९ ॥]

[विश्वान् । देवान् । हवामहे । मरुतः । सोमऽपीतये ॥
उग्राः । हि । पृश्निऽमातरः ॥ १० ॥ ९ ॥]

भारती पृश्निरुच्यते[1] । गोरूपा च क्वचित् साऽभूत् तत्सुताश्चाखिलाः सुराः ॥ ४६ ॥ अन्यत्रापि सुतास्तस्याः ॥ * ॥

(२४०) जयतामिवतन्यतुर्मरुतामेतिधृष्णुया । यच्छुभंयाथनानरः ॥ ११ ॥

[जयताम्ऽइव । तन्यतुः । मरुताम् । एति । धृष्णुऽया ॥
यत् । शुभम् । याथन । नरः ॥ ११ ॥]

जयतामिव तद्ध्वनिः । धैर्याद् याति यद्वा विष्णुं वायुं वा याथनोत्तमम् ॥ ४७ ॥ * ॥

[१२-निचृद्गायत्री[2]]

(२४१) हस्काराद्विद्युतस्पर्यतोजाताअवन्तुनः । मरुतोमृळयन्तुनः ॥ १२ ॥

---

१ "स्वः । पृश्निः । नाकः । गौः । विष्टप् । नभः । इति षट् साधारणानि" (१. ४.) इति निघण्टुः । अत्र यद्यपि "साधारणान्युत्तराणि षड् दिवश्चाऽदित्यस्य च" इति यास्को व्याचख्यौ । "पृश्निरादित्यो भवति । प्राश्नुत एनं वर्ण इति नैरुक्ताः" इति चाऽह । अथापि गोवाचित्वं प्रयोगसिद्धमङ्गीकार्यमेव भवति । तद्यथा गौरिति न केवलमादित्यस्य दिवश्च नाम, किन्तु धेन्वादेरपि, तथा पृश्निरित्यपि ।

२ "विद्युतस्परि अतः" इति पादविश्लेषेण केवला गायत्री ।

[हस्कारात् । विऽद्युतः । परि । अतः । जाताः । अवन्तु । नः ॥
मरुतः । मृळयन्तु । नः ॥ १२ ॥]

दोषत्यागाद् गुणप्राप्तेर्हस्कारो वायुरुच्यते । विद्युद् विशिष्टज्ञानत्वाद् भारती तत्सुता हि ये[1] ॥ ४८ ॥ सर्वे देवाश्च[2] मरुतो रक्षन्त्वेतादृशो हरिः । तत्तदन्तर्गतत्वेन ॥ * ॥

[१३–१५ गायत्री छन्दः, पूषा देवता]

(२४२) आपूषञ्चित्रबर्हिषमाघृणेधरुणंदिवः । आजानष्टंयथापशुम् ॥ १३ ॥

[आ । पूषन् । चित्रऽबर्हिषम् । आघृणे । धरुणम् । दिवः ॥
आ । अज । (आ । आज ।) नष्टम् । यथा । पशुम् ॥ १३ ॥]

पूषा पूर्णत्वतश्च सः ॥ ४९ ॥ [3]आघृणिः पूर्णरश्मित्वादाऽज[4] नश्चित्रबर्हिषम् । ब्रह्माणं च दिवो देव्या भर्तारं वायुमाज गाम् ॥ ५० ॥ यथा गतम् ॥ * ॥

(२४३) पूषाराजानमाघृणिरपगूळ्हङ्गुहाहितम् । अविन्दच्चित्रबर्हिषम् ॥ १४ ॥

[पूषा । राजानम् । आघृणिः । अपऽगूळ्हम् । गुहा । हितम् ॥
अविन्दत् । चित्रऽबर्हिषम् ॥ १४ ॥]

जगद्राजमविन्दद् भगवान् सुतम् । स्वकुक्षिगूढं ब्रह्माणम् ॥ * ॥

(२४४) उतोसमह्यमिन्दुभिष्षड्युक्ताँअनुसेषिधत् । गोभिर्यवन्नचर्कृषत् ॥ १५ ॥ [॥ १० ॥]

[उतोइति । सः । मह्यम् । इन्दुभिः । षट् । युक्तान् । अनुऽसेसिधत् ॥
गोभिः । यवम् । न । चर्कृषत् ॥ १५ ॥ १० ॥]

---

१ "हि ते" इति क्वचित् । २ "सर्वदेवाश्च" इति च प्र. पाठः ।

३ प्रसिद्धपूषपरत्वे आघृणिशब्दमेवं शौनको व्याचख्यौ–"आसक्तो हि घृणिस्तस्य दध्नः पूर्णो दृती रथे । आघृणिस्तत् स्तुतः पूषा कीरिभी रिभ्यते ततः" (३. ९५–६.) इति ।

"४ –रश्मित्वादज" इति क्वचित् ।

**महां सोमैश्च तर्पितः ॥ ५१ ॥ साधयामास षड् युक्तानीन्द्रियाणि[1] चकार च । साधनं शक्तिदानं तु गोभिर्वाभिर्यथा यवम् ॥ ५२ ॥ * ॥**

[१६– निचृद्गायत्री[2]]

[१६–२२ आपो देवताः[3]]

(२४५) अम्बयोयन्त्यध्वभिर्जामयोअध्वरीयताम् । पृञ्चतीर्मधुनापयः ॥ १६ ॥

[अम्बयः । यन्ति । अध्वऽभिः । जामयः । अध्वरिऽयताम् ॥
पृञ्चतीः । मधुना । पयः ॥ १६ ॥]

**अम्बयो मातरो ह्यापः कारणत्वात् सहोदराः । जगतो जामयो यस्मात् सह ताभिर्विवर्द्धते ॥ ५३ ॥ अध्वरं कुर्वतां क्षीरं सोमं चापि प्रपृञ्चतीः । सम्पृक्ताः ॥ * ॥**

[१७– पादनिचृद्गायत्री[4]]

(२४६) अमूर्याउपसूर्येयाभिर्वासूर्यस्सह । तानोहिन्वन्त्वध्वरम् ॥ १७ ॥

[अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह ॥
ताः । नः । हिन्वन्तु । अध्वरम् ॥ १७ ॥]

**याः समीपस्थाः सूर्यस्य सहिता अपि ॥ ५४ ॥ * ॥**

[१८– निचृद्गायत्री[5]]

(२४७) अपोदेवीरुपह्वयेयत्रगावःपिबन्तिनः । सिन्धुभ्यःकर्त्वंहविः ॥ १८ ॥

---

१ "युक्तानिन्द्रियाणि" इति च पाठान्तरम् ।

२ "यन्तियध्वभिः" इति विच्छेदेन केवला गायत्री ।

३ "अर्द्धाष्टमा अपां ज्ञेयाः" (३. ९७.) इति शौनकः ।

४ प्रतिपादं सप्ताक्षरेति पादनिचृत् । अथ च क्षैप्रसंयोगविश्लेषेण केवला गायत्री । तद् यथा–"अमूर्या उप सूरिये याभिर्वा सूरियः सह । ता नो हिन्वन्तु अध्वरम्" इति ।

५ "कर्तुवं हविः" इति विश्लेषेण केवला गायत्री ।

[अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबन्ति । नः ॥
सिन्धुऽभ्यः । कर्त्वम् । हविः ॥ १८ ॥]

ह्वयामि ता याः पिबन्ति गावो नः सर्वथा हविः । कार्यं नदीभ्यः ॥ * ॥

[१९– पुरउष्णिक् छन्दः,[१] ऋषभः स्वरः]

(२४८) अप्स्व१न्तरमृतमप्सुभेषजमपामुतप्रशस्तये । देवाभवतवाजिनः ॥ १९ ॥

[अप्ऽसु । अन्तः । अमृतम् । अप्ऽसु । भेषजम् । अपाम् । उत । प्रऽशस्तये ॥
देवाः । भवत । वाजिनः ॥ १९ ॥]

तास्वन्तरदृश्यममृतं स्थितम् ॥ ५५ ॥ अपामेव प्रशंसार्थं सहायाः सन्तु नः सुराः ॥ * ॥

[२०–अनुष्टुप् छन्दः[२], गान्धारः स्वरः]

(२४९) अप्सुमेसोमोअब्रवीदन्तर्विश्वानिभेषजा । अग्निंश्चविश्वशम्भुवमापश्चविश्वभेषजीः ॥ २० ॥ [॥ ११ ॥]

[अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि । भेषजा ॥
अग्निम् । च । विश्वऽशम्भुवम् । आपः । च । विश्वऽभेषजीः ॥ २० ॥ ११ ॥]

तात्पर्यार्थं पुनर्वाक्यं सुखाधारो हुताशनः ॥ ५६ ॥ * ॥

[२१–प्रतिष्ठा गायत्री[३] छन्दः, षड्जः स्वरः]

(२५०) आपःपृणीतभेषजंवरूथन्तन्वे३ममं । ज्योक्चसूर्यन्दृशे ॥ २१ ॥

---

१ अष्टाविंशत्यक्षरा उष्णिग् भवति । तत्र प्रथमपादः द्वादशाक्षरः द्वितीयतृतीयौ च अष्टाक्षरौ यदि सा पुरउष्णिगिति भवति । यदाह पिङ्गलनागः– "उष्णिग् गायत्रौ जागतश्च (३. १८.) ककुम्मध्ये चेदन्त्यः (१९.) पुरउष्णिक् पुरः" (२०.) इति । कात्यायनश्चाऽऽह "अप्स्वन्तः पुरउष्णिक्" इति । अत्र प्रथमपादे सकम्पोच्चारणेन द्वादशाक्षरत्वं भवति ।

२ आह च कात्यायनः "पराऽनुष्टुप् । तिस्रश्चान्त्याः" इति ।

३ प्रतिष्ठायामष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, षळक्षरस्तृतीयः । आह च पिङ्गलनागः "षट्कसप्तका-

[आपः। पृणीत। भेषजम्। वरूथम्। तन्वे। मम॥
ज्योक्। च। सूर्यम्। दृशे॥ २१॥]

**वरूथं गुप्तिरुद्दिष्टा ज्योतिर्विष्णुर्दृशे तथा। सूरिप्राप्यो यतो विष्णुः सूर्य इत्यभिधीयते॥ ५७॥ पृण दाने॥ *॥**

[२२–२४ अनुष्टुप् छन्दः, गान्धारः स्वरः]

(२५१) इदमापःप्रवहतयत्किञ्चदुरितम्मयि। यद्वाहमभिदुद्रोहयद्वाशेपउतानृतम्॥ २२॥

[इदम्। आपः। प्र। वहत। यत्। किम्। च। दुःऽइतम्। मयि॥
यत्। वा। अहम्। अभिऽदुद्रोह। यत्। वा। शेपे। उत। अनृतम्॥ २२॥]

**अखिलं पापमापः प्रवहतापि नः। हिंसाजं शेपजं चैव तथैवानृतसम्भवम्॥ ५८॥ *॥**

[२३–पूर्वार्द्धस्य आपो देवताः, उत्तरार्द्धस्य आपः, अग्निश्च देवताः[1]]

(२५२) आपोअद्यान्वचारिषंरसेनसमगस्महि। पयस्वानग्नआगहितम्मासंसृजवर्चसा
॥ २३॥

[आपः। अद्य। अनु। अचारिषम्। रसेन। सम्। अगस्महि॥
पयस्वान्। अग्ने। आ। गहि। तम्। मा। सम्। सृज। वर्चसा॥ २३॥]

**रसेन सङ्गताश्च स्मो यस्मादनुचरा हि वः॥ *॥**

---

ष्टकैर्वर्द्धमाना (३. १४.) विपरीता प्रतिष्ठा" (१५.) इति। "एकविंशी प्रतिष्ठा" इति च कात्यायनोऽप्यस्या ऋचः प्रतिष्ठात्वमूरीचकार।

१ यद्यपि "अध्यर्द्धाऽन्त्याऽग्निदेवता" (३. ९७.) इति शौनकोऽस्याः केवलमग्निपरतामाह। "अन्त्याऽध्यर्द्धाऽऽग्नेयी" इति कात्यायनश्च तदेवाऽह। तथाऽपि "पयस्वानग्ने" इत्यग्नेः पयस्वत्त्वोक्त्याऽप्साहचर्यलाभात् ताश्च स च देवता इति युक्तः पन्थाः।

[२४-अग्नीन्द्राद्याः सर्वे देवाः देवताः[1]]

(२५३) सम्माग्नेवर्चसासृजसम्प्रजयासमायुषा । विद्युर्मेअस्यदेवाइन्द्रोविद्यात्सहऋषिभिः ॥ २४ ॥ [॥ १२ ॥]

[सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ॥
विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ २४ ॥ १२ ॥]

[इति त्रयोविंशं सूक्तम्]

**कुर्युर्मामपि विद्वांसं मदर्थं सर्वदा सुराः । एतं मामिति वाऽर्थः स्यादनुजानन्तु वोदितम् ॥ ५९ ॥ * ॥ * ॥**

[इति पञ्चमोऽनुवाकः]

---

— २४ —

**शुनःशेपो ददर्शात उत्तरं परमृक्शतम्[2] । यूपादात्मविमोक्षाय स्तुवन् देवान् पृथक्पृथक् ॥ ६० ॥ [3]त्र्यूनं शतमिहैवान्यच्चतुर्थे पञ्चमेऽपिच । मण्डले ब्राह्मणोक्तस्तु क्रमोऽत्रापि द्व्यृचां भवेत् ॥ ६१ ॥—**

---

१ यद्यपि पूर्वोक्तदिशा शौनकश्च कात्यायनश्चैतामृचमाग्नेयीमेवाऽहतुः । देवा विद्युरिति इन्द्रो विद्यादिति सदेवतागणस्येन्द्रस्य प्रस्तावेऽपि तेषां किमिति न मन्त्रदेवतात्वमिति चिन्त्यम् ।

२ अत एव हि बृहद्देवतायामुक्तम्—"प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चिनः । क्षुद्रसूक्तमहासूक्ता अन्त्ये मध्येषु मध्यमाः" (३. ११६.) इति ।

३ अस्मिन् षष्ठे त्वनुवाके सप्तनवतिरेवर्चः पठ्यन्ते । अवशिष्टासु तिसृषु द्वे चतुर्थमण्डले, एका च पञ्चमे पठ्यन्ते । तथाहि श्रूयते—"त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्" (४. १. ४.) इति । "स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि" (४. १. ५.) इति च चतुर्थे । तथैका पञ्चमे— "शुनश्चिच्छेपं निदितं सहस्राद् यूपादमुञ्चो अशमिष्ट हि षः । एवास्मदग्ने वि मुमुग्धि पाशान् होतश्चिकित्व इह तू निषद्य" (५. २. ५.) इति ।

[कस्य नूनं पञ्चदश, शुनःशेप आजीगर्तिः[1]]
[१-२ त्रिष्टुप् छन्दः,[2] धैवतः स्वरः]
[१ प्रजापतिर्देवता[3]]

(२५४) कस्यनूनङ्कतमस्यामृतानाम्मनामहेचारुदेवस्यनाम ॥
कोनोमह्याअदितयेपुनर्दात्पितरञ्चदृशेयम्मातरञ्च ॥ १ ॥

[कस्य । नूनम् । कतमस्य । अमृतानाम् । मनामहे । चारु । देवस्य । नाम ॥
कः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् ।
च ॥ १ ॥]

कर्तुः परानन्दतनोरिदानीं मनामहे चारु विष्णोः सुराणाम् । नामेशश्चेदिन्दिरायै पुनर्दाद् दृशेयं तां मातरं तं च देवम् ॥ ६२ ॥ स मुक्तानाममृतानामजेशमुख्यानां चाभ्यधिको यत् सुखादौ । तेनोक्तोऽसौ कतमोऽखण्डितत्वात् स चादितिर्महती तन्मही च[4] ॥ ६३ ॥ देशानन्त्यात् तन्महित्वं[5] गुणैस्तु कालाच्चोक्तं तस्य चाखण्डितत्वम् । स एव माता च पिता[6] च देवस्तस्मिन् सदा संस्थितास्तत् पुनर्दात् ॥ ६४ ॥ अस्ति विश्वं तेन चैवादितिः स श्रीर्वा ब्रह्मा प्रोक्त एवं क एव । गुणाश्च तस्याभ्यधिकाः सदैव जीवेभ्यस्तत् सोऽपि तद्वाक्ययोग्यः ॥ ६५ ॥ ददात्वसौ विष्णवे चेन्दिरायै प्राप्तानस्मानपि तौ सर्वगत्वात् । विशेषदेशप्राप्तितस्तस्य चाऽऽप्तिर्वैकुण्ठादिर्देश[7] उक्तो हरेश्च ॥ ६६ ॥ * ॥

[२-अग्निर्देवता]

(२५५) अग्नेर्वयम्प्रथमस्यामृतानाम्मनामहेचारुदेवस्यनाम ॥
सनोमह्याअदितयेपुनर्दात्पितरञ्चदृशेयम्मातरञ्च ॥ २ ॥

---

१ अयं शुनःशेपोऽजीगर्तस्य पुत्रः । अयं च विश्वामित्रेण स्वीकृतः पुत्रः । तथाच कृत्रिमो वैश्वामित्र इति चोच्यते । तदात्वे च तस्य देवरात इति नाम ।

२ "त्रिष्टुभो रुद्राः" (३. ६.) इति पिङ्गलोक्तेराहत्य चतुर्षु पादेषु चतुश्चत्वरिंशदक्षरा हि त्रिष्टुप् ।

३ "कः प्रजापतिरुद्दिष्टः" इत्युक्तेः क इति प्रजापतिः । करोतीति कः । स च ब्रह्मा । मुख्यतश्च विष्णुरिति हृदयम् । शौनकोऽप्याह- "कस्य नूनं तु काय्याद्या आग्नेय्यृक्" (३. ९८.) इति । "आदौ काय्याग्नेय्यौ" इति च कात्यायनः । "कः किं यत् तत् पदमनुमत्तमम्" इति विष्णुसहस्रनामसु । "पद्मनाभः प्रजापतिः" इति च ।

४ "तन्महीव" इति क्वचित् ।

५ "तन्महत्त्वम्" इति प्र. पाठः ।

६ "माता स पिता" इति क्वचित् ।

७ "वैकुण्ठादिर्लोक उक्तो-" इति प्र. पाठः ।

[अ॒ग्नेः । व॒यम् । प्र॒थ॒मस्य॑ । अ॒मृता॑नाम् । मना॑महे । चारु॑ । दे॒वस्य॑ । नाम॑ ॥
सः । नः॒ । म॒ह्यै । अदि॑तये । पुनः॑ । दा॒त् । पि॒तर॑म् । च॒ । दृ॒शेय॑म् । मा॒तर॑म् ।
च॒ ॥ २ ॥]

तस्यैवान्यद् रूपमग्न्याख्यमुक्तं यो यज्ञेशो हूयते जामदग्न्यः । स देवानां प्रथमो नाम तस्य स्मृतं सार्थं सर्वकामप्रदं स्यात् ॥ ६७ ॥ * ॥

[३–पिपीलिकामध्या विराड्गायत्री[1]]

[३–५ सविता देवता,[2] षड्जः स्वरः]

(२५६) अ॒भित्वा॑देवसवित॒रीशा॑नं॒वार्या॑णाम् । सदा॑वन्भा॒गमी॑महे ॥ ३ ॥

[अ॒भि । त्वा॒ । दे॒व॒ । स॒वि॒त॒रिति॑ । ईशा॑नम् । वार्या॑णाम् ॥
सदा॑ । अ॒व॒न् । भा॒गम् । ई॒म॒हे॒ ॥ ३ ॥]

सवितेत्यपरं रूपं जगत्कारणमीशितुः । वित्तानामीश्वरं तत्तु[3] वार्यं हि वरणीयतः ॥ ६८ ॥ वित्तं रक्षन्नवन्नित्यमात्मानं भागमेम्यहम् । त्वामैश्वर्यादिसमितिम् ॥ * ॥

[४–५ गायत्री छन्दः]

(२५७) यश्चि॒द्धि॒त॑इ॒त्थाभगः॑शशमा॒नः॒पु॒रानि॒दः । अ॒द्वे॒षोहस्त॑योर्द॒धे ॥ ४ ॥

[यः । चि॒त् । हि । ते॒ । इ॒त्था । भगः॑ । श॒श॒मा॒नः । पु॒रा । नि॒दः ॥
अ॒द्वे॒षः । हस्त॑योः । द॒धे ॥ ४ ॥]

योऽपि ते परमो भगः ॥ ६९ ॥ इत्थम्भूतोऽविकारित्वाच्छशमानः सुखाधिकः[4] । नेदीयसो ब्रह्मणोऽपि पूर्वो द्वेषादिवर्जितः । हस्तयोस्तं दधे देव तव रूपमनामयम् ॥ ७० ॥ निदो दवीय

---

१ "वारियअणाम्" इति विश्लेषेण केवला गायत्री ।

२ "सवितुरस्तृचः" (३. ९८.) इति शौनकः । "सावित्रस्तृचो गायत्रः" इति चानुक्रमणिका । "सविता प्रपितामहः" इति विष्णुसहस्रनामसु ।

३ "तं तु" इति प्र. पाठः । तत्तु रूपं वित्तानामीश्वरम् ।

४ "सुखात्मकः" इति क्वचित् पाठः ।

इति तु विरुद्धार्थद्वयाभिधौ । दूरसामीप्यवचनावुभावपि[1] महोदधौ ॥ ७१ ॥ यदाऽन्यः सविता देवस्तव स्वामी भगो हरिः । अद्वेषो विष्णुरित्युक्तेस्तमहं[2] हस्तयोर्दधे ॥ ७२ ॥ * ॥

(२५८) [3]भगंभक्तस्यतेवयमुदशेमतवावसा । मूर्द्धानंरायआरभे ॥ ५ ॥ [॥ १३ ॥]

[भगंऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा ॥
मूर्द्धानम् । रायः । आऽरभे ॥ ५ ॥ १३ ॥]

[4]विष्णुभक्तस्य ते रायो मूर्द्धानं राय उत्तमम् । तवावसाऽऽरभे विद्यामुच्चैरश्नामि तत्फलम् ॥ ७३ ॥ ऐश्वर्यादिगुणा यस्य भगो भक्तं परात्मनः । तस्य ते वित्तमश्नामि तव रक्षाबलाद्धरे[5] ॥ ७४ ॥ * ॥

[६–९ निचृत् त्रिष्टुप्[6]]

[६–१५ वरुणः देवता[7], ६–१२ धैवतः स्वरः]

(२५९) नहितेक्षत्रन्नसहोनमन्युंवयश्चनामीपतयन्तआपुः ॥
नेमाआपोअनिमिषञ्चरन्तीर्नयेवातस्यप्रमिनन्त्यभ्वम् ॥ ६ ॥

---

१ "वचनावुभाविति महोदधौ" इति क्वचित् ।

२ "विष्णुरित्युक्तस्तमहम्" इति क्वचित् ।

३ शौनकस्तु "भगभक्तस्य भागी वा" (३. ९८.) इतीयं ऋग् भगदेवताका वेत्याह । "तृचो गायत्रोऽस्यान्त्या भागी वा" इति कात्यायनश्च । भग इति सवितेति चैकैव देवता स्तूयते नामभेदेन । नाप्यत्र भगः स्तुत्यत्वेन प्रस्तुत इति सावित्रस्तृच इत्येव सूक्तम् ।

४ अत्र सायणः— "भगभक्तस्य धनेन संयुक्तस्य तवावसा रक्षणेन रायो धनस्य मूर्द्धानमारभे । धनिकत्वप्रसिद्धया व्याप्ता भूयामेत्यर्थः" इति व्याचख्यौ । नन्वहो एतावन्तं लौकिकमुपदेशं कुर्वन् वेदः कथं मोक्षपथं दर्शयेत् । किं धनकनकादिभोगसमृद्धयर्थं वेदमधीयते? उत तत्र विरक्ताः सच्चिदानन्दज्ञप्त्यै ।

५ "रक्षा बलाद्धरेः" इति क्वचित् ।

६ इतः परं आसूक्तान्तं दश मन्त्रास्त्रैष्टुभाः । तदुक्तं कात्यायनेन "वारुणं त्रैष्टुभम्" इति । अक्षरव्यूहेन च केवलत्रिष्टुप्त्वं सम्पाद्यम् । तथाचास्मिन् मन्त्रे चतुर्थचरणे "प्रमिनन्तियभ्वम्" इति विश्लेषेण चतुश्चत्वारिंशदक्षरतायां कृतायां केवला त्रिष्टुप् ।

७ शौनकोऽप्याह— "परं यच्चिच्च वारुणम्" (३. ९८.) इति । इतः परं दशर्चः "यच्चिद्धि" इत्यादि पञ्चविंशं सूक्तं च वरुणदैवतमिति । ततश्च इत उत्तरा एकत्रिंशन्मन्त्रा वरुणदेवताः । वरुणान्तर्गतो नारायणो मुख्यतः, क्वचिद् वरुणोऽपि तत्रतत्रेति हृदयम् । "वरुणो वारुणो वृक्षः" इति च सहस्रनामसु ।

[नहि । ते । क्षत्रम् । न । सहः । न । मन्युम् । वयः । चन । अमीइति । पतयन्तः । आपुः ॥ न । इमाः । आपः । अनिऽमिषम् । चरन्तीः । न । ये । वातस्य । प्रऽमिनन्ति । अभ्वम् ॥ ६ ॥]

क्षतात् त्राणं ते बलं संविदं च[1] पूर्णं नाऽपुर्मुक्तिगा ये विशिष्टाः । अपि स्वयं संसृतेरुत्पतन्तः पतयन्तोऽन्याञ्छिष्यभक्तानुदाराः ॥ ७५ ॥ सदा शुभान्याचरन्तोऽपि देवा अब्देवता आप इति श्रुतिर्यत् । गङ्गाद्या वा वायुदेवस्य विष्णोरुत्पत्तिं ये जानते देवसङ्घाः । वयः[2] सुपर्णा इति वाऽपि ॥ * ॥

(२६०) [3]अबुध्नेराजावरुणोवनस्योर्ध्वंस्तूपंददतेपूतदक्षः ॥
नीचीनास्स्थुरुपरिबुध्नएषामस्मेअन्तर्निहिताःकेतवस्स्युः ॥ ७ ॥

[अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते । पूतऽदक्षः ॥ नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मेइति । अन्तः । निऽहिताः । केतवः । स्युरितिस्युः ॥ ७ ॥]

अबुध्ने प्रकाशतः सम्भजतः स्वमुच्चैः ॥ ७६ ॥ स्तूपं स्थानं ददते पूतदक्षो नीचस्था अप्यूर्ध्वगास्तेन तस्थुः । नीचाश्च ये मुक्तिगा मानुषाद्यास्तेषां बुध्नो नीचलोकः सुरेभ्यः । नीचा गुणा अप्रकाशोऽथवैषां[4] नीचोच्चत्वं क्रमशश्चाऽऽ विरिञ्चात् ॥ ७७ ॥ अस्माकमन्तर्निहितानि नित्यं ज्ञानानि भूयासुरुताधिकानि[5] । भवन्त्वर्हा भवितुं वा भविष्याः स्युर्द्विर्ग्रहे प्रार्थनैवाधिकार्थे ॥ ७८ ॥ * ॥

---

१ "बलसंविदं च" इति प्र. पाठः । मन्युशब्दः कोपवाचीति सायणादयः प्रचलितकोशमात्रशरणाः । मनुधातोरवबोधनार्थात् मन्युर्ज्ञानमित्याचार्याः ! अर्थस्वारस्यं तु स्फुटं चक्षुष्मताम् ।

२ "विः पक्षिपरमात्मनोः" इति ह्यभिधानम् । तेन वयः पक्षिणः । मुख्ये सम्प्रत्यय इति पक्षिराट् सुपर्णो विपदोक्त इति भवति ।

३ अत्र तु "वनस्य ऊर्ध्वम्" इति पादविश्लेषेण केवला त्रिष्टुप् ।

४ "अप्रकाशोऽथचैषाम्" इति क्वचित् ।

५ "भूयासुरतोऽधिकानि । भवन्त्यर्हाः" इति प्र. पाठः । क्वचिच्च कोशेषु । यावन्तः केतवो भवितुमर्हाः ते सर्वेऽप्यनावृता भवन्तु । येकेच केतवो ज्ञानानि भविष्यन्तः तेऽप्यप्रतिरुद्धाः सन्तो व्यक्ताः स्युः इति ।

(२६१) [1]उरुंहिराजावरुणश्चकारसूर्यायपन्थामन्वेतवाउ ॥

अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् ॥ ८ ॥

[उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् । अनु । एतवै । ऊँइति ॥

अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः । चित् ॥ ८ ॥]

उरुं राजा रञ्जनाद् राजनाद् वा सूर्याय पन्थानमसौ चकार । स्वाज्ञानुसारेण सदैव गत्यै पादावपादाय च गन्तवेऽकरोत् । अज्ञाय विज्ञानमकः स गन्तुमात्मानमित्यर्थ इहाज्ञसोक्तः ॥ ७९ ॥ बुद्धेर्धातुः शङ्करस्यापि दोषान् वक्ता ज्ञानाच्छिक्षकत्वाच्च विष्णुः ॥ * ॥

(२६२) [2]शतन्तेराजन्भिषजस्सहस्रमुर्वीगभीरासुमतिष्टेअस्तु ॥

बाधस्वदूरेनिरृतिम्पराचैःकृतञ्चिदेनःप्रमुमुग्ध्यस्मत् ॥ ९ ॥

[शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु ॥

बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि ।

अस्मत् ॥ ९ ॥]

जगद्रक्षासाधनान्यप्यनन्तान्यनन्तधा सन्ति पुनस्तवेश । अगाधरूपा महती शुभा च मतिर्मम त्वद्विषये सदाऽस्तु ॥ ८० ॥ ऋतं [3]ज्ञानं प्रतिरूपत्वहेतोर्निरृत्याख्यां दुर्मतिं दूर एव । बाधस्व दुर्ज्ञानिजनं निरस्य स्वर्गात् पराकृत्य च शश्वदेव ॥ ८१ ॥ कृतं च पापं प्रमुमुग्धि मत्तः ॥ * ॥

[१०–त्रिष्टुप्]

(२६३) अमीयऋक्षानिहितासउच्चानक्तन्ददृश्रेकुहचिद्दिवेयुः ॥

अदब्धानिवरुणस्यव्रतानिविचाकशच्चन्द्रमानक्तमेति ॥ १० ॥ [॥ १४ ॥]

---

१ "पन्थामनुएतवा उ" इति विश्लेषेण केवला त्रिष्टुप् ।

२ "प्र मुमुग्धि अस्मत्" इति विश्लेषेण केवला त्रिष्टुप् ।

३ "ऋतज्ञानप्रति—" इति प्र. पाठः ।

[अमीइति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुह । चित् । दिवा । ईयुः ॥ अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥ १० ॥ १४ ॥]

ऋक्षाण्यमी निहितानि त्वयोच्चैः । दृश्यानि रात्रौ न दिवा त्वयैवेत्यादीनि कर्माण्यनिरोधितानि ॥ ८२ ॥ पश्यन् परानन्दतनोस्त्वैव चन्द्रो नित्यं दृश्यमानस्त्वयैव । सम्प्रेरितो याति परे च देवा एवं त्वदाज्ञाकरणाः सदैव ॥ ८३ ॥ * ॥

[११–१२ निचृत् त्रिष्टुप्[1]]

(२६४) तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ ११ ॥

[तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । आ । शास्ते । यजमानः । हविःऽभिः ॥ अहेळमानः । वरुण । इह । बोधि । उरुऽशंस । मा । नः । आयुः । प्र । मोषीः ॥ ११ ॥]

एवङ्गुणो यत् त्वमतो व्रजामि सदा शरण्यं शरणं[2] वेदवाचा । नमन्नन्यो यजमानो हविर्भिस्तदाशास्ते त्वद्रतिं देवदेव ॥ ८४ ॥ अनिन्दन्नस्मान् नरमात्रबुद्ध्या सम्बोधयोरुस्तुत माऽस्मदायुः[3] । च्छेत्सीः ॥ * ॥

(२६५) तदिन्नक्तन्तद्दिवामह्यमाहुस्तदयङ्केतोहृदआविचष्टे ॥
शुनश्शेपोयमह्वद्गृभीतस्सोअस्मान्राजावरुणोमुमोक्तु ॥ १२ ॥

[तत् । इत् । नक्तम् । तत् । दिवा । मह्यम् । आहुः । तत् । अयम् । केतः । हृदः ।

---

१ एकादशे मन्त्रे "बोधिउरुशंस" इति, द्वादशे "यमहुवद्गृभीतः" इति च विश्लेषेण केवलत्रिष्टुप्त्वं सम्पाद्यम् ।

२ यामीति श्रुतिपदस्य शरणं व्रजामीति व्याख्यानम् । "ईमहे । यामि । मन्महे" (३. १९.) इत्यादि च पठ्यते याच्ञाकर्मसु निघण्टौ ।

३ "नास्मदायुः" इति प्र. पाठः ।

आ । वि । चष्टे ॥ शुनश्शेपः । यम् । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥ १२ ॥]

नक्तं दिवसे चैतदेव स्तोत्रं त्वदीयं प्राहुरार्याः सुकार्यम् ॥ ८५ ॥ मह्यं केतो ज्ञानरूपो हृदिस्थो नारायणो वक्त्ययं तेऽन्यरूपम् । पश्यत्यपीशो यं समह्वद् गृहीतः स नो देवो मोचयत्वद्य-दुःखात् ॥ ८६ ॥ * ॥

[१३ भुरिक् पङ्क्तिश्छन्दः[१], पञ्चमः स्वरः]

(२६६) शुनश्शेपोह्यह्वद्गृभीतस्त्रिष्वादित्यन्द्रुपदेषुबद्धः ॥
अवैनंराजावरुणस्ससृज्याद्विद्वाँअदब्धोविमुमोक्तुपाशान् ॥ १३ ॥

[शुनश्शेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः ॥ अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ १३ ॥]

शुनश्शेपो ह्यह्वद् गृहीतः स्थानत्रये विक्रयाद्यैः सुबद्धः । द्रुतं प्राप्तानि द्रुपदानि[२] विक्रयो यूपे बन्धः सञ्ज्ञपनोद्यमश्च ॥ ८७ ॥ आदित्योऽसावादिसंस्थः परेशो वारीशान्तः संस्थितः स्तूयतेऽत्र । शुनश्शेपो यमित्यादिकेन वारीशोऽपि ह्यृषिणा स्तूयमानः ॥ ८८ ॥ गुणास्त्रयो द्रुपदानीति चोक्ता द्रवत्ययं जीवसङ्घो हि यत्र । करोत्वेनमवसृष्टं स्मृतेः स प्रसन्नोऽस्मान् कर्मपाशान्मुमोक्तु ॥ ८९ ॥ * ॥

[१४ त्रिष्टुप् छन्दः, १४–१५ धैवतः स्वरः]

(२६७) अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः ॥
क्षयन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥ १४ ॥

---

१ प्रथमपादे नवाक्षराणि, द्वितीये दश, तृतीयचतुर्थयोरेकादशेति आहत्य एकचत्वारिंशदक्षरत्वात् भुरिक् पङ्क्तिः । चत्वारिंशदक्षरा हि पङ्क्तिः । एकाक्षराधिक्यात् भुरिक्त्वम् । अक्षरविश्लेषेण चानुक्रमणिकादिरीत्या त्रिष्टुबेव चेयं भवति । तथाहि—"हियहुवद् गृभीतः" इति प्रथमपादे विश्लेषेणैकादशाक्षरत्वम् । "त्रिषु आदित्यम्" इति विश्लेषेण द्वितीयपादे । ततश्च चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । त्रिष्टुप्त्वे तु धैवत एव स्वरः । न पञ्चमः ।

२ "द्रुपदानीति विक्रयो—" इति क्वचित् ।

[अव । ते । हेळः । वरुण । नमःऽभिः । अव । यज्ञेभिः । ईमहे । हविःऽभिः ॥ क्षयन् । अस्मभ्यम् । असुर । प्रचेतइतिप्रऽचेतः । राजन् । एनांसि । शिश्रथः । कृतानि ॥ १४ ॥]

निन्दां च तेऽवाग्गतेर्हेतुभूतामवगच्छामः सेयमित्यप्ययोग्याम् । नमस्कारैस्त्वद्गतैस्त्वन्मखैश्च हविर्युक्तैस्त्वत्प्रसादात् स च त्वम् । क्षितिरस्मभ्यं प्राणरन्ताऽखिलज्ञो वियोजयास्मत्कृतान्याश्वघानि ॥ ९० ॥ * ॥

[१५–विराट् त्रिष्टुप् छन्दः[1]]

(२६८) उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय ॥
अथावयमादित्यव्रतेतवानागसोअदितयेस्याम ॥ १५ ॥ [ ॥ १५ ]

[उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय ॥ अथ । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ॥ ॥ १५ ॥ १५ ॥]

[इति चतुर्विंशं सूक्तम्]

पुण्यं पापं मिश्रमित्येव पाशान् यथायोग्यं श्रथयान्येषु दत्त्वा । त्वन्निष्ठया तेन वयं त्वदीयलक्ष्म्याः पुत्राः स्याम मुक्ताः सृतेश्च ॥ ९१ ॥ एषा विष्णोः केवलाऽप्येवमन्या अयोग्या या अन्यदेवेषु सम्यक् । वाक्यैर्विशिष्टैरपवादहीनैर्ज्ञेया गुणा अन्यदेवेषु चैव ॥ ९२ ॥ "पतिः सोमो वरुणस्याप्यथाग्नेः पतिः सूर्यस्तावुभौ तुल्यवीर्यौ । सूर्याचन्द्रमसोः पतिरिन्द्रोऽस्य रुद्रः पतिर्ब्रह्मा पतिरस्यापि विष्णुः ॥ ९३ ॥ पतिर्मुक्तेर्वासुदेवोऽथ दृष्टेर्ब्रह्मा विद्यायाः शर्वे इन्द्रः क्रियायाः । क्रियांशानामधिपा अन्यदेवास्तथा फलानामपि मुक्तिमार्गे ॥ ९४ ॥ यथायोग्यं स्वेन्द्रियप्रेरकाश्च ततः पूज्या देवता मुक्तिकामैः" । इति श्रुतेस्तारतम्यं गुणानां ज्ञात्वा योज्याः श्रुतयस्तत्रतत्र ॥ ९५ ॥ * ॥ * ॥

---

१ द्व्यक्षरोना त्रिष्टुबिति विराट् । अक्षरविश्लेषेण केवला त्रिष्टुबियं भवति । तद्यथा—"तव अनागसो अदितये सियाम" इति ।

— २५ —

[यच्चिद्धि एकविंशतिः, आजीगर्तिः शुनश्शेपः, गायत्री, वरुणः, षड्जः]

(२६९) यच्चिद्धितेविशोयथाप्रदेववरुणव्रतम् । मिनीमसिद्यविद्यवि ॥ १ ॥

[यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण । व्रतम् ॥

मिनीमसि । द्यविऽद्यवि ॥ १ ॥]

दिवसेदिवसे देव [1]कुर्मो यदपि ते व्रतम् । यथैव सुजनाः ॥ * ॥

(२७०) मानोवधायहत्नवेजिहीळानस्यरीरधः । माहृणानस्यमन्यवे ॥ २ ॥

[मा । नः । वधाय । हत्नवे । जिहीळानस्य । रीरधः ॥

मा । हृणानस्य । मन्यवे ॥ २ ॥]

मा नो हन्तुं साधय निघ्नते । जिहीळानस्त्यजन् धर्मं हरतो मा च मन्यवे ॥ ९६ ॥ * ॥

(२७१) विमृळीकायतेमनोरथीरश्वन्नसन्दितम् । गीर्भिर्वरुणसीमहि ॥ ३ ॥

[वि । मृळीकाय । ते । मनः । रथीः । अश्वम् । न । सम्ऽदितम् ॥

गीःऽभिः । वरुण । सीमहि ॥ ३ ॥]

मनस्त्वयि निबध्नीमो गीर्भिरश्वं वियोजितम् । बध्नाति सारथिर्यद्वन्मृळीको रक्षकोऽधिकम् । त्वन्मनोऽस्मासु वा गीर्भी रक्षणाय विसीमहि ॥ ९७ ॥ * ॥

(२७२) पराहिमेविमन्यवःपतन्तिवस्यइष्टये । वयोनवसतीरुप ॥ ४ ॥

---

१ मिनीमसि कुर्मः । "डु मि ञन् क्षेपे" इति वोपदेवः । न केवलं क्षेपे । कर्मसामान्येऽपि वर्तते । विकरणश्च व्यत्ययते । "मीञ् हिंसायाम्" इत्येव वा धातुः । मीञ् हिंसाज्ञानकरणेष्वित्युपस्कर्तव्यम् । प्रयोगदर्शनात् । तथाहि श्रूयते—"आपश्चन प्रमिनन्ति व्रतं वाम्" इति । तत्र हि ज्ञानार्थे पठ्यते । अत एवाऽहुः—"मानं ज्ञानं लयश्चैव निर्माणं चापि कथ्यते" इति ।

[परा । हि । मे । विऽमन्यवः । पतन्ति । वस्यःऽइष्टये ॥
वयः । न । वसतीः । उप ॥ ४ ॥]

पराक् पतन्ति प्रज्ञा मे विविधाः शुभलब्धये । पक्षिणो वसतीर्यद्वद्या[1] न त्वां प्राप्नुवन्ति च ॥ ९८ ॥ * ॥

(२७३) कदाक्षत्रश्रियन्नरमावरुणङ्करामहे । मृळीकायोरुचक्षसम् ॥ ५ ॥ [॥ १६ ॥]

[कदा । क्षत्रऽश्रियम् । नरम् । आ । वरुणम् । करामहे ॥
मृळीकाय । उरुऽचक्षसम् ॥ ५ ॥ १६ ॥]

अतोऽखिलक्षत्रपतिमाह्वयामः कदा वयम् । अविनाशिनं रक्षणाय महादर्शनमञ्जसा ॥ ९९ ॥ * ॥

(२७४) तदित्समानमाशातेवेनन्तानप्रयुच्छतः । धृतव्रतायदाशुषे ॥ ६ ॥

[तत् । इत् । समानम् । आशातेइति । वेनन्ता । न । प्र । युच्छतः ॥
धृतऽव्रताय । दाशुषे ॥ ६ ॥]

तत्प्रसादाद् ब्रह्मवायू सममेवावगच्छतः । वेनन्तौ हि विजानन्तौ तौ हि ज्ञानिवरौ मतौ ॥ १०० ॥
यथाज्ञानं प्रयोगं च दाशुषे कुरुतो न तौ । अश्विनौ[2] वरुणश्चेत् स्यात् ॥ * ॥

[७–निचृद्गायत्री[3]]

(२७५) वेदायोवीनाम्पदमन्तरिक्षेणपतताम् । वेदनावस्समुद्रियः ॥ ७ ॥

[वेद । यः । वीनाम् । पदम् । अन्तरिक्षेण । पतताम् ॥
वेद । नावः । समुद्रियः ॥ ७ ॥]

---

१ "यद्वद्धा" इति प्र. पाठः । यद्वत् हा इति च्छेदः । प्राचीनपाठे याः प्रज्ञाः त्वां न प्राप्नुवन्ति चेति ।

२ अत्र "वेनन्तौ मित्रावरुणौ" इति सायणः । अस्या ऋचः वरुणो देवतेति पूर्वं वदन् अत्र मित्रावरुणौ प्रतिपाद्याविति वदन् कथं नाम नावबुद्ध्यते स्वविरोधं स इति न विजानीमः ।

३ "वेदा यो विईनां पदम्" इत्यष्टाक्षरत्वे केवला गायत्री ।

आकाशे पक्षिणां पदम् । वेत्त्यसौ सूक्ष्मविज्ञानात् तथा नावो जलेऽब्धिगः ॥ १०१ ॥ मुक्तानां च स्थितिं वेद ज्ञानस्य च गतिं पराम् । क्षीराब्धिशयनो विष्णुः ॥ * ॥

[पिपीलिकामध्या निचृद्गायत्री[1]]

(२७६) वेदमासोधृतव्रतोद्वादशप्रजावतः । वेदायउपजायते ॥ ८ ॥

[वेद । मासः । धृतऽव्रतः । द्वादश । प्रजाऽवतः ॥
वेद । यः । उपऽजायते ॥ ८ ॥]

कालं कालोद्भवैः सह ॥ १०२ ॥ य आत्मनः समीपे च जायते तं च पद्मजम् । मुक्तं वा ॥ * ॥

[९–निचृद्गायत्री[2]]

(२७७) वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः । वेदायेअध्यासते ॥ ९ ॥

[वेद । वातस्य । वर्तनिम् । उरोः । ऋष्वस्य । बृहतः ॥
वेद । ये । अधिऽआसते ॥ ९ ॥]

वर्तनां वायोर्महतोऽतिप्रकाशिनः ॥ १०३ ॥ बृहतो ज्ञानिनश्चैव बृहतो महतोऽपि वा । अधिकानि पदान्येव देवा अध्यासतेऽपि तान् ॥ १०४ ॥ * ॥

[१०–आर्च्युष्णिक्[3], ऋषभः स्वरः]

(२७८) निषसादधृतव्रतोवरुणःपस्त्याऽस्वा । साम्राज्यायसुक्रतुः ॥ १० ॥ [॥ १७ ॥]

[नि । ससाद । धृतऽव्रतः । वरुणः । पस्त्यासु । आ ॥
साम्ऽराज्याय । सुऽक्रतुः ॥ १० ॥ १७ ॥]

साम्राज्याय स पस्त्यासु निषसाद प्रजासु च । सुज्ञानः ॥ * ॥

---

१ द्वितीयचरणे "दुवादश" इति विश्लेषेण केवला गायत्री।

२ "अधियासते" इति विश्लेषेण केवला गायत्री।

३ एकविंशत्यक्षरा ह्यार्च्युष्णिग् भवति। अत्र द्वितीयचरणे "पस्तियासुआ" इति, तृतीयचरणे "साम्राजियाय" इति च विश्लेषेण केवला गायत्री। तदात्वे तु षड्ज एव स्वरः। नोत ऋषभः।

[११-विराड्गायत्री[1]]

(२७९) अतोविश्वान्यद्भुताचिकित्वाँअभिपश्यति । कृतानियाचकर्त्वा ॥ ११ ॥

[अतः । विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति ॥
कृतानि । या । च । कर्त्वा ॥ ११ ॥]

तत्र सन् विश्वान्यद्भुतानि च पश्यति । कर्ता चिकित्वान् स कृतकर्तव्यानि च पश्यति ॥ १०५ ॥
॥ * ॥

(२८०) सनोविश्वाहासुक्रतुरादित्यस्सुपथाकरत् । प्रणआयूंषितारिषत् ॥ १२ ॥

[सः । नः । विश्वाहा । सुऽक्रतुः । आदित्यः । सुऽपथा । करत् ॥
प्र । नः । आयूंषि । तारिषत् ॥ १२ ॥]

विश्वान्यहानि नो देवः सुपथानि[2] करोत्वसौ । ददात्वायूंषि नो नित्यं मुक्तौ वा ॥ * ॥

(२८१) बिभ्रद्द्रापिंहिरण्ययंवरुणोवस्तनिर्णिजम् । परिस्पशोनिषेदिरे ॥ १३ ॥

[बिभ्रत् । द्रापिम् । हिरण्ययम् । वरुणः । वस्त । निःऽनिजम् ॥
परि । स्पशः । नि । सेदिरे ॥ १३ ॥]

अतिद्रुतभ्रमम् ॥ १०६ ॥ हितं च रमणीयं च चक्रं स्वर्णं च वर्णतः । [3]अबिभ्रच्च सुनिर्णिक्तं शुभ्रं[4] वस्त्रमवस्त च ॥ १०७ ॥ अविज्ञातचरा देवाः [5]स्पशस्तस्य निषेदिरे । परितो वरुणः पाशमबिभ्रद् द्रुतबन्धनम् ॥ १०८ ॥ * ॥

---

१ "विश्वानियद्भुता" इति "कर्तुवा" इति च विश्लेषेण केवला गायत्री ।

२ "क्त्वादयश्च" (६.२.११८.) इति पाणिनिस्मरणात् बहुव्रीहौ पथिन्पदस्याद्युदात्तत्वम् । एतेन "सुपथा शोभनमार्गेण" इति व्याख्याय तस्मिन्नर्थे स्वरविरोधं परिहर्तुमप्रभवन्, "परादिश्छन्दसि बहुलम्" (६.२.१९९.) इति च्छान्दसं स्वरस्वाच्छन्द्यं च वदन् सायणः परास्तः ।

३ "यद्यपि "बिभ्रत्" इति शत्रन्ततयाऽपि व्याख्यातुं शक्यम् । तथाऽपि "वस्त" इत्युत्तरचरणे लङो निर्देशात् तदानुगुण्येन अबिभ्रदित्येव व्याख्यातम् । अबिभ्रत् अबिभः ।

४ "शुद्धम्" इति प्र. पाठः ।

५ "स्पश अज्ञातदर्शौ" इति हि धातुः पुरैव पठितः ।

[१४–पिपीलिकामध्या निचृद्गायत्री[1]]

(२८२) नयन्दिप्सन्तिदिप्सवोनद्रुह्वाणोजनानाम् । नदेवमभिमातयः ॥ १४ ॥

[न । यम् । दिप्सन्ति । दिप्सवः । न । द्रुह्वाणः । जनानाम् ॥
न । देवम् । अभिऽमातयः ॥ १४ ॥]

स्तम्भयन्ति न यं वीराः स्तम्भका अपि राक्षसाः । जनानां[2] द्रोहिणो दैत्याः शत्रवश्चाभिमातयः ॥ १०९ ॥ * ॥

[१५–पादनिचृद्गायत्री[3]]

(२८३) उतयोमानुषेष्वायशश्चक्रेअसाम्या । अस्माकमुदरेष्वा ॥ १५ ॥ [॥ १८ ॥]

[उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि । आ ॥
अस्माकम् । उदरेषु । आ ॥ १५ ॥ १८ ॥]

असमं च यशश्चक्रे योऽस्माकं हृदयेषु च । आमनुष्येषु[4] चान्येषु समन्तादात्मनः सदा । अज्ञेष्वपि च मर्त्येषु व्यतनोदात्मनो यशः ॥ ११० ॥ * ॥

(२८४) परामेयन्तिधीतयोगावोनगव्यूतीरनु । इच्छन्तीरुरुचक्षसम् ॥ १६ ॥

[परा । मे । यन्ति । धीतयः । गावः । न । गव्यूतीः । अनु ॥
इच्छन्तीः । उरुऽचक्षसम् ॥ १६ ॥]

महाज्ञानं परेशानमिच्छन्त्यो मम धीतयः। सर्वतो यान्ति यद्वच्च गावः शृङ्गस्वरानन्तु ॥ १११ ॥ * ॥

---

१ "द्रुहुवाणो जनानाम्" इति विश्लेषेण केवला गायत्री।

२ "प्रजानाम्" इति क्वचित्।

३ प्रतिपादं सप्ताक्षरत्वात् पादनिचृत् । विश्लेषेण च केवलगायत्रीत्वं सम्पाद्यम्। तद् यथा—"उत यो मानुषेषु आ यशश्चक्रे असामि आ। अस्माकमुदरेषु आ" इति ।

४ "आ मानुषेषु" इति च पाठान्तरम् । "अमनुष्येषु" इति क्वचित् ।

[पिपीलिकामध्या निचृद्गायत्री[1]]

(२८५) सन्नुवोचावहैपुनर्यतोमेमध्वाभृतम् । होतेवक्षदसेप्रियम् ॥ १७ ॥

[सम् । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतम् ॥
होताऽइव । क्षदसे । प्रियम् ॥ १७ ॥]

[2]आपूर्णं मधु मोक्षस्थसुखं[3] पचसि मेऽग्निवत् । तत् संवोचावहै भूयः प्रियस्त्वं मम यत् सदा ॥ ११२ ॥ * ॥

(२८६) दर्शन्नुविश्वदर्शतन्दर्शरथमधिक्षमि । एताजुषतमेगिरः ॥ १८ ॥

[दर्शम् । नु । विश्वऽदर्शतम् । दर्शम् । रथम् । अधि । क्षमि ॥
एताः । जुषत । मे । गिरः ॥ १८ ॥]

अदर्शं तं च सर्वज्ञं तद्रथं च भुवि स्थितम् । स गिरो मे जुषतु च[4] ॥ * ॥

[१९–२० निचृद्गायत्री[5]]

(२८७) इमम्मेवरुणश्रुधीहवमद्याचमृळय । त्वामवस्युराचके ॥ १९ ॥

[इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय ॥
त्वाम् । अवस्युः । आ । चके ॥ १९ ॥]

त्वाऽवनेप्सुरहं चके ॥ ११३ ॥ पश्येयम् ॥ * ॥

(२८८) त्वंविश्वस्यमेधिरदिवश्चग्मश्चराजसि । सयामनिप्रतिश्रुधि ॥ २० ॥

---

१ "मधुवाभृतम्" इति विश्लेषेण केवला गायत्री । २ "आपूर्णमधु" इति क्वचित् पाठः ।
३ "मोक्षस्थं सुखम्" इति प्र. पाठः ।
४ "सुगिरो मे जुषत च" इति प्र. पाठः । "सुगिरो मे जुषतु च" इति क्वचित् ।
५ "तुवामवस्युरा चके" इति विश्लेषेण केवला गायत्री । "तुवं विश्वस्य मेधिर" इति चोत्तरमन्त्रे ।

[त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि ॥
सः । यामनि । प्रति । श्रुधि ॥ २० ॥]

त्वं च[1] विश्वस्य राजा भवसि मेधिरः। मेधावान् ग्मः पृथिव्याश्च स काले च प्रति श्रुधि ॥ * ॥

(२८९) उदुत्तमम्मुमुग्धिनोविपाशम्मध्यमञ्चृत । अवाधमानिजीवसे ॥ २१ ॥ [॥ १९ ॥]

[उत् । उत्ऽतमम् । मुमुग्धि । नः । वि । पाशम् । मध्यमम् । चृत ॥
अव । अधमानि । जीवसे ॥ २१ ॥ १९ ॥]

[इति पञ्चविंशं सूक्तम्]

स त्वं त्रिगुणपाशान्नो मुमुग्धि च्छिन्धि[2] चाञ्जसा ॥ ११४ ॥ * ॥ * ॥

—२६—

[वसिष्वा दश, शुनश्शेप आजीगर्तिः, गायत्री, अग्निः, षड्जः]

[१-आर्च्युष्णिक्,[3] ऋषभः स्वरः]

(२९०) वसिष्वाहिमियेध्यवस्त्राण्यूर्जाम्पते । सेमन्नोअध्वरंयज ॥ १ ॥

[वसिष्व । हि । मियेध्य । वस्त्राणि । ऊर्जाम् । पते ॥
सः । इमम् । नः । अध्वरम् । यज ॥ १ ॥]

---

१ "त्वं हि" इति क्वचित् ।

२ चृत छिन्धि । "चृत् हिंसे ग्रन्थे" इति वोपदेवः । छेद एव हि पाशस्य हिंसनं नाम ।

३ इयमृक् "वसिषुवा हि मियेध्य वस्त्राणियूरुजाम्पते" इति विश्लेषेण केवला गायत्री भवति । यण्व्यूहो हि क्षैप्रसंयोगः । तथाहि प्रयोगः–"त्वामिन्द्र वज्रिन्" इत्यादिः । अत्र वजरिन्निति विश्लेषो भवति । गायत्रीत्वे तु षड्ज एव स्वरः । नोत ऋषभः ।

**अथ स्तौत्यग्निगं विष्णुमग्निमप्यग्निगोचरैः । वचनैः सर्वदेवानां पूजाय[1] प्रोद्यतो भवन्[2] ॥ ११५ ॥ वासिष्वोत्तमवस्त्राणि भूषणैरप्यलङ्कुरु । कुर्वन्नुत्सवमत्यन्तमस्मदीयं[3] मखं यज ॥ ११६ ॥ नित्य-मेध्य हरे देव भोग्यान्नानां पते सदा[4] । ऊर्जितानां जनानां वा[5] स्वस्मिन् नो अध्वरं यज । रमयत्यध्वनि शुभे येन तेनाध्वरो मखः ॥ ११७ ॥ * ॥**

[२–निचृद्गायत्री[6], षड्जः स्वरः]

**(२९१) निनोहोतावरेण्यस्सदायविष्ठमन्मभिः । अग्नेदिवित्मतावचः ॥ २ ॥**

**[नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मऽभिः ॥**
**अग्ने । दिवित्मता । वचः ॥ २ ॥]**

**वचो नो नि[7] नयात्यन्तं दिवि व्याप्ततया सदा । अशेषदेवगत्वेन मन्मभिर्मतिभिः सह । अवमो दशदेवेषु[8] वह्निर्विष्णुस्तु तत्स्थितेः[9] ॥ ११८ ॥ * ॥**

[३–आर्च्युष्णिक्[10]–ऋषभः स्वरः]

**(२९२) आहिष्मासूनवेपितापिर्यजत्यापये । सखासख्येवरेण्यः ॥ ३ ॥**

---

१ "तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभि-र्द्वाविंशत्या" इति ब्राह्मणम् । "वसिष्वा हीति चाग्नेये" (३. ९९.) इति च शौनकः । "वसिष्व दशाऽग्नेयं तु" इत्यनुक्रमणिका च । तथाचैतत्सूक्तस्य, उत्तरसूक्ते त्रयोदशर्चेऽन्त्यामेकामृचं विहायावशिष्टानां चाग्निर्देवता ।

२ "भवान्" इति क्वचित् पठ्यते ।

३ "–मस्मदीयमखम्" इति क्वचित् ।

४ "भोग्यान्नानां सदा पते" इति प्र. पाठः ।

५ "जनानां च" इति क्वचित् ।

६ "वरेणियस्सदा" इति विश्लेषेण केवला गायत्री ।

७ नि इत्युपसर्गबलात् नयेति योग्यक्रियाध्याहारः क्रियते । अथवा "इन्द्रावरुण नू नु वाम्" इति पूर्वं यथा नुमः इति वक्तव्ये नु इति प्रकृतिमात्रनिर्देशः कृतस्तद्वदिहापि नीति प्रकृतिनिर्देशः । तथाच 'नि' इत्यनूद्य 'नय' इति तद्व्याख्यानं क्रियते । प्रेरकत्वस्वातन्त्र्यावबोधाय धातुप्रकृतिमात्रनिर्देशः ।

८ "अग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः" इत्यग्न्याद्या मारुतान्ता दश देवाः । तेष्वग्निर्यविष्ठः कनिष्ठः ।

९ "तत्स्थितः" इति क्वचित् प्र. पाठः ।

१० अत्रापि व्यक्षरव्यूहेन केवलगायत्रीत्वं सम्पाद्यम् । तद् यथा—"पिता आपिर्यजतियापये" इति पूर्वार्द्धे, "सखा सख्ये वरेणियः" इति चोत्तरार्द्धे विश्लेषेण केवला गायत्री । तदात्वे च षड्ज एव स्वरः । नोत ऋषभः ।

[आ । हि । स्म । सूनवे । पिता । आपिः । यजति । आपये ॥
सखा । सख्ये । वरेण्यः ॥ ३ ॥]

सख्ये च सूनवे मह्यमायजत्येष देवताः । आपिः प्राप्यो मम स्वामी भृत्यत्वान्मह्यमापये ॥ ११९ ॥ * ॥

[ ४–७ षड्जः स्वरः]

(२९३) आनोबर्हीरिशादसोवरुणोमित्रोअर्यमा । सीदन्तुमनुषोयथा ॥ ४ ॥

[आ । नः । बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा ॥
सीदन्तु । मनुषः । यथा ॥ ४ ॥]

[५–विराड्गायत्री[१]]

(२९४) पूर्व्यहोतरस्यनोमन्दस्वसख्यस्यच । इमाउषुश्रुधीगिरः ॥ ५ ॥ [॥ २० ॥]

[पूर्व्य । होतः । अस्य । नः । मन्दस्व । सख्यस्य । च ॥
इमाः । ऊँइति । सु । श्रुधि । गिरः ॥ ५ ॥ २० ॥]

अस्य मेऽर्थे कुरु मदं स्वातन्त्र्यान्मादयस्व वा ॥ * ॥

[६–निचृद् गायत्री[२]]

(२९५) यच्चिद्धिशश्वतातनादेवन्देवंयजामहे । त्वेइद्धूयतेहविः ॥ ६ ॥

[यत् । चित् । हि । शश्वता । तना । देवम्ऽदेवम् । यजामहे ॥
त्वेइति । इत् । हूयते । हविः ॥ ६ ॥]

शश्वद् विस्तरतः सर्वान् यदा देवान् यजामहे । तदा त्वय्येव[३] हि हविर्हूयते ॥ * ॥

---

१ "पूर्विय होतरस्य नो मन्दस्व सखियस्य च" इति विश्लेषेण केवला गायत्री ।
२ "तुवे इद्धूयते" इति तृतीयचरणे विश्लेषेण केवला गायत्री ।
३ "त्वयैव" इति क्वचित् पाठः ।

[७–विराड्गायत्री[1]]

(२९६) प्रियोनोअस्तुविश्पतिर्होतामन्द्रोवरेण्यः । प्रियास्स्वग्नयोवयम् ॥ ७ ॥

[प्रियः । नः । अस्तु । विश्पतिः । होता । मन्द्रः । वरेण्यः ॥
प्रियाः । सुऽअग्नयः । वयम् ॥ ७ ॥]

स प्रियो भव ॥ १२० ॥ मन्द्रो मदकरः ॥ * ॥

[८–९ आर्च्युष्णिक्[2], ऋषभः स्वरः]

(२९७) स्वग्नयोहिवार्यन्देवासोदधिरेचनः । स्वग्नयोमनामहे ॥ ८ ॥

[सुऽअग्नयः । हि । वार्यम् । देवासः । दधिरे । च । नः ॥
सुऽअग्नयः । मनामहे ॥ ८ ॥]

(२९८) अथानउभयेषाममृतमर्त्यानाम् । मिथस्सन्तुप्रशस्तयः ॥ ९ ॥

[अथ । नः । उभयेषाम् । अमृत । मर्त्यानाम् ॥
मिथः । सन्तु । प्रऽशस्तयः ॥ ९ ॥]

स्त्रीणां पुंसां चोभयवर्गिणाम् ॥ * ॥

(२९९) विश्वेभिरग्नेअग्निभिरिमंयज्ञमिदंवचः । चनोधास्सहसोयहो ॥ १० ॥ [॥ २१ ॥]

[विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इदम् । वचः ॥
चनः । धाः । सहसः । यहोइति ॥ १० ॥ २१ ॥]

[इति षड्विंशं सूक्तम्]

---

१ द्वितीयपादे "वरेणियः" इति, तृतीये च "सुवग्नयो वयम्" इति विश्लेषेण केवला गायत्री ।

२ अत्राष्टम्यामृचि "सुवग्नयो हि वारियम्" इति "सुवग्नयो मनामहे" इति च विश्लेषेण केवला गायत्री । नवम्यां च—"मर्तियअनाम्" इति द्वितीयचरणे विश्लेषः करणीय इति भाति । तदास्वे च षड्ज एव । नोत ऋषभः ।

चनः सुखं धा अस्मासु वायोः[1] पुत्रोऽग्निरेव चेत् ॥ १२१ ॥ भगवान् वायुना व्यङ्ग्यः ॥ * ॥ * ॥

— २७ —

[अश्वं न त्वा त्रयोदश, शुनश्शेप आजीगर्तिः]

[१–१२ गायत्री, अग्निः, षड्जः]

(३००) अश्वन्नत्वावारवन्तंवन्दध्याअग्निन्नमोभिः । सम्राजन्तमध्वराणाम् ॥ १ ॥

[अश्वम् । न । त्वा । वारऽवन्तम् । वन्दध्यै । अग्निम् । नमःऽभिः ॥
समऽराजन्तम् । अध्वराणाम् ॥ १ ॥]

वारवान् बडबामुखः[2] । स्वदृष्टान्तो हरेर्यस्माद् विष्णुः स बडबामुखः[3] ॥ १२२ ॥ * ॥

(३०१) सघानस्सूनुश्शवसापृथुप्रगामासुशेवः । मीढ्वाँअस्माकम्बभूयात् ॥ २ ॥

[सः । घ । नः । सूनुः । शवसा । पृथुऽप्रगामा । सुऽशेवः ॥
मीढ्वान् । अस्माकम् । बभूयात् ॥ २ ॥]

सूनुः स शवसो वायोः पृथुज्ञानः सुशेवकृत् । सुखकृन्नो भवेन्मीढ्वान् स्वामी नः सूनुरेव वा । व्यङ्ग्यत्वाद् वायुना सार्द्धं सुशेवः सुसुखात्मकः ॥ १२३ ॥ * ॥

[३–आर्च्युष्णिक्[4], ऋषभः स्वरः]

(३०२) सनोदूराच्चासाच्चनिमर्त्यादघायोः । पाहिसदमिद्विश्वायुः ॥ ३ ॥

---

१ सहसो यहो वायोः पुत्र । "अपत्यम् । यहुः । सूनुः" (२.२.) इति वैदिकनिघण्टुः ।

२–३ "वडवामुखः" इति प्र. पाठः ।

४ "दूराच्च आसाच्च" इति, "मर्तियादघायोः" इति, "विशुवायुः" इति च विश्लेषेण चतुर्विंशत्यक्षरत्वे केवला गायत्री । यद्वा "मर्तियादघआयोः" इति विश्लेषेण द्वितीयचरण एवाष्टाक्षरत्वं सम्पाद्यम् । तेन विश्वायुरिति यथास्थितम् । तदात्वे षड्ज एव स्वरः । नोत ऋषभः ।

[सः । नः । दूरात् । च । आसात् । च । नि । मर्त्यात् । अघऽयोः ॥
पाहि । सदम् । इत् । विश्वऽआयुः ॥ ३ ॥]

[1]आसात् समीपतश्चास्मानघार्थायो[2]र्निपाहि च । प्रतिप्रति सदो नित्यो विश्वायुः ॥ * ॥

(३०३) इममूषुत्वमस्माकंसनिङ्गायत्रन्नव्यांसम् । अग्नेदेवेषुप्रवोचः ॥ ४ ॥

[इमम् । ऊँइति । सु । त्वम् । अस्माकम् । सनिम् । गायत्रम् । नव्यांसम् ॥
अग्ने । देवेषु । प्र । वोचः ॥ ४ ॥]

त्वमिमां स्तुतिम् ॥ १२४ ॥ सनिं दानस्वरूपां च [3]गायत्रच्छन्दआत्मिकाम् । नव्यांसं स्तुतिषु श्रेष्ठां वद देवेषु सादरम् ॥ १२५ ॥ * ॥

[५–निचृद् गायत्री[4]]

(३०४) आनोभजपरमेष्वावाजेषुमध्यमेषु । शिक्षावस्वोअन्तमस्य ॥ ५ ॥ [॥ २२ ॥]

[आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु ॥
शिक्ष । वस्वः । अन्तमस्य ॥ ५ ॥ २२ ॥]

उत्तमाधममध्येषु भोगेष्वस्मानवाप्नुहि । रक्षकत्वेन शिक्षास्मान् ज्ञानवस्वर्थमेव च । अन्ते मोक्षे मितत्वेन ज्ञानमन्तममुच्यते ॥ १२६ ॥ * ॥

(३०५) विभक्तासिचित्रभानोसिन्धोरूर्माउपाकआ । सद्योदाशुषेक्षरसि ॥ ६ ॥

---

१ "तळित् । आसात् । अम्बरम् । तुर्वशे । अस्तमीके । आके । उपाके । अर्वाके" (२.१६.) इति निघण्टुः ।

२ आयोः आयुषः । अयं द्विरूपो भवति शब्दः । जटायुरिति यथा । अत्र यद्यपि "अघऽयोः" इति पदपाठः । तेन अघयुशब्द एवायं नाघायुशब्दः । तथाऽपि 'अघऽआयोः' इत्येव पदपाठः भाष्यकृत्सम्मत इति भाति । अघयुरित्यपि पदं भवति । इदं पदपाठान्तरं वा भवति ! अघ आयोरिति पदपाठे पूर्वपदप्रकृतिस्वरत्वाभावश्छान्दस इति वक्तव्यम् । वरं पदस्य छान्दसत्वकथनात् स्वरस्य तथात्वकथनमिति ।

३ "गायत्रीच्छन्दआत्मिकाम्" इति प्र. पाठः । ४ "परमेषु आ वाजेषु" इति विश्लेषेण केवला गायत्री ।

विऽभक्ता । असि । चित्रभानोइतिचित्रऽभानो । सिन्धोः । ऊर्मौ । उपाके । आ ॥
सद्यः । दाशुषे । क्षरसि ॥ ६ ॥]

क्षीराब्ध्यूर्मिसमीपस्थो मुक्तभोगविभागदः । यजमानाय सद्यश्च क्षरस्यखिलमीप्सितम् । नित्य-मुत्तमतेजस्त्वाच्चित्रभानुर्हरिः स्मृतः ॥ १२७ ॥ * ॥

[७—निचृद्गायत्री[1]]

(३०६) यमग्नेपृत्सुमर्त्यमवावाजेषुयञ्जुनाः । सयन्ताशश्वतीरिषः ॥ ७ ॥

[यम् । अग्ने । पृत्ऽसु । मर्त्यम् । अवाः । वाजेषु । यम् । जुनाः ॥
सः । यन्ता । शश्वतीः । इषः ॥ ७ ॥]

यं मर्त्यं रक्षसि विभो यं युत्सु प्रेरयस्यपि[2] । ज्ञानाज्ञानात्मकेष्वेव स गन्ता नित्यसत्सुखम् । भोगान् वा मुक्तिगान् नित्यानिह चेदुपचारतः ॥ १२८ ॥ * ॥

[८—पादनिचृद्गायत्री[3]]

(३०७) नकिरस्यसहन्त्यपर्येताकयस्यचित् । वाजोअस्तिश्रवाय्यः ॥ ८ ॥

[नकिः । अस्य । सहन्त्य । परिऽएता । कयस्य । चित् ॥
वाजः । अस्ति । श्रवाय्यः ॥ ८ ॥]

परिपूर्णोऽस्य नैवास्ति त्वदीयस्य च[4] कस्यचित् । भोगोऽपि बहुलो यस्माद् दित्सस्येव पुनःपुनः ॥ १२९ ॥ सहन्त्यः सन्ततबलः सहसः पुत्र एव वा । श्रवाय्यः श्रवणीयश्च सुप्रसिद्धतमोऽपिवा ॥ १३० ॥ * ॥

---

१ "पृत्सु मर्तियम्" इति विश्लेषेण केवला गायत्री ।

२ जुनाः प्रेरयसि । "ज्यु जु ङ् गत्यां जु रंहसि" इति वोपदेवः ।

३ "नकिरस्य सहन्तिय परिएता कयस्य चित् । वाजो अस्ति श्रवायियः" इति विश्लेषेण केवला गायत्री ।

४ "तु" इति प्र. पाठः ।

(३०८) सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता । विप्रेभिरस्तुसनिता ॥ ९ ॥

[सः । वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता ॥
विप्रेभिः । अस्तु । सनिता ॥ ९ ॥]

वाजं तारयिताऽऽनेता सोऽर्वद्भिर्गोसमाश्रितः । त्वदीयस्तु भवेद् विप्रैर्दाता विपुलदानतः ॥ १३१ ॥ युद्धस्य तारकोऽन्नस्य दाता भोगस्य वा भवेत् । इन्द्रियैस्तमसा युद्धतरुता[1] ज्ञानदोऽथवा ॥ १३२ ॥ * ॥

(३०९) जराबोधतद्विविड्ढिविशेविशेयज्ञियाय । स्तोमंरुद्रायदृशीकम् ॥ १० ॥ [॥ २३ ॥]

[जराऽबोध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय ॥
स्तोमम् । रुद्राय । दृशीकम् ॥ १० ॥ २३ ॥]

स्तुतिबोद्धा यतस्तां त्वमवधारय सर्वदा । नित्यज्ञानोऽपि दत्त्वा तत्फलं वेत्तेति कथ्यते । रुजां विद्रावकेशाय प्रत्यक्षां तव[2] वा स्तुतिम् ॥ १३३ ॥ * ॥

(३१०) सनोमहाँअनिमानोधूमकेतुःपुरुश्चन्द्रः । धियेवाजायहिन्वतु ॥ ११ ॥

[सः । नः । महान् । अनिऽमानः । धूमऽकेतुः । पुरुऽचन्द्रः ॥
धिये । वाजाय । हिन्वतु ॥ ११ ॥]

नितराममितत्वेन महान् पुरुसुखश्च सः । धूत्करोति गरुत्मान् यद्धरेश्चेद् धूमकेतुता । ताच्छील्ये म इति ह्यस्मात् सूत्राद् धूम इतीरितः ॥ १३४ ॥ ज्ञानायान्नाय च स नः प्रहिणोतु सुकर्मणाम्[3] ॥ * ॥

---

१ "युद्धं तरुता" इति प्र. पाठः ।

२ "प्रत्यक्षं तव" इति क्वचित् । तवेत्यग्नेः । इयमृक् मध्यमाग्निदेवतेति शौनक आह—"ऋगग्नेर्मध्यमस्य तु । जराबोधेति विज्ञेया" (३. ९९.) इति ।

३ "सुकर्मणा" इति क्वचित् पठ्यते । तदा सुकर्मणा निमित्तेन नोऽस्मान् ज्ञानवत्त्वाय अन्नवत्त्वाय च, यथा ज्ञानवन्तोऽन्नवन्तश्च स्याम तथेति यावत् । प्रहिणोतु प्रेरयेतु । सुकर्मणामिति पाठे सुकर्मणां करणे प्रेरयतु । यद्वा सप्तम्यर्थे षष्ठी । सुकर्मसु प्रेरयतु ।

(३११) सरेवाँइवविश्पतिर्दैव्यःकेतुश्शृणोतुनः । उक्थैरग्निर्बृहद्भानुः ॥ १२ ॥

[सः । रेवान्ऽइव । विश्पतिः । दैव्यः । केतुः । शृणोतु । नः ॥

उक्थैः । अग्निः । बृहत्ऽभानुः ॥ १२ ॥]

**देवानां केतुभूतोऽसौ वित्तवान् विश्पतिर्यथा । अस्मदीयानि चोक्थानि बृहत्तेजाः शृणोत्वथ ॥ १३५ ॥ * ॥**

[१३–विश्वे देवा देवताः[1], त्रिष्टुप् छन्दः[2], धैवतः स्वरः]

(३१२) नमोमहद्भ्योनमोअर्भकेभ्योनमोयुवभ्योनमआशिनेभ्यः ॥

यजामदेवान्यदिशक्रवाममाज्यायसश्शंसमावृक्षिदेवाः ॥ १३ ॥ [॥ २४ ॥]

[नमः । महत्ऽभ्यः । नमः । अर्भकेभ्यः । नमः । युवऽभ्यः । नमः । आशिनेभ्यः ॥

यजाम । देवान् । यदि । शक्रवाम । मा । ज्यायसः । शंसम् । आ । वृक्षि । देवाः ॥ १३ ॥ २४ ॥]

[इति सप्तविंशं सूक्तम्]

**नारायणब्रह्मपुरस्सरास्तु देवा महान्तः शिशवः स्कन्दपूर्वाः । [3]वटुस्वरूपाश्च त एव कुत्रचिद् युवान इन्द्रादय एत एव च ॥ १३६ ॥ महत्त्वमेषां गुणतोऽपि यूनामिन्द्रादयो मध्यगुणा युवानः । आपेक्षिकाल्पैश्च गुणैस्तदीयैः समीरिता आशिना अर्भकाश्च । कृतं नमः शक्तिमन्तो यजाम न ज्यायसां स्तुतिमात्वं लुपामः ॥ १३७ ॥ एकस्य विष्णोरपि रूपभेदा अणीयांसः सन्त्यथवा महान्तः । युवत्वसाम्येऽपि महत्त्वभेदाद् युवा महानित्यपि भेद उक्तः ॥ १३८ ॥ * ॥ * ॥**

---

१ "वैश्वदेव्युत्तमा नमः" (३. ९९.) इति शौनकः । "स विश्वान् देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा" इति च ब्राह्मणम् । अत एव "सर्वदेवानां पूजायै प्रोद्यतः" इति पूर्वमुक्तम् । सर्वान् देवान् पूजयिष्यन् देवानां मुखमग्निं द्वाविंशत्या ऋग्भिः तद्गं च नारायणं तुष्टाव । तस्मिंश्च प्रसन्ने सम्प्रति सर्वान् देवान् सर्वगं च नारायणं स्तौतीति ।

२ "अन्त्या दैवी त्रिष्टुप्" इति च कात्यायनः ।

३ आशिना इति वटव उच्यन्ते । तथाहि भागवतम्—"नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः" (५. १३. २३.) इति । अत्र ह्याशिनेभ्य इत्येतद् वटुभ्य इत्यनूदितम् । युक्तं चैतत् । अर्भकेभ्य इति शैशवम्, आशिनेभ्य इति वाटवम्, युवभ्य इति यौवनम्, महद्भ्य इति वार्द्धकमिति सर्वावस्थासङ्ग्रहात् । एतेन

—२८—

[यत्र ग्रावा नव, शुनश्शेप आजीगर्तिः]

[१–६ अनुष्टुप् छन्दः[१], गान्धारः स्वरः]

[१–४ इन्द्रो देवता[२]]

[१–विराडनुष्टुप्[३]]

(३१३) यत्रग्रावापृथुबुध्नऊर्ध्वोभवतिसोतवे । उलूखलसुतानामवेद्विन्द्रजल्गुलः ॥ १ ॥

[यत्र । ग्रावा । पृथुऽबुध्नः । ऊर्ध्वः । भवति । सोतवे ॥
उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ॥ १ ॥]

**विस्तीर्णाधस्तना यत्र ग्रावाणोऽभिषवोद्धृताः । धिषणाभिषुतान् सोमानव[४] नः स्वीकृतस्तुते । गुर स्वीकार इत्यस्माद् धातोः स्तुत्यो हि जल्गुलः ॥ १३९ ॥ * ॥**

[२–उष्णिक् छन्दः[५], ऋषभः स्वरः]

(३१४) यत्रद्वाविवजघनाधिषवण्याकृता । उलूखलसुतानामवेद्विन्द्रजल्गुलः ॥ २ ॥

---

"आशिना वयसा व्याप्ता वृद्धाः" इति यत् सायणीयं पुराणविरोधि व्याख्यानं तत् तत एव हेतोरुपेक्ष्यम् । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति हि पुराविदो वदन्ति । अपि च आशिना इति यदि वृद्धा उच्यन्ते तदा महद्भ्य इत्यनेन पुनरुक्तम् । नच गुणेन महान्तो महान्तः, अल्पाश्चार्भका इति वाच्यम् । वयःप्रकरणविरोधात् । "नमः शिशुभ्यः" इति पुनरपि पुराणविसंवादाच्च । नह्यत्र पुराणे गुणतोऽर्भकत्वमुच्यते । किन्तु वयसेति स्फुटम् । गुणापेक्षया महत्त्वादिना चातुर्विध्यं तु भाष्योक्तं श्रुतेः समग्रमर्थान्तरमिति न पुराणेन विसंवदते ।

१ "यत्र ग्रावा नव षडनुष्टुब्बादि" इति कात्यायनः ।

२ अत्र प्राचीनानां मतभेदः श्रूयते । इन्द्रश्च उलूखलश्च देवते इति यास्ककात्थक्यौ । इन्द्र एवेति भागुरिकात्यायनौ । तथाहि शौनक आह-—"पराश्चतस्रो यत्रेति इन्द्रोलूखलयोः स्तुतिः । मन्येते यास्ककात्थक्यावेिन्द्रस्येति तु भागुरिः" (३. १००.) इति ।

३ उत्तरार्द्धे "उलूखलसुतअनामवेदु इन्द्र जल्गुलः" इति विश्लेषेण केवला अनुष्टुप् ।

४ अव प्राप्नुहि । "अव प्राप्तौ" इति धातुपाठात् ।

५ अत्र "जघना अधिषवणिया कृता" इति षोळशाक्षरत्वं सम्पाद्यम् । उत्तरार्द्धे च पूर्ववत् । तेन द्वात्रिंशदक्षरा केवला अनुष्टुप् । तदात्वे च गान्धार एव स्वरः । नोत ऋषभः ।

[यत्र । द्यौऽइव । जघना । अधिऽसवन्या । कृता ॥
उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ॥ २ ॥]

**फलकेऽभिषवस्यैव स्त्रियो जघनसाम्यतः । प्रोक्ते ॥ * ॥**

[३–भुरिगुष्णिक् छन्दः[१], ऋषभः स्वरः]

(३१५) यत्रनार्यपच्यवमुपच्यवश्चशिक्षते । उलूखलसुतानामवेद्विन्द्रजल्गुलः ॥ ३ ॥

[यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते ।
उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ॥ ३ ॥]

**उपच्यवश्चापच्यवः सङ्गतिभेदतः ॥ १४० ॥ जिह्वा ग्रावाऽथ वाग्युक्तिरुच्यतेऽभिषवस्तथा । खलश्चोरुस्तथा देहः सोमो मन इतीरितः । ज्ञानोत्पत्तौ च फलकस्थाने ओष्ठे उदीरिते[२] ॥ १४१ ॥ ॥ * ॥**

[४– विराडनुष्टुप्[३]]

(३१६) यत्रमन्थांविबध्नतेरश्मीन्यमितवाइव । उलूखलसुतानामवेद्विन्द्रजल्गुलः ॥ ४ ॥

[यत्र । मन्थाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव ॥
उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ॥ ४ ॥]

**मन्थरश्मीनश्वरश्मीन् यथा यत्र निबध्नते । रश्मयोऽन्यत्र भाव्यश्च ॥ * ॥**

---

१ एकोनत्रिंशदक्षरेति भुरिगुष्णिक् । अथच "यत्र नारियपच्यवम्" इति पूर्वार्द्धे, तथा पूर्ववदेव चोत्तरार्द्धे विश्लेषेण केवला अनुष्टुप् । तदात्वे च गान्धार एव स्वरः । नोत ऋषभः ।

२ "ओष्ठे इतीरिते" इति क्वचित् पाठः । मुखशब्दवदोष्ठशब्दोऽप्यर्द्धर्चादिषु पठनीय इति ज्ञायते । "लिङ्गमशिष्यम्" इत्युक्तेः ।

३ अत्रोत्तरार्द्धस्य प्रथममन्त्र इव विश्लेषेण केवलानुष्टुप्त्वम् ।

[५-६ उलूखलः[1] (पृथिवी वनस्पतिश्च) देवता]

(३१७) यच्चिद्धित्वंगृहेगृहउलूखलकयुज्यसे। इहद्युमत्तमंवदजयतामिवदुन्दुभिः॥५॥[॥२५॥]

[यत्। चित्। हि। त्वम्। गृहेऽगृहे। उलूखलक। युज्यसे॥
इह। द्युमत्ऽतमम्। वद। जयताम्ऽइव। दुन्दुभिः॥ ५ ॥ २५ ॥]

यस्माद् युक्तो गृहेगृहे। देहेदेहेऽथवा तेन द्युमद्दुन्दुभिमद् वद ॥ १४२ ॥ पृथिवी देवता तस्य तद्व्रतो वा स्वयं हरिः। सोमामात्योऽपरो देवो वनस्पतिरितीरितः ॥ १४३ ॥ सोमो वा तद्वविष्णुर्वा श्रुतः फलकदेवता। वृक्षाणामपि सर्वेषामतः ॥ * ॥

[६-निचृदनुष्टुप्[2]]

(३१८) उतस्मतेवनस्पतेवातोविवात्यग्रमित्। अथोइन्द्रायपातवेसुनुसोममुलूखल ॥ ६॥

[उत। स्म। ते। वनस्पते। वातः। वि। वाति। अग्रम्। इत्॥
अथोइति। इन्द्राय। पातवे। सुनु। सोमम्। उलूखल ॥ ६ ॥]

वृक्षाग्र एव तु ॥ १४४ ॥ वायुर्वाति वनानां वा भजनीयदिवौकसाम्। पतिर्विष्णुस्तु तस्याग्रे वायुर्देवो हि गच्छति। पातवे स्वस्य सोमं वा मनो वा सुनु विष्णवे ॥ १४५ ॥ * ॥

[७-९ गायत्री, षड्जः स्वरः] [७-८ फलकौ[3] (सोमः सोमामात्यो वनस्पतिश्च) देवते]
[७- निचृद्गायत्री[4]]

(३१९) आयजीवाजसातमाताह्यु१च्चाविजर्भृतः। हरीइवान्धांसिबप्सता ॥ ७ ॥

---

१ 'यच्चिद्धि औलूखल्यौ" इत्यनुक्रमणिकायाम्। "यच्चिद्ध्युलूखलस्य द्वे" (३. १०१.) इति शौनकः। अचेतनस्य चोलूखलस्य न स्तुत्यत्वमिति तद्देवते पृथिवी वनस्पतिश्चात्रोच्येते।

२ "वि वाति अग्रमित्" इति विश्लेषेण केवलाऽनुष्टुप्।

३ अत्र यद्यपि कात्यायनमतेन उलूखलमुसलौ देवते। तथाहि अनुक्रमणिका—"परे मौसल्यौ च" इति। चकारेण औलूखल्यौ च। शौनकोऽप्याह—"द्वे परे मुसलस्य च" (३. १०१.) इति। तत्र मुसलस्याप्रसङ्गात् कथं देवतात्वमिति चिन्त्यम्। द्विवचनान्तपदेन पूर्वं प्रस्तुते अधिषवण्यावेवात्राप्युच्येते इति सुश्लिष्टम्। सोमकण्डनाय भूमौ निहितं पीठद्वयं अधिषवणीति फलक इति चोच्यते। फलकदेवते च सोमः सोमामात्यो वनस्पतिश्च। तावेव च मन्त्रदेवते।

४ "ता हि उच्चा" इति विश्लेषेण केवला गायत्री।

[आयजीइत्याऽयजी । वाजऽसातमा । ता । हि । उच्चा । विऽजभृतः ॥
हरीइवेतिहरीऽइव । अन्धांसि । बप्सता ॥ ७ ॥]

आयाज्यावन्नलब्धृणामुत्तमावतिभक्षकौ । जक्ष भक्षण इत्यस्माद् यथाऽश्वावन्नभक्षकौ[1] ॥ १४६ ॥ सोमस्य भक्षकावन्न ॥ * ॥

(३२०) तानोअद्यवनस्पतीऋष्वावृष्वेभिस्सोतृभिः । इन्द्रायमधुमत्सुतम् ॥ ८ ॥

[ता । नः । अद्य । वनस्पतीइति । ऋष्वौ । ऋष्वेभिः । सोतृऽभिः ॥
इन्द्राय । मधुऽमत् । सुतम् ॥ ८ ॥]

[2]ऋष्वावतिमहत्तरौ । महद्भिः सोतृभिः सोममिन्द्राय मधुमत् सुतम् ॥ १४७ ॥ * ॥

[९– निचृद्गायत्री[3]]
[९– सोमो देवता[4]]

(३२१) उच्छिष्टञ्चम्वोर्भरसोमम्पवित्रआसृज । निधेहिगोरधित्वचि ॥ ९ ॥ [॥ २६ ॥]

[उत् । शिष्टम् । चम्वोः । भर । सोमम् । पवित्रे । आ । सृज ॥
नि । धेहि । गोः । अधि । त्वचि ॥ ९ ॥ २६ ॥]

---

१ "बप्सति । भसथः । बब्धाम् । ह्वरति" (२. ८.) इत्यत्तिकर्मसु निघण्टुः ।

२ "महत् । ब्रध्नः । ऋष्वः । बृहत्" (३. ३.) इति महन्नामसु निघण्टुः ।

३ "चमुवोर्भर" इति विश्लेषेण केवला गायत्री ।

४ अत्र "प्रजापतेर्हरिश्चन्द्रस्यान्त्या चर्मप्रशंसा वा" इत्यनुक्रमणिकायां कात्यायनः । यागे हरिश्चन्द्रमुद्दिश्येयमृक् देवरातेनाभिहितेति तद्देवताकत्वं कात्यायनो मन्यते । अन्ययजमानकेऽपि यज्ञेऽयमेव मन्त्रो विनियुज्यत इति न यजमानो मन्त्रदेवता । नच देवरातः प्रथमं हरिश्चन्द्रमुद्दिश्य ददर्शेति तद्देवताकत्वम् । नहि प्रैषगोचरस्य देवतात्वमिति पुरैव ह्यभिहितम् । चर्म तु मन्त्रे प्रस्तुतम् । किन्तु चर्मप्रशंसा तु न क्वापि श्रूयते । अधित्वचीत्यधिकरणतया श्रुतं चर्म कथं प्रशंसायाः कर्म भवतीति चिन्त्यम् । शौनकस्तु—"चर्माधिषवणीयं वा सोमं वाऽन्त्या प्रशंसति" (३.१०१) इत्याह । चर्म देवतेति च दत्तोत्तरम् । तेन सोमप्रशंसेयमित्येव युक्तम् । सोमरसस्य च सोमदेवतायाश्चेति यावत् ।

[इत्यष्टाविंशं सूक्तम्]

**सोममुत्पवनायैतं द्रोणोपरिपवित्रके। भर शिष्टं चमसयोर् ऋजीषं[1] गोरधित्वचि। भरेत्यात्मानमेवाऽऽह स्वान्तर्यामिणमेव वा॥ १४८॥ [2]शिरोभेदौ च चमसौ द्रोणं चोदरमीरितम्। पवित्रं बुद्धिरेवात्र मनःशुद्धिस्तया यतः॥ १४९॥ मुखचर्मैव गोचर्म मन एतेषु विष्णवि[3]। धार्यम्॥ *॥ *॥**

—२९—

[यच्चिद्धि सप्त, शुनश्शेप आजीगर्तिः, पङ्क्तिः[4], इन्द्रः[5], पञ्चमः]

[निचृत् पङ्क्तिः[6]]

**(३२२) यच्चिद्धिसत्त्यसोमपाअनाशस्ताइवस्मसि।**

**आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ॥ १॥**

**[यत्। चित्। हि। सत्त्य। सोमऽपाः। अनाशस्ताःऽइव। स्मसि॥**

**आ। तु। नः। इन्द्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥**

**॥ १॥**

---

१ "ऋजीषं नीरसं सोमलताचूर्णम्" इति वेददीपः। "गतसारः सोम ऋजीषः" इति कर्कः। अभिषवणेन सारांशे गृहीतेऽवशिष्टो नीरसभाग इति यावत्।

२ "शिरोभेदौ तु चमसौ" इति च प्र. पाठः।

३ एतेन वैदिकप्रयोगेणाऽऽचार्यः स्वभाष्यस्य परमवैदिकतामाह। "न दोषो विष्णवि क्वचित्" इत्याद्यनुव्याख्याने च। तथाहि श्रूयते—"यत् सोममिन्द्र विष्णवि" (ऋ.८.१२.१६.) इत्यादि। अवोचद्देव च नयचन्द्रिकाकृत्—"करतळविलसितमहामाणिक्यवदनाद्यनन्तकालमनाद्यनन्तवेदानवलोकयतः सर्वलोकगुरोः श्रुतिपतिभगवत्तमशिष्यसत्तमसर्वमतिचूडामणेर्महाव्याकरणसिद्धां वैदिकीं लौकिकीं च भङ्गीं प्रकाशयतो मध्वदेवस्यैवंविधाः प्रयोगा युज्यन्त एव" इति।

४ "यच्चित् सप्त पाङ्क्तम्" इत्यनुक्रमणिका।

५ एतत्सूक्ते सप्तर्चः, उत्तरसूक्ते च आदितः षोडशर्चः, आहत्य त्रयोविंशतिः ऋच इन्द्रदेवताकाः। तथाहि शौनकः—"ऐन्द्रं यच्चिद्धि सत्येति उत्तरं चाऽऽश्विनात् तृचात्" (३. १०२) इति।

६ अष्टाक्षरैः पञ्चभिः पादैर्युतेयं पंक्तिः पथ्या पंक्तिरिति गीयते। तथाहि पिङ्गलः—"पथ्या पञ्चभिर्गायत्रैः" (३. ४८.) इति पंक्त्यधिकारे। तथा च सूक्तेऽस्मिन् पथ्या नाम पंक्तिश्छन्दः। चतुर्थपादे च "गोष्वश्वेषु शुभ्रिषु" इति सप्ताक्षरत्वात् निचृत्। "गोषु अश्वेषु शुभ्रिषु" इति विश्लेषेण च चत्वारिंशदक्षरा केवला पंक्तिः पथ्या। प्राची पंक्तिदेवता भवति।

यत्सद्गुणाशस्ताइव स्मसि वयं ततः । शुभ्रवाङ्मनआदीनां विषयेऽस्मान् प्रशंसय ॥ १५० ॥ बहुवाच्यज्ञेययुक्तान् कृत्वाऽस्मांस्त्वं महामख ॥ * ॥

[२–३ विराट् पङ्क्तिः[१]]

(३२३) शिप्रिन्वाजानाम्पतेशचीवस्तवदंसना ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ २ ॥

[शिप्रिन् । वाजानाम् । पते । शचीऽवः । तव । दंसना ॥ ० ॥ २ ॥]

सुखिन्नन्नपते वाग्ज्ञ[२] तव कर्माणि[३] सर्वेशः ॥ १५१ ॥ * ॥

(३२४) निष्वापयामिथूदृशासस्तामबुद्ध्यमाने ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ३ ॥

[नि । स्वापय । मिथुऽदृशा । सस्ताम् । अबुद्ध्यमानेइति ॥ ० ॥ ३ ॥]

दैत्यरक्षःप्रजे मिथ्यादृशौ सस्तां[४] पुनर्बहु । अबुद्ध्यमाने नित्यं च यथा निष्वापयेश्वर ॥१५२॥*॥

[४–५ निचृत् पङ्क्तिः[५]]

(३२५) ससन्तुत्याअरातयोबोधन्तुशूररातयः ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ४ ॥

[ससन्तु । त्याः । अरातयः । बोधन्तु । शूर । रातयः ॥ ० ॥ ४ ॥]

स्वपन्तु ते शत्रवस्ते सर्वदाऽज्ञानमोहिताः । बोधन्तु चैव मित्राणि तव रूपं सुनिर्भयम् ॥ १५३ ॥ ॥ * ॥

---

१ अत्र पूर्वार्द्धे "शिपरिन्" इति यण्व्यूहेन पूर्ववदुत्तरार्द्धव्यूहेन च केवला पंक्तिः । उत्तरमन्त्रे च "सस्ताम-बुद्धियमाने" इति पूर्वार्द्धव्यूहेन पूर्ववदेव चोत्तरार्द्धव्यूहेनं केवला पंक्तिः ।

२ शचीवः वाग्ज्ञ । "मही । अदितिः । शची । वाक्" (१. ११.) इति वाङ्नामसु निघण्टुः ।

३ दंसना कर्माणि । "अपः । अप्नः । दंसः" (२. १.) इति कर्मनामसु निघण्टुः ।

४ "षस् स्वापे" इति वोपदेवः । "स्वपिति । सस्ति" (३. २२.) इति निघण्टुः ।

५ प्रथममन्त्रवदुत्तरार्द्धव्यूहेनेयं केवला पथ्या पंक्तिः ।

(३२६) समिन्द्रगर्दभम्मृणनुवन्तम्पापयामुया ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ५ ॥

[सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम् । पापया । अमुया ॥ ० ॥ ५ ॥]

पापया मायया मिथ्या स्तुवन्तं त्वामपि प्रभो । मायामयास्तव गुणा न सन्ति परमार्थतः ॥ १५४ ॥ इति नित्यं रुवन्तं च मायावाद्याख्यगर्दभम् । संचूर्णय[1] तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा ॥ १५५ ॥ * ॥

[६–७ विराट् पंक्तिः[2]]

(३२७) पतातिकुण्डृणाच्यादूरंवातोवनादधि ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ६ ॥

[पताति । कुण्डृणाच्या । दूरम् । वातः । वनात् । अधि ॥ ० ॥ ६ ॥]

दूरं च पातयत्वेनान् वायुस्तस्मिंस्तमस्यधः । वनं दृढग्रहेणैव तत् तमो वेदनोल्बणा[3] । कुण्डृणाचीति सम्प्रोक्ता कुण्डान्नीचत्वतोऽधिकम् ॥ १५६ ॥ कुम्भः कुण्डाभिधः कुम्भीपाकान्नीचा हि तद्गतिः । रेफः स्वरव्यत्ययश्च तदाधिक्यार्थमीरितौ ॥ १५७ ॥ * ॥

(३२८) सर्वम्परिक्रोशञ्जहिजम्भयाकृकदाश्वम् ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ७ ॥ [॥ २७ ॥]

[सर्वम् । परिऽक्रोशम् । जहि । जम्भय । कृकदाश्वम् ॥ ० ॥ ७ ॥ २७ ॥]

[इत्येकोनात्रिंशं सूक्तम्]

सर्वं परिक्रोशकरं पापिनं जहि जम्भय । दंशय[4] श्वादिभिर्नित्यं क्रकचैर्दशनं यथा ॥ १५८ ॥
॥ * ॥ * ॥

---

१ सम्मृण सञ्चूर्णय । "मृण हिंसे" इति वोपदेवः ।

२ अत्र पूर्वार्धे "कुण्डृणाचिया" इति विश्लेषेण, पूर्ववदुत्तरार्धविश्लेषेण च केवला पङ्क्तिः । उत्तरमन्त्रे च "कृकदाशुवम्" इति ।

३ "वेदनोल्बणम्" इति च कोशेषु पठ्यते ।

४ जम्भय दंशय । "जभि नाशने" । नाशे तु जम्भयेत्" इति दैवम् ।

—३०—

[आ व इन्द्रं द्वाविंशतिः, शुनश्शेप आजीगर्तिः,]

[१–१० गायत्री च्छन्दः, षड्जः स्वरः]

[१–१६ इन्द्रो देवता]

(३२९) आवइन्द्रङ्क्रिविंयथावाजयन्तश्शतक्रतुम् । मंहिष्ठंसिञ्चइन्दुभिः ॥ १ ॥

[आ । वः । इन्द्रम् । क्रिविम् । यथा । वाजऽयन्तः । शतऽक्रतुम् ॥
मंहिष्ठम् । सिञ्चे । इन्दुभिः ॥ १ ॥]

**हे वाजयन्तो युद्ध्यन्तो देवा भोगिन एव वा । सोमैर्वै इन्द्रमासिञ्चे क्रिविं यद्वन्नृपं कृतेः । कर्तारमीशमिव वा स्वदृष्टान्तो हरेर्भवेत् ॥ १५९ ॥ * ॥**

[निचृद् गायत्री[१]]

(३३०) शतंवायश्शुचीनांसहस्रंवासमाशिराम् । एदुनिम्नन्नरीयते ॥ २ ॥

[शतम् । वा । यः । शुचीनाम् । सहस्रम् । वा । सम्ऽआशिराम् ॥
आ । इत् । ऊँइति । निम्नम् । न । रीयते ॥ २ ॥]

**शतेन वा सहस्रेण सोमानामाशिरावताम् । [२]पाताळ इव नैवायं निलीनो भवति कचित् ॥१६०॥ विलापयति तानेव ॥ * ॥**

[विराड् गायत्री[३]]

(३३१) संयन्मदायशुष्मिणएनाह्यस्योदरे । समुद्रोनव्यचोदधे ॥ ३ ॥

[सम् । यत् । मदाय । शुष्मिणे । एना । हि । अस्य । उदरे ॥
समुद्रः । न । व्यचः । दधे ॥ ३ ॥]

---

१ "शुचिइनाम्" इति विश्लेषेण केवला गायत्री । २ "पाताल इव" इति प्र. पाठः ।
३ "एना हि अस्य उदरे" इति विश्लेषेण केवला गायत्री ।

बलिनेऽस्मै मदाय च । सन्दधुनैव विश्वानि व्यक्तीरस्योदरे क्वचित् । समुद्रेकात् समुद्राख्या प्रकृतिश्च महत्त्वतः ॥ १६१ ॥ ॥ * ॥

(३३२) अयमुतेसमतसिकपोतइवगर्भधिम् । वचस्तच्चिन्नओहसे ॥ ४ ॥

[अयम् । ऊँइति । ते । सम् । अतसि । कपोतःऽइव । गर्भऽधिम् ॥
वचः । तत् । चित् । नः । ओहसे ॥ ४ ॥]

तवैवायं प्रपञ्चश्च कपोतो गर्भधिं यथा । सम्यग् व्याप्नोषि विश्वं च तस्मान्नो वच ओहसे ॥ १६२ ॥ * ॥

[निचृद् गायत्री[१]]

(३३३) स्तोत्रंराधानाम्पतेगिर्वाहोवीरयस्यते । विभूतिरस्तुसूनृता ॥ ५ ॥[॥ २८ ॥]

[स्तोत्रम् । राधानाम् । पते । गिर्वाहः । वीर । यस्य । ते ॥
विऽभूतिः । अस्तु । सूनृता ॥ ५ ॥ २८ ॥]

गिरां वाहक ते स्तोत्रमखिलं वेदवैदिकम्[२] । सूनृता वागियं मे च विभूतिरिति कल्प्यताम् । अस्त्वित्येतत् प्रसादेन फलदानादुदीर्यते ॥ १६३ ॥ * ॥

[निचृद् गायत्री[३]]

(३३४) ऊर्ध्वस्तिष्ठानऊतयेस्मिन्वाजेशतक्रतो । समन्येषुब्रवावहै ॥ ६ ॥

[ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतोइतिशतऽक्रतो ॥
सम् । अन्येषु । ब्रवावहै ॥ ६ ॥]

---

१ "स्तोतरम्" इति यण्व्यूहेन केवला गायत्री ।

२ वेदाश्च वैदिकानि च वचनानि वेदवैदिकम् । एतदखिलं तवैव स्तोत्रम् । केचित्तु "अखिलं वैदिकं पदं तव स्तोत्रमित्यहं वेद जानामि" इति व्याचक्षते । बहुपदाध्याहारेणापि श्रुतावप्रतीयमानमर्थं ते किमिति प्रत्याययन्तीति चिन्त्यम् ।

३ "ऊतये अस्मिन्" इति विश्लेषेण केवला गायत्री ।

उत्तमः सन्नत्र युद्धे ज्ञानाज्ञानमये विभो । अभिप्रेतार्थसिद्ध्यर्थमस्माकं तिष्ठ सर्वदा ॥ १६४ ॥
मत्स्थितस्त्वमहं चैव त्वामन्येषु ब्रवावहे ॥ * ॥

(३३५) योगेयोगेतवस्तरंवाजेवाजेहवामहे । सखायइन्द्रमूतये ॥ ७ ॥

[योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे ॥
सखायः । इन्द्रम् । ऊतये ॥ ७ ॥]

तेजस्वितममिन्द्रं तं योगेयोगे हवामहे ॥ १६५ ॥ * ॥

(३३६) आघागमद्यदिश्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुपनोहवम् ॥ ८ ॥

[आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिभिः ॥
वाजेभिः । उप । नः । हवम् ॥ ८ ॥]

उक्तं चेत् स शृणोत्येव श्रुतं चेदागमिष्यति । बह्वर्थयुक्ताभिप्रायैरन्नैरप्युप नो हवम् ॥ १६६ ॥
॥ * ॥

[९–१० निचृद् गायत्री[१]]

(३३७) अनुप्रत्नस्यौकसोहुवेतुविप्रतिन्नरम् । यन्तेपूर्वम्पिताहुवे ॥ ९ ॥

[अनु । प्रत्नस्य । ओकसः । हुवे । तुविऽप्रतिम् । नरम् ॥
यम् । ते । पूर्वम् । पिता । हुवे ॥ ९ ॥]

पुरातनस्य विष्णोस्तदोकसोऽर्थे ह्वये हरिम् । महान् प्रतिप्रतिस्थश्च[२] तुविप्रतिरितीरितः ॥ १६७ ॥
यं त्वा पूर्वं पिता ज्ञात्वैवाऽह्वयामास विश्वकृत् । त्वद्भक्त इति वा ब्रह्मा ॥ * ॥

---

१ नवम्यामृचि "प्रत्नस्य ओकसः" इति विश्लेषेण, दशम्यां च "विश्ववार आशास्महे" इति विश्लेषेण केवलगायत्रीत्वम् ।

२ "महान् प्रतिः प्रतिस्थश्च" इति वा पठनीयम् । तुविरित्येतत् महानिति व्याख्यातम् । प्रतिरित्यस्य व्याख्यानं प्रतिस्थ इति । प्रतितिष्ठतीति प्रतिः । तुविश्चासौ प्रतिश्च । उपसर्गस्य क्रियायोगमन्तरेणापि तदर्थबोधकत्वस्य बहुलमुपलम्भात् ।

(३३८) तन्त्वावयंविश्ववाराशास्महेपुरुहूत । सखेवसोजरितृभ्यः ॥ १० ॥ [॥ २९ ॥]

[तम् । त्वा । वयम् । विश्वऽवार । आ । शास्महे । पुरुऽहूत ॥
सखे । वसोइति । जरितृऽभ्यः ॥ १० ॥ २९ ॥]

तं त्वामाशास्महे वयम् ॥ १६८ ॥ * ॥

[११–पादनिचृद् गायत्री[1]]

(३३९) अस्माकंशिप्रिणीनांसोमपास्सोमपाव्नाम् । सखेवज्रिन्त्सखीनाम् ॥ ११ ॥

[अस्माकम् । शिप्रिणीनाम् । सोमऽपाः । सोमऽपाव्नाम् ॥
सखे । वज्रिन् । सखीनाम् ॥ ११ ॥]

अस्माकं सुखिनां सोमपातॄणाम् ॥ * ॥

[१२–१५ गायत्री]

(३४०) तथातदस्तुसोमपास्सखेवज्रिन्तथाकृणु । यथातउश्मसीष्टये ॥ १२ ॥

[तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु ॥
यथा । ते । उश्मसि । इष्टये ॥ १२ ॥]

अस्तु तत् तथा । ते सकाशाद् यथेच्छामः प्राप्तुं देव तथा कृणु ॥ १६९ ॥ वज्रो ज्ञानं वज[2] गतावित्यस्मात् ॥ * ॥

(३४१) रेवतीर्नस्सधमादइन्द्रेसन्तुतुविवाजाः । क्षुमन्तोयाभिर्मदेम ॥ १३ ॥

---

१ प्रतिपादं सप्ताक्षरेति पादनिचृदेयं गायत्री । "अस्माकं पादनिचृत्" इति कात्यायनोऽप्याह ।

२ "वर्ज गतावित्यस्मात्" इति क्वचित् कोशेषु पठ्यते । "गतौ वजति वाजयेत्" इति दैवम् । "वज मार्गसंस्कारगत्योः" इति धातुपाठः ।

[रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः ॥
क्षुऽमन्तः । याभिः । मदेम ॥ १३ ॥]

वित्तसंयुताः । रेवतीः[1] पशवः प्रोक्ताः सधमादे सुखस्थितौ ॥ १७० ॥ तुविवाजा महान्नानि क्षुमन्तः स्थितिसंयुताः । ज्ञानयुक्तं सुखं वा स्यात् सतीशोऽस्माकमूर्जितम् ॥ १७१ ॥ * ॥

[१४-विराड्गायत्री[2]]

(३४२) आघत्वावान्त्मनाप्तस्तोतृभ्योधृष्णवियानः । ऋणोरक्षन्नचक्रयोः ॥ १४ ॥

[आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णोइति । इयानः ॥
ऋणोः । अक्षम् । न । चक्रयोः ॥ १४ ॥]

त्वद्वांस्त्वयैव चाऽप्तः स्यात् स्तोतॄणामा समन्ततः । इयानो गम्यमानस्तै रणतोश्चक्रयोर्यथा ॥ १७२ ॥ अक्षमाश्रयभावेन ॥ * ॥

[निचृद्गायत्री[3]]

(३४३) आयद्दुवश्शतक्रतवाकामञ्जरितॄणाम् । ऋणोरक्षन्नशचीभिः ॥ १५ ॥ [॥ ३० ॥]

[आ । यत् । दुवः । शतक्रतोइतिशतऽक्रतो । आ । कामम् । जरितॄणाम् ॥
ऋणोः । अक्षम् । न । शचीभिः ॥ १५ ॥ ३० ॥]

स्तोतॄणां काममादुहः । आ समन्तात् स्थितं काममत्याधिक्ये पृथक् पदम् ॥ १७३ ॥ * ॥

[१६-त्रिष्टुप् छन्दः[4], धैवतः स्वरः]

(३४४) शश्वदिन्द्रःपोप्रुथद्भिर्जिगायनानदद्भिश्शाश्वसद्भिर्धनानि ॥
सनोहिरण्यरथन्दंसनावान्त्सनस्सनितासनयेसनोदात् ॥ १६ ॥

---

१ वित्तसंयुताः रेवतीः । पशवो वा रेवतीः ।

२ "त्मना आप्तः" इति, "न चक्रियोः" इति च विश्लेषेण केवला गायत्री ।

३ "जरितृऋणाम्" इति नामि दीर्घस्य विश्लेषेण केवला गायत्री ।

४ "शश्वत् त्रिष्टुप्" इति कात्यायनः । अत्र शौनक आह—"स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ ।

[शश्वत् । इन्द्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि ॥ सः । नः । हिरण्यऽरथम् । दंसनाऽवान् । सः । नः । सनिता । सनये । सः । नः । अदात् ॥ १६ ॥]

क्रोधाच्छ्वसद्भिः प्रथयद्भिरात्मवीर्यं सुरैः शश्वदिन्द्रो जिगाय । धनानि नः स्वर्णरथं च दाता लब्धा प्रादाल्लाभकृते च नोऽखिलम् ॥ १७४ ॥ * ॥

[१७–२२ गायत्री च्छन्दः, षड्जः स्वरः]

[१७–१९ अश्विनौ देवते[1]]

[१७–विराड्गायत्री[2]]

(३४५) आश्विनावश्वावत्येषायातंशवीरया । गोमद्दस्राहिरण्यवत् ॥ १७ ॥

[आ । अश्विनौ । अश्वऽवत्या । इषा । यातम् । शवीरया ॥ गोऽमत् । दस्रा । हिरण्यऽवत् ॥ १७ ॥]

गोमद्धिरण्यवच्च स्याद् यथाऽऽयातं तथैव नः । सुखपुत्रयुजा चाश्ववत्येषा शं सुखं यतः ॥ १७५ ॥ इडैश्वर्यं तथा वीरं वीर्यं स्वान्यश्वनामतः । गौर्वाग् हितं च रमणं परं ब्रह्म गुणोच्छ्रितम् ॥ १७६ ॥ * ॥

[१८–निचृद्गायत्री[3]]

(३४६) समानयोजनोहिवांरथोदस्रावमर्त्यः । समुद्रेअश्विनेयते ॥ १८ ॥

[समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः ॥ समुद्रे । अश्विना । ईयते ॥ १८ ॥]

---

शुनश्शेपाय दिव्यं तु रथं सर्वं हिरणमयम्" (३. १०३.) इति । टीकाकृदप्याह—"तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ । तमेतया प्रतीयाय शश्वदिन्द्र इति" इति ।

१ "परौ तृचावाश्विनौषस्यौ" इत्यनुक्रमणिका । "तमिन्द्र उवाचाश्विनौ वै देवानां भिषजौ तौ नु स्तुहि, अथ त्वोत्स्रक्ष्यामीति स तुष्टाव तावुत्तरेण तृचेन" इति ब्राह्मणम् ।

२ "आ अश्विनावश्ववत्या इषा यातं शवीरया" इति विश्लेषेण केवला गायत्री ।

३ "अमर्तियः" इति विश्लेषेण केवला गायत्री ।

समानयोगयुक्तोऽयं रथो देहस्त्वदात्मनाम्[1]। चित्सुखत्वाद्मर्त्यश्च ज्ञायते क्षीरसागरे। मोक्षस्य यावता प्राप्तिः समानो योग उच्यते ॥ १७७ ॥ * ॥

[१९–विराड्गायत्री[2]]

(३४७) न्य१घ्न्यस्यमूर्द्धनिचक्रंरथस्ययेमथुः। परिद्यामन्यदीयते ॥१९ ॥

[नि। अघ्न्यस्य। मूर्द्धनि। चक्रम्। रथस्य। येमथुः ॥
परि। द्याम्। अन्यत्। ईयते ॥ १९ ॥]

एकं चक्रं गिरेर्मूर्ध्नि नियतं दिवि चापरम्। पापं चक्रं[3] हरिघ्न्यस्य पुण्यं दिव्यस्य चोपरि ॥ १७८ ॥ * ॥

[२०–२२ उषाः देवता[4]]
[२०–निचृद् गायत्री[5]]

(३४८) कस्तउषःकधप्रियेभुजेमर्तोअमर्त्ये। कन्नक्षसेविभावरि ॥ २० ॥

[कः। ते। उषः। कधऽप्रिये। भुजे। मर्तः। अमर्त्ये ॥
कम्। नक्षसे। विभाऽवरि ॥ २० ॥]

को मर्त्यस्तव भोगाय यतः सर्वप्रियो भवान्। किमपि प्रियमस्येति पूर्णानन्दात् कधप्रियः ॥ १७९ ॥ आप्तकामत्वतः कं च[6] गच्छसि स्वार्थहेतुतः। विशेषाद् भावृतेर्विष्णुः कथितश्च[7] विभावरी ॥ १८० ॥ * ॥

---

१ "देहस्तदात्मनाम्" इति क्वचित् पाठः।

२ "नि अघ्नियस्य मूर्द्धनि" इति विश्लेषेण केवला गायत्री।

३ "पापचक्रम्" इति क्वचित्।

४ "आश्विनादुत्तरः कस्त उषस्यस्तृच उत्तमः" (३. १०२.) इति च शौनकः। "तमश्विनावूचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याव इति स उषसं तुष्टावात उत्तरेण तृचेनैतस्य हस्रवा ऋच्युक्तायां विपाशो मुमुचे" इति ब्राह्मणम्। अश्विभार्या ब्रह्मवायू चोषोदेवता इति पूर्वमावेदितम्।

५ "अमर्तिये" इति विश्लेषेण केवला गायत्री।

६ "कं त्वम्" इति क्वचित्।

७ "कथितस्तु" इति क्वचित्।

[२१–आर्च्युष्णिक्,[१] ऋषभः स्वरः]

(३४९) वयंहितेअमन्मह्यान्तादापराकात् । अश्वेनचित्रेअरुषि ॥ २१ ॥

[वयम् । हि । ते । अमन्महि । आ । अन्तात् । आ । पराकात् ॥
अश्वे । न । चित्रे । अरुषि ॥ २१ ॥]

चिन्तयामस्त्वैकस्य विश्वमान्तपराकयोः । पराकः सुसुखैव श्रीरन्तः कलिरुदाहृतः ॥ १८१ ॥
नरकस्वर्गयोरेव देव्युषा उदिता यदा । जात्यश्ववत् सदा भद्रे चारुणे[२] ॥ * ॥

[२२–विराड् गायत्री[३]]

(३५०) त्वन्त्येभिरागहिवाजेभिर्दुहितर्दिवः । अस्मेरयिन्निधारय ॥ २२ ॥ [॥ ३१ ॥]

[त्वम् । त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः ॥
अस्मेइति । रयिम् । नि । धारय ॥ २२ ॥ ३१ ॥]

[इति त्रिंशं सूक्तत्]

प्राणवाक्सुते । तद्व्यङ्ग्यत्वाद्धरिश्चैव दिवः पुत्र उदाहृतः ॥ १८२ ॥ * ॥ * ॥

इति षष्ठोऽनुवाकः

---

१ "अमन्महि आ अन्तादा पराकात् । अश्नुवे" इति विश्लेषेण केवला गायत्री । तदात्वे षड्ज एव स्वरः । नोत ऋषभः ।

२ "वाऽरुणे" इति क्वचित् पाठः ।

३ "तुवं तियेभिरागहि" इति विश्लेषेण केवला गायत्री ।

— ३१ —

अग्नीन्द्रादिगतं पृथक्स्थितमपि स्तौत्यच्युतं भक्तितः स्वर्णस्तूप इति प्रसिद्धिमगमद्[1] यः संस्तुवन् सूर्यगम् । विष्णुं स्वर्णसमानचारुवपुषं स्वर्णाभिधं शाश्वतं तं दृष्ट्वा परतोऽभवच्च[2] महितः सुज्ञानमप्यासवान् ॥ १८३ ॥—

[त्वमग्ने अष्टादश, हिरण्यस्तूप आङ्गिरसः, अग्निः[3]]

[१–७ जगती च्छन्दः,[4] निषादः स्वरः]

[१– विराड् जगती[5]]

(३५१) त्वमग्नेप्रथमोअङ्गिराऋषिर्देवोदेवानामभवश्शिवस्सखा ॥
तवव्रतेकवयोविद्मनापसोजायन्तमरुतोभ्राजदृष्टयः ॥ १ ॥

[त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् । अभवः । शिवः । सखा ॥ तव । व्रते । कवयः । विद्मनाऽपसः । अजायन्त । मरुतः । भ्राजत्ऽऋष्टयः ॥ १ ॥]

अङ्गे रसो ज्ञानत एव चर्षिः सखा प्रियत्वेन दिवौकसां हरिः । तव व्रतेनैव सविद्यकर्मिणो महाविज्ञाना मरुतो बभूविरे ॥ १८४ ॥ * ॥

[२–निचृज् जगती[6]]

(३५२) त्वमग्नेप्रथमोअङ्गिरस्तमः कविर्देवानाम्परिभूषसिव्रतम् ॥
विभुर्विश्वस्मैभुवनायमेधिरोद्विमाताशयुःकतिधाचिदायवे ॥ २ ॥

---

१ "प्रसिद्धमगमत्" इति क्वचित् ।

२ "यं दृष्ट्वा वरतोऽभवच्च" इति क्वचित् पाठः ।

३ "त्वमग्ने द्व्यूना, हिरण्यस्तूप आग्नेयम्" इति कात्यायनः । "आग्नेयं यत् त्वम्" (३. १०४.) इति शौनकः

४ "जगती षड्भिः" (३. ४९.) इति पिङ्गलः । "गायत्रैः षड्भिः पादैः 'जगती' नाम च्छन्दो भवति" इति हलायुधः ।

५ "तुवमग्ने" इति "विद्मनापसो अजायन्त" इति च विश्लेषेण केवला जगती ।

६ "तुवमग्ने" इति केवला जगती ।

[॥ ० ॥ अङ्गिरःऽतमः । कविः । देवानाम् । परि । भूषसि । व्रतम् ॥ विऽभुः । विश्वस्मै । भुवनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् । आयवे ॥ २ ॥]

व्यापी च विश्वस्य सुमेधया युतो जडाजडे वेत्ति तथाऽब्धिशायी । कतिप्रकारोऽपि स हि प्रजायै[1] स्वामी गुरुर्नित्यसखा पिता च ॥ १८५ ॥ * ॥

[३–४ भुरिक् त्रिष्टुप्, [2]धैवतः स्वरः]

(३५३) त्वमग्नेप्रथमोमातरिश्वनआविर्भवसुक्रतूयाविवस्वते ॥
अरेजेतांरोदसीहोतृवूर्येसघ्नोर्भारमयजोमहोवसो ॥ ३ ॥

[॥ ० ॥ मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते ॥ अरेजेताम् । रोदसीइति । होतृऽवूर्ये । असघ्नोः । भारम् । अयजः । महः । वसोइति ॥ ३ ॥]

त्वं विष्णो प्रथमो मातरिश्वन [3]आविर्बभूवास्य सुबोधवत्त्वात् । वायुर्विवस्वान् विविधेषु वासाद्शोभेतां[4] श्रीश्च भूः सर्वहोतुः । वरत्वतस्ते रदनाद् रोदसी ते सैका हि दीर्णा द्विविधा बभूव ॥ १८६ ॥ सहन्तेऽमुं नैव केचिद्व्यसघ्नुर्वायुर्विरिञ्चोऽपि महांश्च तस्मै । विश्वाख्यभारं[5] प्रतिदिष्टवांस्त्वं वासाच्च सर्वत्र वसुर्भवानसि[6] ॥ १८७ ॥ * ॥

(३५४) त्वमग्नेमनवेद्यामवाशयःपुरूरवसेसुकृतेसुकृत्तरः ॥
श्वात्रेणयत्पित्रोर्मुच्यसेपर्यात्वापूर्वमनयन्नापरम्पुनः ॥ ४ ॥

---

१ आयवे प्रजायै । "मनुष्याः । नरः । धवाः । जन्तवः । विशः । क्षितयः । कृष्टयः । चर्षणयः । नहुषः । हरयः । मर्याः । मर्त्याः । मर्ताः । व्राताः । तुर्वशाः । द्रुह्यवः । आयवः" (२. ३.) इति मनुष्यनामसु निघण्टुः ।

२ "तुवमग्ने" इति, "होतृवूरिये असघ्नोः" इति च विश्लेषेण केवला जगती । अनन्तरमन्त्रे च "तुवमग्ने" इति, "शुवात्रेण" इति, "तुवा पूर्वमनयन्" इति च विश्लेषेण केवला जगती । तदात्वे निषाद एव स्वरः । न धैवतः ।

३ आविर्भव आविर्बभूव आविर्बभूविथ । युष्मद्युपपदेऽपि प्रथमपुरुषो भवति । तथाहि भागवते प्रयोगः— "त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः" (३. ५. ४९.) इति ।

४ अरेजेतां अशोभेताम् । "रेजृ राजृ दीप्तौ" इति धातुपाठः ।

५ "विश्वस्य भारम्" इति प्र. पाठः ।

६ भवानसि भवानस्ति । युष्मद्युपपदेऽपि प्रथमपुरुष इव भवत्युपपदेऽपि मध्यमपुरुषो भवति । त्वमसीति पूर्वत्रान्वयो वा । तद् यथा—"सदा त्रिनयनो भवान् वहसि चात्रिनेत्रोद्भवम्" इति शिवस्तुतौ ।

[त्वम् । अग्ने । मनवे । द्याम् । अवाशयः । पुरूरवसे । सुऽकृते । सुकृत्ऽतरः ॥
श्वात्रेण । यत् । पित्रोः । मुच्यसे । परि । आ । त्वा । पूर्वम् । अनयन् । आ ।
अपरम् । पुनरिति ॥ ४ ॥]

विशिष्टबोधान्मनवे वायवे त्वं प्रादा[1] दिवं ज्ञानरूपां प्रियां च । यथा तदीयेति तु वाशनं स्याल्लोकस्य सर्वस्य तथैव देव ॥ १८८ ॥ पुरूरवा वायुरेवोरुशब्दादन्यस्मै वा सुकृते सुकृत्तरः । [2]श्वा वै वायुः श्वसनात् त्राणतोऽस्य नित्यं मुक्तः प्रकृतेः पूरुषाच्च । तेनैव त्वामानयन् पूर्वसन्तो नीतं पुनश्चाप्यपरे सुभक्त्या ॥ १८९ ॥ * ॥

[१–६ विराड् जगती[3]]

(३५५) त्वमग्नेवृषभःपुष्टिवर्धनउद्यतस्रुचेभवसिश्रवाय्यः ॥
यआहुतिम्परिवेदावषट्कृतिमेकायुरग्रेविशआविवासमि ॥ ५ ॥[॥ ३२ ॥]

[त्वम् । अग्ने । वृषभः । पुष्टिऽवर्धनः । उद्यतऽस्रुचे । भवसि । श्रवाय्यः ॥
यः । आऽहुतिम् । परि । वेद । वषट्ऽकृतिम् । एकऽआयुः । अग्रे । विशः ।
आऽविवासमि ॥ ५ ॥ ३२ ॥]

श्रोतव्यस्त्वं यजमानेन नित्यं नित्यायुरग्रे जनताः प्रविष्टः[4] । ऐश्वर्याद्याः षड्गुणा नित्यवृत्ता[5] वषट्कारस्यार्थ इत्याह वेदः ॥ १९० ॥ * ॥

(३५६) त्वमग्नेवृजिनवर्तनिन्नरंसक्मन्पिपर्षिविदथेविचर्षणे ॥
यश्शूरसातापरितक्म्येधनेदभ्रेभिश्चित्समृताहंसिभूयसः ॥ ६ ॥

---

१ "प्रादात्" इति क्वचित् पाठः ।

२ छान्दोग्ये शौव उद्गीथे श्वरूपो वायुः प्रसिद्धः । श्वसनाच्च श्वा । अत एव हि मातरिश्वा ।

३ "तुवमग्ने" इति, "श्रवायियः" इति च विश्लेषेण केवला जगती । उत्तरमन्त्रे च "तुवमग्ने" इति, "परितक्मिये" इति च विश्लेषेण ।

४ "जनताप्रविष्टः" इति प्र. पाठः ।

५ "षड्गुणा यत्र वृत्ताः" इति प्र. पाठः ।

[त्वम् । अग्ने । वृजिनऽवर्तनिम् । नरम् । सक्मन् । पिपर्षि । विदथे । विऽचर्षणे ॥
यः । शूरऽसाता । परिऽतक्म्ये । धने । दभ्रेभिः । चित् । समृऽऋता । हंसि ।
भूयसः ॥ ६ ॥]

सद्विद्याख्ये विदथे[1] सम्प्रजाते पापाचारं पुरुषं वा पिपर्षि । सक्मन्[2] गृहे स्वे विविध-प्रजेशो विचर्षणिः शूरसातौ च युद्धे[3] ॥ १९१ ॥ सातिर्लाभे[4] यत् परितक्म्येऽधिगम्ये दभ्रा अपि त्वां शरणं यदि स्म । ऋता गतास्तत्र हि भूयसोऽपि तैर्हंसि शक्त्या सङ्ख्यया वाऽप्रय-त्नात् ॥ १९२ ॥ * ॥

[७–निचृज्जगती[5]]

(३५७) त्वन्तमग्नेअमृतत्वउत्तमेमर्तन्दधासिश्रवसेदिवेदिवे ॥
यस्तातृषाणउभयायजन्मनेमयःकृणोषिप्रयआचसूरये ॥ ७ ॥

[त्वम् । तम् । अग्ने । अमृतऽत्वे । उत्ऽतमे । मर्तम् । दधासि । श्रवसे । दिवेऽदिवे ॥
यः । ततृषाणः । उभयाय । जन्मने । मयः । कृणोषि । प्रयः । आ । च ।
सूरये ॥ ७ ॥]

दिनेदिने तत्स्तुतिं श्रोतुकामस्तं[6] स्तोतारममृतत्वे दधासि । प्रीत्याधिक्यात् ततृषाणो मनुष्य-देवोभयेषां सुखमातनोषि । आ समन्ताज्ज्ञानिने तत्र नित्यं प्रियं मोक्षाख्यं ततृषाणो विशेषात् ॥ १९३ ॥ * ॥

---

१ विदथे यज्ञे । ज्ञानयज्ञे । "यज्ञः । वेनः । अध्वरः मेधः । विदथः" (३. १७.) इति निघण्टुः ।

२ "सद्मन्" इति क्वचित् पाठः ।

३ "संयुगे । सङ्गथे । सङ्गमे । वृत्रतूर्ये । पृक्षे । आणौ । शूरसातौ" (२. १७.) इति सङ्ग्रामनामसु निघण्टुः ।

४ "लाभे परितक्म्ये" इति क्वचित् ।

५ अत्र "तुवन्तमग्ने" इति विश्लेषेण केवला जगती ।

६ "श्रोतुकाम तम्" इति क्वचित् । "श्रोतुकामस्तव" इति च क्वचित् प्र. पाठः ।

[८–त्रिष्टुप् छन्दः,[1] धैवतः स्वरः]

[विराट् त्रिष्टुप्[2]]

(३५८) त्वन्नोअग्नेसनयेधनानांयशसङ्कारुङ्कृणुहिस्तवानः ॥
ऋध्यामकर्मापसानवेनदेवैर्द्यावापृथिवीप्रावतन्नः ॥ ८ ॥

[त्वम् । नः । अग्ने । सनये । धनानाम् । यशसम् । कारुम् । कृणुहि । स्तवानः ॥
ऋध्याम । कर्म । अपसा । नवेन । देवैः । द्यावापृथिवीइति । प्र । अवतम् ।
नः ॥ ८ ॥]

प्रज्ञाधनानां लब्धये नः कृधि त्वं यशस्विनं कारिणं ज्ञानदं च । कर्ताऽऽपरोक्ष्यं यावदुपासनादीन् कारुस्तेन प्रोच्यते तत्त्वदर्शी । संस्तूयमानः कर्मणा नूतनेन समृद्धिं च प्राप्नुमः प्राक्तनस्य ॥ १९४ ॥ * ॥

[९–१५ जगती छन्दः, निषादः स्वरः]

[९–त्रिष्टुप्[3], धैवतः स्वरः]

(३५९) त्वन्नोअग्नेपित्रोरुपस्थआदेवोदेवेष्वनवद्यजागृविः ॥
तनूकृद्बोधिप्रमतिश्चकारवेत्वङ्कल्याणवसुविश्वमोपिषे ॥ ९ ॥

[त्वम् । नः । अग्ने । पित्रोः । उपऽस्थे । आ । देवः । देवेषु । अनवद्य । जागृविः ॥
तनूऽकृत् । बोधि । प्रऽमतिः । च । कारवे । त्वम् । कल्याण । वसु । विश्वम् । आ ।
ऊपिषे ॥ ९ ॥]

त्वं नः पित्रोः प्रकृतेः पूरुषस्य समीपस्थस्तन्नियन्ता सदैव । देवेषु त्वं जागृविर्नित्यवेत्ता तनूकृन्नो बोधय प्राज्ञवर्यः ॥ १९५ ॥ विश्वं वसु प्रार्पयसे च कारवे ॥ * ॥

---

१ "त्रिष्टुबन्त्याऽष्टमीषोडश्यौच" इति कात्यायनः ।

२ "तुवं नो अग्ने" इति, "ऋधियाम" इति च विश्लेषेण केवला त्रिष्टुप् ।

३ इयमृगविश्लेषे चतुश्चत्वारिंशदक्षरेति त्रिष्टुप् भवति । विश्लेषेण च जगत्येव । तथाहि—"तुवं नो अग्ने पितरोः" इति, "देवेषु अनवद्य जागृविः" इति, "तुवं कल्याण" इति च विश्लेषः । तदात्वे तु निषाद एव स्वरः । न धैवतः ।

[१०-भुरिक् त्रिष्टुप्[1], धैवतः स्वरः]

(३६०) त्वमग्नेप्रमतिस्त्वम्पितासिनस्त्वंवयस्कृत्तवजामयोवयम् ॥
सन्त्वारायश्शतिनस्संसहस्रिणस्सुवीरंयन्तिव्रतपामदाभ्य ॥ १० ॥ [॥ ३३ ॥]

[त्वम् । अग्ने । प्रऽमतिः । त्वम् । पिता । असि । नः । त्वम् । वयःऽकृत् । तव । जामयः । वयम् ॥ सम् । त्वा । रायः । शतिनः । सम् । सहस्रिणः । सुऽवीरम् । यन्ति । व्रतऽपाम् । अदाभ्य ॥ १० ॥ ३३ ॥]

आयुष्करो भ्रातरस्ते वयं च । देहे त्वेकस्मिन् गर्भवद् वासतश्च भ्राताऽस्य जीवः परमस्य नित्यम् ॥ १९६ ॥ * ॥

[११-निचृज्जगती[2]]

(३६१) त्वामग्नेप्रथममायुमायवेदेवाअकृण्वन्नहुषस्यविश्पतिम् ॥
इळामकृण्वन्मनुषस्यशासनीम्पितुर्यत्पुत्रोममकस्यजायते ॥ ११ ॥

[त्वाम् । अग्ने । प्रथमम् । आयुम् । आयवे । देवाः । अकृण्वन् । नहुषस्य । विश्पतिम् ॥ इळाम् । अकृण्वन् । मनुषस्य । शासनीम् । पितुः । यत् । पुत्रः । ममकस्य । जायते ॥ ११ ॥]

आयो राज्ञो हृदये प्रेरकत्वादायोरायुर्नहुषस्याधिपश्च । चक्रुर्देवा देहसृष्ट्यैव तस्य यन्नामान्तर्यामिणो जीवगं च । नामार्थभाग् वासुदेवो हि शक्त्या तेन ह्यायुः प्रथमोऽसाविहोक्तः ॥ १९७ ॥ मनुर्नाम्ना मनुषस्तस्य चेळा पुत्री नामास्या अपि विष्णोः सदैव । इळेड्यत्वादुपजीव्यत्वतश्च स एवाऽयुरयनाज्ज्ञानतश्च ॥ १९८ ॥ तच्छास्यत्वाच्छासनी मानवीळा तच्छासकत्वाच्छासनी वासुदेवः । ममत्वकर्तुर्हि पितुः स पुत्रः स्वातन्त्र्यं च ममता नान्यदस्ति ॥ १९९ ॥ * ॥

---

१ "तुवमग्ने" इति, "तुवं वयस्कृत्" इति, "व्रतपामदाभिय" इति च विश्लेषेण केवला जगती । तदात्वे तु निषाद एव स्वरः । न धैवतः ।

२ "तुवामग्ने" इति विश्लेषेण केवला जगती ।

[१२–त्रिष्टुप् छन्दः[1], धैवतः स्वरः]

(३६२) त्वन्नोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवन्द्य ॥
त्रातातोकस्यतनयेगवामस्यनिमेषंरक्षमाणस्तवव्रते ॥ १२ ॥

[त्वम् । नः । अग्ने । तव । देव । पायुऽभिः । मघोनः । रक्ष । तन्वः । च । वन्द्य ॥
त्राता । तोकस्य । तनये । गवाम् । असि । अनिऽमेषम् । रक्षमाणः ।
तव । व्रते ॥ १२ ॥]

त्वं नो मघोनो यजमानस्य तन्वस्तवैव रक्षाशक्तिभी रक्ष देव । चशब्देन ज्ञानभक्त्यादिकं च सदाऽस्माकं यजमानस्य चाद्धा ॥ २०० ॥ त्राता तोकस्य पुत्रस्य च त्वं सन्ततित्वात् तनयस्यास्य सूनोः । गवां च त्वं रक्षिता ज्ञानसौख्यवाचां वाऽद्धैवानिमेषं[2] सुरांश्च ॥ २०१ ॥ संरक्षमाणस्त्वद्व्रते तैः प्रवृत्ते ॥ * ॥

[१३–भुरिक् त्रिष्टुप्[3], धैवतः स्वरः]

(३६३) त्वमग्नेयज्यवेपायुरन्तरोनिषङ्गायचतुरक्षइद्ध्यसे ॥
योरातहव्योवृकायधायसेकीरेश्चिन्मन्त्रम्मनसावनोषितम् ॥ १३ ॥

[त्वम् । अग्ने । यज्यवे । पायुः । अन्तरः । अनिषङ्गाय । चतुःऽअक्षः । इद्ध्यसे ॥
यः । रातऽहव्यः । अवृकाय । धायसे । कीरेः । चित् । मन्त्रम् । मनसा । वनोषि ।
तम् ॥ १३ ॥]

---

१ "तुवं नो अग्ने" इति, "तनुवश्च वन्दिय" इति, "गवामसि अनिमेषम्" इति च विश्लेषेण केवला जगती । तदात्वे निषाद एव स्वरः । न धैवतः ।

२ "वाऽद्धैवानिमेषान्" इति प्र. पाठः । "चाद्धैवानिमेषम्" इति क्वचित् ।

३ "तुवमग्ने" इति, "अन्तरो अनिषङ्गाय" इति, "रातहव्यो अवृकाय" इति च विश्लेषेण केवला जगती । तदात्वे निषाद एव स्वरः । न धैवतः ।

वज्योश्च त्वं पालको ह्यन्तरश्च[1]। नितरां यः सङ्गृहीतोऽनिषङ्गस्तस्मै भक्त्या दीप्यसे ज्ञानादृष्ट्या ॥ २०२ ॥ द्विशीर्षत्वाच्चतुरक्षोऽधियज्ञो "द्वे शीर्षे" इति वागुत्तरत्र[2]। यो दत्तहव्यस्तेऽतिसौम्याय पीत्यै [3]कर्तुर्मन्त्रं सम्भजसे हि तस्य ॥ २०३ ॥ * ॥

[१४-निचृज्जगती[4]]

(३६४) त्वमग्नउरुशंसायवाघतेस्पार्हंयद्रेक्णःपरमंवनोषितत् ।
आध्रस्यचित्प्रमतिरुच्यसेपिताप्रपाकंशास्सिप्रदिशोविदुष्टरः ॥ १४ ॥

[त्वम् । अग्ने । उरुऽशंसाय । वाघते । स्पार्हम् । यत् । रेक्णः । परमम् । वनोषि । तत् ॥ आध्रस्य । चित् । प्रऽमतिः । उच्यसे । पिता । प्र । पाकम् । शास्सि । प्र । दिशः । विदुःऽतरः ॥ १४ ॥]

महास्तोत्राय वदते[5] स्पार्हमिष्टं रेक्णः सुखं[6] परमं तद् ददासि । आ समन्ताद् धारकस्यापि वायोः प्रज्ञानदः प्रोच्यसे त्वं पिता च । प्रशास्सि त्वं परिपक्वाधिकारं [7]प्रदेशकत्वादखिलं[8] सुवेत्ता ॥ २०४ ॥ * ॥

---

१ "पालकोऽभ्यन्तरश्च" इति क्वचित् ।

२ उत्तरत्र चतुर्थे मण्डले अन्तिमसूक्ते । तथाहि श्रूयते—"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश" (ऋ. ४. ५८. ३.) इति । अग्निर्हि एतत्सूक्तदेवता । एतेन "चतुरक्षः दिक्चतुष्टयेऽपि ज्वालायुक्तः" इति वदन् सायणः परास्तः । "सप्त हस्तासः" इति ज्वालानां पृथगेव निर्देशात् ।

३ कीरेः कर्तुः । कारुः कीरिरिति चैकोऽर्थः । "कारुः । नदः । स्तामुः । कीरिः" (३. १६.) इति निघण्टुः ।

४ "तुवमग्ने" इति विश्लेषेण केवला जगती ।

५ वाघते वदते । अयं "भरताः । कुरवः । वाघतः" (३. १८.) इति ऋत्विङ्नामसु पठितः । योगसाम्यादत्र यजमानार्थः ।

६ "मघम् । रेक्णः । रिक्थम् । वेदः" (२. १०.) इति धननामसु निघण्टुः । सुखमेव च मुख्यं धनम् । अत एव रत्नमिति च धननामसु पठितं रतिपरतया आचार्या व्याचक्षते रतिधातम इत्यादिना ।

७ अत्र भाष्यपक्षे "प्रऽदिशः" इत्येकं पदमिति भाति ।

८ "-दखिलं त्वं सुवेत्ता" इति प्र. पाठः ।

[१५–विराड् जगती[1]]

(३६५) त्वमग्नेप्रयतदक्षिणन्नरंवर्मेवस्यूतम्परिपासिविश्वतः ॥

स्वादुक्षद्मायोवसतौस्योनकृज्जीवयाजंयजतेसोपमादिवः ॥ १५ ॥[॥ ३४ ॥]

[त्वम् । अग्ने । प्रयतऽदक्षिणम् । नरम् । वर्मऽइव । स्यूतम् । परि । पासि । विश्वतः ॥ स्वादुऽक्षद्मा । यः । वसतौ । स्योनऽकृत् । जीवऽयाजम् । यजते । सः । उपऽमा । दिवः ॥ १५ ॥ ३४ ॥]

**धृतं वर्मेव परिपासि नित्यं प्रयत्नाद् यो दक्षिणादो मखेषु । स्वादुक्षद्मा सुखगेहो[2] गृहे च स्योनं सुखं[3] यः परेषां करोति ॥ २०५ ॥ यावज्जीवं यजने सुप्रतिज्ञो भूत्वा च यो यजते तस्य सैव । द्युप्रातिभावे द्युपमा देह एव क्षमेति वा वसतिर्ज्ञानमार्गे ॥ २०६ ॥ * ॥**

[१६–त्रिष्टुप् छन्दः[4], धैवतः स्वरः]
[१६–भुरिक् पङ्क्तिः, [5]पञ्चमः स्वरः]

(३६६) इमामग्नेशरणिम्मीमृषोनइममध्वानंयमगामदूरात् ॥

आपिःपिताप्रमतिस्सोम्यानाम्भृमिरस्यृषिकृन्मर्त्यानाम् ॥ १६ ॥

[इमाम् । अग्ने । शरणिम् । मीमृषः । नः । इमम् । अध्वानम् । यम् । अगाम । दूरात् ॥ आपिः । पिता । प्रऽमतिः । सोम्यानाम् । भृमिः । असि । ऋषिऽकृत् । मर्त्यानाम् ॥ १६ ॥]

---

१ "तुवमग्ने" इति, "सुवादुक्षद्मा" इति च विश्लेषेण केवला जगती ।

२ स्वादु सुखकरं क्षद्म सद्म । यद्यपि क्षद्मेति अन्ननामसु पठ्यते । तथाहि–"क्षु । धासिः । इरा । इळा । इषम् । ऊर्क् । रसः । स्वधा । अर्कः । क्षद्म" (२. ७.) इति । तथाऽप्यस्य गृहवाचित्वं न निषिद्ध्यते । अन्नवाचित्वं केवलमभ्यनुज्ञायते । अत एव त्रिंशे सूक्ते त्रयोदश्यामृचि "क्षुमन्तः स्थितिसंयुताः" इत्येव व्याख्यातम् । नान्नसंयुता इति ।

३ "स्योनम् । सुम्नम् । शेवम् । शिवम्" (२. ६.) इति सुखनामसु निघण्टुः ।

४ "त्रिष्टुबन्त्याऽष्टमीषोडश्यौ च" इति कात्यायनवचनमुदाहृतं हि पुरैव ।

५ "सोमियानां भृमिरसि ऋषिकृन्मर्तियानाम्" इति विश्लेषेण त्रिष्टुबेवेयं भवति । तदात्वे च धैवतः स्वरः । न पञ्चमः ।

या मे भवच्छरणप्रातिरेषा मर्षस्व तामल्प इति क्रुधो मा। त्वत्प्राप्त्यर्थं दूरमगां च यत् तत् प्राप्यः पिता ज्ञानदो देवतानाम्। त्वं भ्रामको मानुषाणामृषीणां कर्ता तथा ज्ञानदानेन देव ॥ २०७ ॥ * ॥

[१७-जगती च्छन्दः, निषादः स्वरः]
[१७-विराड् जगती[1]]

(३६७) मनुष्वदग्नेअङ्गिरस्वदङ्गिरोययातिवत्सदनेपूर्ववच्छुचे ॥
अच्छयाह्यावहादैव्यञ्जनमासादयबर्हिषियक्षिचप्रियम् ॥ १७ ॥

[मनुष्वत्। अग्ने। अङ्गिरस्वत्। अङ्गिरः। ययातिऽवत्। सदने। पूर्वऽवत्। शुचे ॥
अच्छ। याहि। आ। वह। दैव्यम्। जनम्। आ। सादय। बर्हिषि। यक्षि।
च। प्रियम् ॥ १७ ॥]

यथा मनुश्चाङ्गिरा वा ययातिर्गृहे प्राप्तास्त्वां[2] तथा मद्गृहं च। अभ्यायाह्यावह देवसङ्गमासादय बर्हिषि यक्षि च प्रियम् ॥ २०८ ॥ यष्टा त्वमेवाखिलजीवगो यत् ॥ * ॥

[१८-त्रिष्टुप् छन्दः, धैवतः स्वरः,]
[१८-निचृत् त्रिष्टुप्[3]]

(३६८) एतेनाग्नेब्रह्मणावावृधस्वशक्तीवायत्तेचकृमाविदावा ॥
उतप्रणेष्यभिवस्योअस्मान्त्सन्नःसृजसुमत्यावाजवत्या ॥ १८ ॥ [॥ ३५ ॥]

[एतेन। अग्ने। ब्रह्मणा। वावृधस्व। शक्ती। वा। यत्। ते। चकृम। विदा। वा ॥
उत। प्र। नेषि। अभि। वस्यः। अस्मान्। सम्। नः। सृज। सुऽमत्या।
वाजऽवत्या ॥ १८ ॥ ३५ ॥]

[इत्येकत्रिंशं सूक्तम्]

---

१ "अच्छ याहि आ वहा दैवियं जनम्" इति विश्लेषेण केवला जगती।

२ "प्राप्तस्त्वाम्" इति प्र. पाठः।

३ "प्रणोषि अभिवस्यो अस्मान्" इति विश्लेषेण केवला त्रिष्टुप्।

स्पष्टत्वं च प्रामुहि वेदवाचा । शक्त्या यत् ते चकृम ज्ञानतो वा वस्यो भद्रं प्रणयास्माम् सुमत्या । भोगेतया संसृज नित्यमेव यस्माच्छक्त्या चकृम त्वत्सुकर्म ॥ २०९ ॥ * ॥

—३२—

[इन्द्रस्य नु पञ्चदश, हिरण्यस्तूप आङ्गिरसः, त्रिष्टुप्; इन्द्रः[1], धैवतः]
[१–विराट् त्रिष्टुप्[2]]

(३६९) इन्द्रस्यनुवीर्याणिप्रवोचंयानिचकारप्रथमानिवज्री ॥
अहन्नहिमन्वपस्ततर्दप्रवक्षणाअभिनत्पर्वतानाम् ॥ १ ॥

[इन्द्रस्य । नु । वीर्याणि । प्र । वोचम् । यानि । चकार । प्रथमानि । वज्री ॥
अहन् । अहिम् । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानाम् ॥ १ ॥]

इन्द्रस्य वा वासुदेवस्य वीर्याण्याचक्षेयं[3] यानि मुख्यानि चक्रे । अहिं दैत्यं संशयं वा जघान जलानुसारेण चखान[4] मार्गम् ॥ २१० ॥ ततर्द विघ्नान् कर्मणां वाऽनुसाराद् वहनात् पक्षा वक्षणा दुर्वचांसि । जीवानां चेद् वक्षणा जन्मपर्ववतां बिभेदैव सुयुक्तिभिस्ताः ॥ २११ ॥ * ॥

[२–निचृत् त्रिष्टुप्[5]]

(३७०) अहन्नहिम्पर्वतेशिश्रियाणन्त्वष्टास्मैवज्रंस्वर्यन्ततक्ष ॥
वाश्राइवधेनवस्स्यन्दमानाअञ्जस्समुद्रमवजग्मुरापः ॥ २ ॥

[अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष ॥
वाश्राःऽइव । धेनवः । स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥ २ ॥]

---

१ शौनकोऽप्याह—"ऐन्द्रे च" (३. १०४.) इति । इदं सूक्तमुत्तरं चेति द्वे ऐन्द्रे इति । तथाचाऽहत्य त्रिंशन्मन्त्राः ऐन्द्राः ।

२ "वीरियाणि प्र वोचम्" इति, "अनुअपस्ततर्द" इति च विश्लेषेण केवला त्रिष्टुप् ।

३ "वीर्याण्याचक्षेऽहम्" इति प्र. पाठः ।

४ "चकार" इति क्वचित् ।

५ "त्वष्टाअस्मै" इति विश्लेषेण केवला त्रिष्टुप् ।

त्वष्टा त्वेतज्ज्ञानवज्रं विरिञ्चिस्ततक्षैतद्विषयं यत् त्विडात्मा[1] । स्वर्यं वज्रं निशितं शब्दजं वा शिशुवत्सा गाव[2] इवैतदीरिताः । अञ्जः समुद्रं जग्मुरापः क्रिया वा समुद्रिक्तं दैवमेनं व्रजन्ति ॥ २१२ ॥ * ॥

[३–विराट् त्रिष्टुप्[3]]

(३७१) वृषायमाणोवृणीतसोमन्त्रिकद्रुकेष्वपिबत्सुतस्य ॥
आसायकम्मघवादत्तवज्रमहन्नेनम्प्रथमजामहीनाम् ॥ ३ ॥

[वृषऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ॥ आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ ३ ॥]

वव्रे सोमं तृषितो यद्वदेव वृषाऽपिबत् सवनेषु त्रिषु स्म । सवनानां कद्रुकत्वं द्रुतं यत् कमत्र सोमो ध्यानयोगे मनो वा । सायङ्करं लयकृज्ज्ञानमेव समादद्वे संशयमीशवद् वा ॥२१३॥ * ॥

[४–निचृत् त्रिष्टुप्[4]]

(३७२) यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाःप्रोतमायाः ॥
आत्सूर्यञ्जनयन्द्यामुषासन्तादीत्नाशत्रुन्नकिलाविवित्से ॥ ४ ॥

[यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत । मायाः ॥ आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥ ४ ॥]

---

१ "–विषयं त्विडात्मा" इति क्वचित् ।

२ "वाश्रा स्रुतस्तना धेनुः" इत्यभिधानम् ।

३ "वृषायमाणो अवृणीत" इति, "त्रिकद्रुकेषु अपिबत्" इति च विश्लेषेण केवला त्रिष्टुप् ।

४ "यदिन्द्र अहन्" इति विश्लेषेण केवला त्रिष्टुप् ।

अहन्नेनं प्रथमं मायिनां च व्यनाशयो व्याजरूपाश्च मायाः । ततः सूर्यद्युदिनादेश्च कर्ता त्वमेव तावद्बलतो न शत्रुम् । लभसे मायावादिनां वाऽथ माया व्यनाशयः स्वजनैस्तज्जयेन ॥२१४॥*॥

[५–विराट् त्रिष्टुप्[1]]

(३७३) अहन्वृत्रंवृत्रतरंव्यंसमिन्द्रोवज्रेणमहतावधेन ॥
स्कन्धांसीवकुलिशेनाविवृक्णाहिश्शयतउपपृक्पृथिव्याः ॥ ५ ॥ [॥ ३६ ॥]

[अहन् । वृत्रम् । वृत्रऽतरम् । विऽअंसम् । इन्द्रः । वज्रेण । महता । वधेन ॥
स्कन्धांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ॥
॥ ५ ॥ ३६ ॥]

अहन् वृत्रं व्यंसमतोऽधिकं च तमोमिथ्याप्रत्ययौ व्यंसनाद् वा । स्कन्धास्तरोर्यद्वदथो विवृक्णा अहिश्च वज्रेण कुलस्य शकृतेः । विद्या नाम्ना कुलिशो बुद्धिरेव पृथिव्याख्या तद्गतः संशयो यत्[2] ॥ २१५ ॥ अतः पृथिव्या उपपृक् ॥ * ॥

(३७४) अयोद्धेवदुर्मदआहिजुह्वेमहावीरन्तुविबाधमृजीषम् ॥
नातारीदस्यसमृतिंवधानांसंरुजानाःपिपिषइन्द्रशत्रुः ॥ ६ ॥

[अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् ।
ऋजीषम् ॥ न । अतारीत् । अस्य । सम्ऽऋतिम् । वधानाम् । सम् । रुजानाः ।
पिपिषे । इन्द्रऽशत्रुः ॥ ६ ॥]

यस्य योद्धा नायोद्धाऽसौ तद्वदेवेन्द्रशत्रुः । दर्पोद्रिक्तो ह्याह्वयामास शक्रं विष्णुं वाऽज्ञानं वीरतमं रिपूणाम् ॥ २१६ ॥ महोद्यानां बाधकं दार्ढ्यहेतोरृजीषाख्यं नास्य विष्णोर्वधानाम् । सम्प्राप्तिमज्ञानमथापि वृत्रः शक्रस्यातारीत्[3] सम्पिपेष[4] प्रजाश्च ॥ २१७ ॥ रुजा युक्ता मानु-

---

१ "वृत्रतरं वियंसम्" इति, "विव्रृक्णा अहिः" इति च विश्लेषेण केवला त्रिष्टुप् ।

२ "संशयस्तद्गतो यत्" इति प्र. पाठः । ३ "शक्रस्य तारीत्" इति क्वचित् ।

४ "सम्पिपिषे" इति प्र. पाठः ।

पीवां स्तुतिस्था इन्द्रः शत्रुर्यस्य स हीन्द्रशत्रुः । पुंसोः पूर्वस्मिन् स्वरितान्ते समासो बहुव्रीहिर्हीति सूत्रं पुराणम्[1] ॥ २१८ ॥ * ॥

[७–१० निचृत् त्रिष्टुप्[2]]

(३७५) अपादहस्तोअपृतन्यदिन्द्रमास्यवज्रमधिसानौजघान ॥
वृष्णोवध्रिःप्रतिमानम्बुभूषन्पुरुत्रावृत्रोअशयद्व्यस्तः ॥ ७ ॥

[अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि । सानौ । जघान ॥ वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥]

सञ्छिन्नपाद्बाहुरपीन्द्रमेव युयोध वज्रं व्यसृजत् स तस्य । गिरेः सानुप्रतिमे कण्ठदेशे तर्कागमाभ्यां रहितं तमो वा ॥ २१९ ॥ संयुद्ध्यमानं मानवज्रेण विष्णुर्जघान वध्रिर्वधयोग्योऽथ नीचः । ईशस्य शत्रुर्भवितुं स इच्छन् व्यस्तोऽशयद् बहुधेशेन तेन ॥ २२० ॥ * ॥

(३७६) [3]नदन्नभिन्नममुयाशयानम्मनोरुहाणाअतियन्त्यापः ॥
याश्चिद्वृत्रोमहिनापर्यतिष्ठत्तासामहिःपत्सुतःशीर्बभूव ॥ ८ ॥

[नदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः । अति । यन्ति । आपः ॥ याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥ ८ ॥]

---

१ "पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमेष्यति । महाव्याकरणे सूत्रमिति स्वरविनिर्णये" (१. १. १६७) इत्यनुव्याख्यानेऽप्युक्तम् । नयचन्द्रिकाकृदप्याह—"पूर्वान्तस्वरिते पुंसोर्बहुव्रीहिरिति सूत्रम् । पुंसोर्विवक्षायां पूर्वपदान्तस्य स्वरितत्वे बहुव्रीहित्वं स्यात् । अश्वपते, गोपते इत्यादावश्वपूर्वान्तस्वरितत्वाद् बहुव्रीहित्वं स्यात् । तद्व्यवच्छेदाय पुंसोरित्युक्तम्" इति । अस्य नियमस्य सापवादत्वान्न विरोध इत्यादि स्वरप्रक्रियातोऽवगन्तव्यम् ।

२ अशयद् वियस्तः" इति विश्लेषेण केवला त्रिष्टुप् ।

३ "अति यन्ति आपः" इति विश्लेषेण केवला त्रिष्टुप् ।

अपां रोद्धारममुया स्वमात्रा सहैव शक्रेण हतं शयानम् । भिन्नं नवं वव्रुरितीव चाऽपो मनः-पूर्वं चाऽरुहाणाः प्रयान्ति ॥ २२१ ॥ वृत्रो याः पूर्वं स्वमहिम्ना परीत्य पुराऽतिष्ठत् तत्सुतोऽहिश्च तासाम् । पत्सुतःशीः पादतोऽनन्तरं तु शेताऽभवत् तद्वदेवाभिरुन्धन् । तमःपुत्रः संशयो वाऽभिरुन्धन् शुभान्यास्ते निहतः सोऽपि तेन ॥ २२२ ॥ * ॥

(३७७) [1]नीचावयाअभवद्वृत्रपुत्रेन्द्रोअस्याअववर्धर्जभार ॥

उत्तरासूरधरःपुत्रआसीद्दानुश्शयेसहवत्सानधेनुः ॥ ९ ॥

[नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इन्द्रः । अस्याः । अव । वधः । जभार ॥ उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये । सहऽवत्सा । न । धेनुः ॥ ९ ॥]

नीचस्थाने बन्धनं याऽपि चापां करोति दानुर्वृत्रमाता दनुः सा । वृत्रो ह्यभूद् दनुजः कश्य-पाच्च पापात्माऽसौ वैष्णवस्त्वष्टृजातः ॥ २२३ ॥ वृत्रः पुत्रोऽस्या इति सा वृत्रपुत्रा वधं तस्या अहरत्[2] पूर्वमिन्द्रः । प्रकृतिर्वा वृत्रमाता तमो हि तस्या अभूत् तां जघानेशिता वा । प्राति-स्विका[3] प्रकृतिर्यत् तमश्च दोषाश्चान्ये पुंस्वतो युक्तमेतत् ॥ २२४ ॥ सुतावनार्थमुपरिस्था बभूव सूरस्य[4] माता तां निहत्यामुमेव । जघानेन्द्रः कारणस्यैव[5] नाशात् कार्योत्थानं वारयामास विष्णुः ॥ २२५ ॥ स्यादेव पूर्वं कार्यनाशो ह्यथापि निश्शेषनाशः कारणस्यैव नाशात् । एवं भक्ताननुजग्राह देवो नारायणः पारयन् संसृतेश्च ॥ २२६ ॥ उत्तरत्वं प्रकृतेः शक्तितः स्यात् ॥*॥

(३७८) [6]अतिष्ठन्तीनामनिवेशनानाङ्काष्ठानाम्मध्येनिहितंशरीरम् ॥

वृत्रस्यनिण्यंविचरन्त्यापोदीर्घन्तमआशयदिन्द्रशत्रुः ॥ १० ॥ [॥ ३७ ॥]

[अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् ॥

---

१ "वृत्रपुत्रा इन्द्रो–" इति विश्लेषेण केवला त्रिष्टुप् ।

२ "आहरत्" इति क्वचित् ।

३ "प्रातिस्त्रिकी" इति प्र. पाठः ।

४ "सुतस्य माता" इति क्वचित् ।

५ "कारणस्यापि" इति प्र. पाठः ।

६ "विचरन्ति आपः" इति विश्लेषेण केवला त्रिष्टुप् ।

वृत्रस्य । निण्यम् । वि । चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रऽशत्रुः ॥ १० ॥ ३७ ॥]

अनन्तत्वान्नैव तिष्ठन्ति काष्ठाः। अतस्तासां न गृहं किञ्चिदस्ति निण्यं सुखेनैव चरन्ति चाऽपः। दीर्घं तमो वृत्रसञ्ज्ञं तमो वा दीर्घमन्धं प्राप वृत्रः स एव ॥ २२७ ॥ * ॥

(३७९) दासपत्नीरहिगोपाअतिष्ठन्निरुद्धाआपःपणिनेवगावः ॥
अपाम्बिलमपिहितंयदासीद्वृत्रञ्जघन्वाँअपतद्ववार ॥ ११ ॥

[दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः ॥ अपाम् । बिलम् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥ ११ ॥]

दासस्य विष्णोर्वरुणस्य पत्न्यो निरुद्धा आसन्नहिना यद्वदेव। गावो [1]वलेनेन्द्रयज्ञे सुक्लृता वृत्रं हत्वा तमहिं चाऽशु शक्रः। उद्घाटयामास बिलं तदाऽपां शुभद्वारं भगवान् वा तमो घ्नन् ॥ २२८ ॥ * ॥

[१२–१३ निचृत् त्रिष्टुप्[2]]

(३८०) अश्व्योवारोअभवस्तदिन्द्रसृकेयत्त्वाप्रत्यहन्देवएकः ॥
अजयोगाअजयश्शूरसोममवासृजस्सर्तवेसप्तसिन्धून् ॥ १२ ॥

[अश्व्यः । वारः । अभवः । तत् । इन्द्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः ॥ अजयः । गाः । अजयः । शूर । सोमम् । अव । असृजः । सर्तवे । सप्त । सिन्धून् ॥ १२ ॥]

---

१ "व्रलेनेन्द्र–" इति प्र. पाठः।

२ द्वादश्यामृचि "अश्वियो वारो–" इति विश्लेषेण, त्रयोदश्यां च "अहिश्च उतापरीभ्यो–" इति विश्लेषेण केवला त्रिष्टुप्।

सृके युद्धे प्रत्यहंस्त्वां यदि स्म देवः प्रधानोऽपि तदश्ववारः[1] । वालीव[2] त्वं ननु देवस्तदानीं प्रतिहन्ता ते नैव[3] कश्चिद्धि तस्मात् । अजयो बलाद्[4] गा अजयो हिरण्यं सोमं गन्तुममुचः सप्त सिन्धून् ॥ २२९ ॥ * ॥

(३८१) नास्मैविद्युन्नतन्यतुस्सिषेधनयाम्मिहमकिरद्धादुनिञ्च ॥
इन्द्रश्चयद्युयुधातेअहिश्चोतापरीभ्योमघवाविजिग्ये ॥ १३ ॥

[न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । याम् । मिहम् । अकिरत् । ह्रादुनिम् । च ॥ इन्द्रः । च । यत् । युयुधातेइति । अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥ १३ ॥]

अशनिं यां विद्युतं यां मिहं च नाम्ना हेतिं वैद्युपमां सुतीक्ष्णाम्[5] । अशनिमेदं ह्रादुनिनामधेयं त्वामुद्दिश्यैवाकिरत् सोऽहिरुग्रः । त्वां प्रत्येतन्नैव सिद्धिं चकार पश्चात्काले[6] त्वजयस्त्वं तमेव[7] ॥ २३० ॥ * ॥

(३८२) अहेर्यातारङ्कमपश्यइन्द्रहृदियत्तेजघ्नुषोभीरगच्छत् ॥
नवचयन्नवतिश्चस्रवन्तीश्श्येनोनभीतोअतरोरजांसि ॥ १४ ॥

[अहेः । यातारम् । कम् । अपश्यः । इन्द्र । हृदि । यत् । ते । जघ्नुषः । भीः ।

---

१ "तदाऽश्ववारः" इति क्वचित् ।

२ बालीव त्वम्" इति क्वचित् पठ्यते । मृग्योऽर्थः । "बलीनं त्वां ननु" इति एकस्मिन् कोशे पठ्यते । यस्मात् प्रधानस्यापि देवस्याश्ववारः तेनैव हेतुना बलिश्रेष्ठं त्वां ननु देवः प्रतिहन्ता इति व्याख्येयम् । एतत्पक्षे 'तेनैव' इत्येकं पदम् । तस्मादेव च गा अजय इत्युरत्र सम्बध्यते । ततश्च न पौनरुक्त्यम् ।

३ "प्रतिहन्ता नैव" इति क्वचित् ।

४ "अजयोऽचलाद्" इति क्वचित् ।

५ "सुतीक्ष्णम्" इति क्वचित् प्र. पाठः ।

६ "पश्चात्कालेऽवजयस्त्वम्" इति क्वचित् ।

७ "त्वजयस्तं त्वमेव" इति च क्वचित् ।

अगच्छत् ॥ नव । च । यत् । नवतिम् । च । स्रवन्तीः । श्येनः । न । भीतः ।
अतरः । रजांसि ॥ १४ ॥]

अहेर्योद्धारं कमपश्य इन्द्र यज्जघ्नुषस्तेऽपि[1] भयं जगाम । ज्ञानानि मिथ्याबोधतोऽस्सन्मनश्च शब्दादिकादमुचः सप्त सिन्धून् ॥ २३१ ॥ महत्तत्त्वादीन् विपरीता मतिस्तु विद्युच्छब्दास्तन्यतुर्येक्तृशक्तिः । मिहेत्युक्ता ह्लादुनिर्हृतिश्च प्रतिवक्तॄणामनुकूले परेशे[2] ॥ २३२ ॥ न साधयन्ति स्म तमस्समुत्था जयत्येनं संशयं वासुदेवः । स्वभक्तार्थे तद्धृदिस्थः क एव त्वदन्योऽहेरभिगन्ता भवेत । तवैव यस्मात् संशयं जघ्नुषस्तु त्वदीयानां भयमञ्जो व्यपैति ॥ २३३ ॥ शतमेकोनमतरस्त्वं नदीनामर्हिं दैत्यं घ्नन् यथाऽऽकाशदेशान् । भीतः श्येनो [3]ह्यभिगच्छेत् तथैव नानानदीवारकत्वात्तु[4] तस्य ॥ २३४ ॥ ईशो देवानां तावतां तावतीश्च सृत्यापगास्तारयामास यद्वत् । भीतः श्येनस्तरतीत्थं तथैषां कृत्वोपमां तारयामास देवः । स्वातन्त्र्यमेदे करणे[5] चोक्त एव व्यत्यास इत्यनवद्यं तदेतत् ॥ २३५ ॥ [6]वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः । ब्रह्मा ब्रह्माण ऋभवश्चैव रुद्रा ऊनं शतं देवतासंहितोक्तम् ॥ २३६ ॥ * ॥

[१५– निचृत् त्रिष्टुप्[7]]

(३८३) इन्द्रोयातोवसितस्यराजाशमस्यचशृङ्गिणोवज्रबाहुः ॥
सेदुराजाक्षयतिचर्षणीनामराम्ननेमिःपरिताबभूव ॥ १५ ॥ [॥ ३८ ॥]

---

१ "यं जघ्नुषस्तेऽपि" इति क्वचित् ।

२ "रमेशे" इति प्र. पाठः । ३ "ह्यतिगच्छेत्" इति प्र. पाठः ।

४ "–धारकत्वातु" इति क्वचित् ।

५ "स्वातन्त्र्ये भेदकरणे" इति प्र. पाठः । "व्यत्ययो भेदस्वातन्त्र्यकरणेषु" इति सूत्रं महाव्याकरणे ।

६ वसवः (८), विष्णुवर्जमादित्याः (११), प्रधानसहिता मरुतः (५०), अश्विनौ (२), बृहस्पतिः (१), अनिरुद्धः (१), शेषः (१), गरुडः (१), रुद्राः (११), ऋभवः (३), ब्रह्माणः (प्रजापतयः) (९), ब्रह्मा (१)– एवमाहृत्य एकोनं शतं देवतानां (९९) भवति ।

७ "यातो अवसितस्य" इति विश्लेषेण केवला त्रिष्टुप् ।

[इन्द्रः । यातः । अवऽसितस्य । राजा । शमस्य । च । शृङ्गिणः । वज्रऽबाहुः ॥ सः । इत् । ऊँइति । राजा । क्षयति । चर्षणीनाम् । अरान् । न । नेमिः । परि । ता । बभूव ॥ १५ ॥ ३८ ॥]

[इति द्वात्रिंशं सूक्तम्]

॥ इति श्रीमदृग्वेदे प्रथमाष्टके द्वितीयोऽध्यायः ॥

स एवेन्द्रो भगवांस्तत्प्रसादात् प्राप्तो भक्तैः पर्यवसानगन्तुः । मुक्तस्य [1]राजाऽथापि शमस्य मुक्तेर्ज्ञानं शृङ्गं तद्वतश्चैव नित्यम् । स एव राजा [2]क्षयति प्रजानां भूतान्यराणीव च पर्यभूत् सः ॥ २३७ ॥ * ॥ * ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादकृते
श्रीमदृग्भाष्ये
द्वितीयोऽध्यायः

---

१ "राजाऽपि" इति प्र. पाठः ।

२ क्षयति ईश्वरो भवति । "इरज्यति । पत्यते । क्षयति । राजति । इति चत्वारि ऐश्वर्यनामानि" (२. २१.) इति हि निघण्टुः ।

—३३—

[एतायाम पञ्चदश, हिरण्यस्तूप आङ्गिरसः, त्रिष्टुप्, इन्द्रः, धैवतः।]
[१-२ निचृत् त्रिष्टुप्[1]]

(३८४) ॐ ॥ एतायामोपगव्यन्तइन्द्रमस्माकंसुप्रमतिंवावृधाति ॥
अनामृणःकुविदादस्यरायोगवाङ्केतम्परमावर्जतेनः ॥ १ ॥

[आ । इत । अयाम । उप । गव्यन्तः । इन्द्रम् । अस्माकम् । सु । प्रऽमतिम् । वावृधाति ॥ अनामृणः । कुवित् । आत् । अस्य । रायः । गवाम् । केतम् । परम् । आऽवर्जते । नः ॥ १ ॥]

ॐ ॥ ये सखायस्त्वरिता एत देवा उपायाम[2] पशुवत् तद्वशस्थाः । गव्यन्त उक्ता अतिनिश्चितेऽर्थेऽभूते शब्दश्चेत्याह[3] सूत्रं परेशः ॥ १ ॥ प्रकृष्टज्ञानं [4]वर्द्धयत्येव सुष्ठु स नोऽमे-

---

१ प्रथमपादे दशाक्षरत्वादेकाक्षरोना त्रिष्टुबिति निचृत्त्वम्। "आ इत" इति "गवियन्तः" इति वा च्छेदेन त्रिष्टुप्त्वम्। द्वितीयमन्त्रेऽपि चतुर्थपादे दशाक्षरत्वान्निचृत्त्वम्। "हवियो असि" इति विश्लेषेण केवला त्रिष्टुप्।

२ "उपयाम" इति क्वचित्। उपायाम, उपगम्य अयाम शरणमीमहे इत्यर्थः। भूतलकारप्रयोगस्याऽऽशयं वक्ष्यति। "ईमहे यामि" (३.१९.) इति च याञ्चाकर्मसु निघण्टुः। याञ्चा शरणप्राप्तिरिति च नातीवार्थान्तरम्। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। "याचामहे उपगम्य गव्यन्त इन्द्रम्" इति स्कन्दस्वामी च व्याचख्यौ।

३ "—तेऽर्थे भूतशब्दश्चेत्याह" इति प्र. पाठः। "भूतशब्दश्चाऽऽह" इति "भूतशब्दश्चेति सूत्रम्" इति च पाठान्तरम्। प्राचीनपाठे अभूतेऽप्यर्थे भूतत्ववाची शब्दः प्रयुज्यत इत्यर्थः। तथाहि टीका—"अतिनिश्चितेऽभूतेऽपि धात्वर्थे भूतत्ववाची शब्दः प्रयोक्तव्य इत्यस्यार्थस्य प्रतिपादकं सूत्रमाहेत्यर्थः" इति। "एष्यत्तु निश्चितं यत् तदतीतत्वेन भण्यते" इति ह्युक्तम्।

४ "वर्द्धयत्येष सुष्ठु" इति क्वचित्।

घोऽनामृणः क्वापि तस्य । वित्तानि तस्माद् वेदवाक्योत्थमेव केतं ज्ञानं[१] परमावर्जते नः ॥ ॥ २ ॥ ददाति ॥ * ॥

(३८५) उपेदहन्धनदामप्रतीतञ्जुष्टान्नश्येनोवसतिम्पतामि ॥
इन्द्रन्नमस्यन्नुपमेभिरर्कैर्यस्स्तोतृभ्योहव्योअस्तियामन् ॥ २ ॥

[उप । इत् । अहम् । धनऽदाम् । अप्रतिऽइतम् । जुष्टाम् । न । श्येनः । वसतिम् । पतामि ॥ इन्द्रम् । नमस्यन् । उपऽमेभिः । अर्कैः । यः । स्तोतृऽभ्यः । हव्यः । अस्ति । यामन् ॥ २ ॥]

[२]उपैवैनमहं पतामि यथा श्येनो वसतिं पूर्वभुक्ताम् । इन्द्रं नमस्यन्ननु[३]कूलर्ग्भिरेव यः स्तोतृभ्यो हव्य एवास्ति काले ॥ ३ ॥ * ॥

(३८६) निसर्वसेनइषुधीँरसक्तसमर्योगाअजतियस्यवष्टि ॥
चोष्कूयमाणइन्द्रभूरिवामम्मापणिर्भूरस्मदधिप्रवृद्ध ॥ ३ ॥

[नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सम् । अर्यः । गाः । अजति । यस्य । वष्टि ॥ चोष्कूयमाणः । इन्द्र । भूरि । वामम् । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ ३ ॥]

अशेषसेनापतिरेष शत्रूनशेषतो हन्तुमथो तमांसि । बध्नाति तूणान् निजसज्जनान्[४] वा संयोजयत्यात्मनि मानबाणान् ॥ ४ ॥ अर्थो गम्योऽधीश्वरो गा मतीर्वा सङ्कालयत्येव च यस्य वष्टि ।

---

१ "केतुः केतः" (३.९.) इति प्रज्ञानामसु पाठात् । एतेन "केतशब्दः सामर्थ्यात् समूहवचनः । गवामपां वा समूहम् । अथवा केतशब्दो ज्ञेयवचनः । गवां मध्ये केतं ज्ञेयमत्यन्तमुत्कृष्टम्" इत्यादि व्याख्यान् स्कन्दस्वामी परास्तः ।

२ 'उपैवेशमहम्" इति प्र. पाठः ।

३ "-कूलगीर्भिरेव" इति क्वचित् । उपमशब्दः प्रसिद्धेः सदृशवाची वा, "अन्तमानाम् । अवमे । उपमः" (२.१६.) इत्यन्तिकनामसु पाठादन्तिकवाची वा । उभयथाऽप्यनुकूलाभिरृग्भिरिति पर्यवसितोऽर्थः । "उपमानभूतैर्मन्त्रैः" इति वेङ्कटमाधवः ।

४ "निजसद्गुणान्" इति क्वचित् ।

भक्तस्य तत्त्वं ददमानश्च भूरि भद्रं मा भूरसुरस्त्वं कदाचित् ॥ ५ ॥ अस्मदर्थे हिंसकत्वेन नित्यप्रवृद्ध[1] ॥ * ॥

[४–निचृत् त्रिष्टुप्[2]]

(३८७) वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४ ॥

[वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः । चरन् । उपऽशाकेभिः । इन्द्र ॥
धनोः । अधि । विषुणक् । ते । वि । आयन् । अयज्वानः । सनकाः ।
प्रऽइतिम् । ईयुः ॥ ४ ॥]

वज्रेण घनेन दस्युम्[3] । ज्ञानेन[4] चाज्ञानगणं धनाढ्यमयज्युं [5]चाप्येक एवान्तरे च[6] । चरञ्छाकैः शक्तिभिः [7]सर्वदेवनरादिलोकं यमयञ्चघन्थ ॥ ६ ॥ अधिकृत्य त्वां धनुमत्यन्तपुष्टं विष्वग् जग्मुरयजन्तः सदैव । मृतिं प्रापुर्दुःखबाहुल्यरूपां सनका लाभे योग्यरूपा अपि स्म ॥ ७ ॥ * ॥

[५–विराट् त्रिष्टुप्[8]]

(३८८) पराचिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्द्धमानाः ॥
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५ ॥ [॥ १ ॥]

[परा । चित् । शीर्षा । ववृजुः । ते । इन्द्र । अयज्वानः । यज्वऽभिः ।
स्पर्द्धमानाः ॥ प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः । अव्रतान् ।
अधमः । रोदस्योः ॥ ५ ॥ १ ॥]

---

१ "नित्यं प्रवृद्ध" इति क्वचित् ।

२ तृतीयपादे दशाक्षरेति निचृत् त्रिष्टुप् । "वि आयन्" इति विश्लेषेण केवला च त्रिष्टुप् ।

३ "दस्यून्" इति च पाठान्तरम् ।

४ "ज्ञानेन वाऽज्ञान–" इति च ।

५ "वाऽप्येक–" इति च ।

६ "एवान्तरे वा" इति च पाठान्तरम् ।

७ "सर्वदैवनरादि–" इति क्वचित् ।

८ द्वितीयपादे चतुर्थपादे चैकाक्षरोनेति विराट् । "इन्द्र अयज्वानः" इति पादविश्लेषेण । "रोदसियोः" इति क्षैप्रसंयोगव्यूहेन च केवलत्वं सम्पाद्यम् ।

अयज्वानोऽन्ये वक्ष्यमाणास्तु ये ते सन्त्यासुरा यज्वभिः स्पर्द्धमानाः । शिरांस्यपि स्वानि सन्तत्यजुस्ते सद्भिः स्पर्द्धामात्रसम्पूरितार्थाः । तानव्रतान् स्वर्गतः खात् पृथिव्या निरधमस्त्वं [1]स्थैर्यवानिन्द्रियेशः ॥ ८ ॥ * ॥

(३८९) अयुयुत्सन्ननवद्यस्यसेनामयातयन्तक्षितयोनवग्वाः ॥

वृषायुधोनवध्रयोनिरष्टाःप्रवद्भिरिन्द्राच्चितयन्तआयन् ॥ ६ ॥

[अयुयुत्सन् । अनवद्यस्य । सेनाम् । अयातयन्त । क्षितयः । नवऽग्वाः ॥

वृषऽयुधः । न । वध्रयः । निःऽअष्टाः । प्रवत्ऽभिः । इन्द्रात् । चितयन्तः । आयन् ॥ ६ ॥]

यदा नवग्वा ऋषयोऽसुरेन्द्रैरुपद्रुताः शरणं वासुदेवम् । प्रापुस्तमोभिस्तामसैर्वाऽघसङ्घैः सम्पीडिता अयुयुत्संस्तदा तैः ॥ ९ ॥ सेनां च विष्णोर्निरयातयंस्ते वधाय तेषां हरिभक्त्यादिकान् वा । गुणान् समर्था इव यौधाः[2] स्वशत्रुवधैकशीला अपि नष्टाः प्लवद्भिः । गणैर्विष्णोः स्वैर्गुणैर्वा[3] प्रसादादीशस्य सङ्कालयन्तो[4] ह्यगच्छन् ॥ १० ॥ * ॥

[विराट्त्रिष्टुप्[5]]

(३९०) त्वमेतान्रुदतोजक्षतश्चायोधयोरजसइन्द्रपारे ॥

अवादहोदिवआदस्युमुच्चाप्रसुन्वतस्तुवतश्शंसमावः ॥ ७ ॥

---

१ "धैर्यवानिन्द्रियेशः" इति क्वचित् ।

२ "योधाः" इति प्र. पाठः ।

३ "स्वगुणैर्वा" इति क्वचित् ।

४ "–कालयन्तोऽभ्यगच्छन्" इति च । चितयन्त इत्येतत् सङ्कालयन्त इति व्याख्यातम् । नच धातुपाठेष्वपारायणात् कथमयमर्थ इति वक्तव्यम् । उक्तं हि पुरुषकारे लीलाशुकेन "नो खलु पारायणिकैरप्रदर्शनादभावानुमानम् । लक्ष्यपारतन्त्र्येण तेषामवस्थानात् । शिष्टप्रयोगोपनीतनाम्नः शब्दराशेरनाश्रयणे प्रधानविरोधाल्लक्षणस्यालक्षणत्वं मा भूदिति" इति । 'चतति' इति गतिकर्मसु पठितस्य रूपमिदमित्यप्याहुः । चितयन्तः जानन्त इति परेषां व्याख्याने इन्द्रं चितयन्त इति स्यात् । नत्विन्द्राच्चितयन्त इति । नचेन्द्रप्रसादेन असुराणां ज्ञानं भवति ।

५ प्रथमद्वितीयपादयोर्दशाक्षरत्वाद् विराट्त्वम् । "तुवमेतान्" इति क्षैप्रसंयोगवियोगेन "जक्षतश्च अयोधयः" इति सवर्णदीर्घव्यूहेन च केवला त्रिष्टुप् ।

[त्वम् । एतान् । रुदतः । जक्षतः । च । अयोधयः । रजसः । इन्द्र । पारे ॥
अव । अदहः । दिवः । आ । दस्युम् । उच्चा । प्र । सुन्वतः । स्तुवतः ।
शंसम् । आवः ॥ ७ ॥]

रक्षोगणान् भक्षयतो मुनींश्च सम्पीडितान् रुदतश्च त्वयैव । अयोधयो रजसोऽन्ते सुसत्त्ववृद्धिर्यदा जगतः स्यात् तदैव ॥ ११ ॥ पुन्दोषान् वा गुणभक्षान् नृसत्त्ववृद्धौ दिवो ज्ञानतोऽवादहश्च । अज्ञानदस्युं स्तुवतः संस्तुतिं च प्रावोऽरक्षः[1] ॥ * ॥

[८–९ निचृत्त्रिष्टुप्[2]]

(३९१) चक्राणासःपरीणहम्पृथिव्याहिरण्येनमणिनाशुम्भमानाः ॥
नहिन्वानासस्तितिरुस्तइन्द्रम्परिस्पशोअदधात्सूर्येण ॥ ८ ॥

[चक्राणासः । परिऽनहम् । पृथिव्याः । हिरण्येन । मणिना । शुम्भमानाः ॥
न । हिन्वानासः । तितिरुः । ते । इन्द्रम् । परि । स्पशः । अदधात् । सूर्येण ॥८॥]

बन्धनं ये जनानाम् ॥ १२ ॥ कुर्वन्ति हेम्ना मणिभिः शोभमाना दैत्यादयो दृढदोषा धनैर्वा । ते प्रेरयन्तोऽपि परस्परेण नैवातरन् वासुदेवं कथञ्चित् ॥ १३ ॥ सहैव सूर्येण च देवसङ्घांश्चरानज्ञातानदधाद् वासुदेवः । दैत्यानां वा तमसां वृत्तदृष्टौ[3] ॥ * ॥

(३९२) परियदिन्द्ररोदसीउभेअबुभोजीर्महिनाविश्वतस्सीम् ॥
अमन्यमानाँअभिमन्यमानैर्निर्ब्रह्मभिरधमोदस्युमिन्द्र ॥ ९ ॥

---

१ "संस्तुतिं चाप्यरक्षो वा" इति, "संस्तुतिं च प्रावोऽरक्षो वा" इति च पाठान्तरम् ।

२ चतुर्थपादे दशाक्षरत्वान्निचृत् । 'सूरियेण' इति विश्लेषेण केवलत्वम् ।

३ "वृत्तदृष्ट्यै" इति प्र. पाठः । प्राचीनपाठे निमित्तसप्तमी । कर्मसाक्षिष्वादित्यस्य प्राथम्यात् पृथक् पाठः । तथाहि सर्वत्र सूर्यः प्रथमं पठ्यते— "आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्" इति । "सूर्योऽग्निः खं मरुत् भावः सोमः सन्ध्याहनी दिशः । कालः स्वयं धर्म इति ह्येते धर्मस्य साक्षिणः" इति च । आदित्यस्य लोकचक्षुष्ट्वाद् भगवतश्च सर्वसाक्षिणस्तत्र विशेषसन्निधानाच्च प्राथम्यमिति ।

[परि । यत् । इन्द्र । रोदसीइति । उभेइति । अबुभोजीः । महिना । विश्वतः । सीम् ॥ अमन्यमानान् । अभि । मन्यमानैः । निः । ब्रह्मऽभिः । अधमः । दस्युम् । इन्द्र ॥ ९ ॥]

पर्यभुङ्क्थाः सह यद् रोदसी च । स्वमहिम्ना विश्वतः सम्यगेव 'तदभक्तानधमो[1] भक्तसङ्घैः[2] ॥ १४ ॥ * ॥

(३९३) नयेदिवःपृथिव्याअन्तमापुर्नमायाभिर्धनदाम्पर्यभूवन् ॥
युजंवज्रंवृषभश्चक्रइन्द्रोनिर्ज्योतिषातमसोगाअदुक्षत् ॥ १० ॥ [॥ २ ॥]

[न । ये । दिवः । पृथिव्याः । अन्तम् । आपुः । न । मायाभिः । धनऽदाम् । परिऽअभूवन् ॥ युजम् । वज्रम् । वृषभः । चक्रे । इन्द्रः । निः । ज्योतिषा । तमसः । गाः । अधुक्षत् ॥ १० ॥ २ ॥]

ये दस्यवो द्युपृथिव्योरशेषभोगेच्छवो धनदं चेश्वरं तम् । जिगीषवः स्वीयमायाभिरेव नैवोदापुर्द्वयमेतत् कदाचित् ॥ १५ ॥ युक्तं ज्ञानं वज्रमेवायुधं वा दस्यून् हन्तुं कृतवान् देवदेवः । निजेनैव ज्योतिषा भक्तहृद्गतमोगूढान्यदुहज्ज्ञिश्चयेन ॥ १६ ॥ ज्ञानानि विष्णुर्यत् तदज्ञानमुग्रम् ॥ * ॥

[विराट् त्रिष्टुप्[3]]

(३९४) अनुस्वधामक्षरन्नापोअस्यावर्द्धतमध्यआनाव्यानाम् ॥
सध्रीचीनेनमनसातमिन्द्रओजिष्ठेनहन्मनाहन्नभिद्यून् ॥ ११ ॥

[अनु । स्वधाम् । अक्षरन् । आपः । अस्य । अवर्द्धत । मध्ये । आ । नाव्यानाम् ॥ सध्रीचीनेन । मनसा । तम् । इन्द्रः । ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥ ११ ॥]

---

१ "त्वदभक्ता–" इति क्वचित् । २ "–भक्तान्निधमो–" इति प्र. पाठः ।

३ द्वितीयपादस्य नवाक्षरत्वाद् विराट्त्वम् । "अस्य अवर्द्धत" इति सवर्णसंयोगव्यूहेन "नाविआनाम्" इति क्षैप्रसंयोगव्यूहेन च केवला त्रिष्टुप् ।

यस्य 'कर्माण्यक्षरन् सौख्यमेव'[1] । यो वेदवाचां स्तुतिनावात्मकानां मध्येऽवर्द्धदयथाज्ञानरूपः । समीचीनज्ञानतोऽहंस्तमीश ओजिष्ठेन हतिरूपेण सम्यक् ॥ १७ ॥ मोक्षप्रकाशार्थमथापि नावा तरणीयानां मध्यतोऽपां वृधं तम् । अर्हि वै ॥ * ॥

[१२–१३ निचृत् त्रिष्टुप्[3]]

(३९५) न्याविद्ध्यदिलीबिशस्यदृळ्हाविश्रृङ्गिणमभिनच्छुष्णमिन्द्रः ॥
यावत्तरोमघवन्यावदोजोवज्रेणशत्रुमवधीःपृतन्युम् ॥ १२ ॥

[नि । अविद्ध्यत् । इलीबिशस्य । दृळ्हा । वि । शृङ्गिणम् । अभिनत् । शुष्णम् । इन्द्रः ॥ यावत् । तरः । मघऽवन् । यावत् । ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ॥ १२ ॥]

इळिनो भूस्थिताः स्युस्तत्राविशन्नसुरो नाम तस्य[4] ॥ १८ ॥ इळीबिशस्तस्य दृढानि यानि बलादीनि न्यहनत् तानि देवः । तमसो वा शृङ्गिणं शोषकं च वृषरूपं दैत्यमहन्नथो वा ॥ १९ ॥ कामं यावच्छक्तितो विक्रमाद् वा वेगेन वा शत्रुमथो पृतन्युम् । जघन्थ वज्रेण सुबोधतो वा न शक्तिसामस्त्यमिहोदितं हरेः ॥ २० ॥ अनन्तशक्तिर्हि हरिः सदैव[5] कुत एव शत्रुस्तदमुष्य कोऽपि । अतो यथाशक्त्यभियुद्ध्यमानं शत्रुं जघन्थेति महानिहार्थः ॥ २१ ॥ * ॥

(३९६) अभिसिध्मोअजिगादस्यशत्रून्वितिग्मेनवृषभेणापुरोभेत् ॥
संवज्रेणासृजद्वृत्रमिन्द्रःप्रस्वाम्मतिमतिरच्छाशदानः ॥ १३ ॥

---

१ "अपः । अप्नः । दंसः" (२.१.) इति कर्मनामसु पाठादापः कर्माणि ।

२ यद्यपि "ऊर्क् । रसः । स्वधा" (२.७.) इत्यन्ननामसु पठ्यते । तथाऽपि सुखमिति मुख्योऽर्थः । सुखसाधनत्वादन्नमपि स्वधा । तद्यथा वृजिनमिति दुःखं मुखत उच्यते, तत्कारणत्वात् पापं च ।

३ प्रथमपादे "नियाविद्ध्यत्" इति विश्लेषेण प्रथममन्त्रे केवला त्रिष्टुप् । द्वितीयमन्त्रस्य च तृतीयपादे 'संवजरेण' इति यणसमूहव्यूहेन केवला त्रिष्टुप् ।

४ "नाम तस्याम्" इति (?) क्वचित् पठ्यते । नामतः स्यात् इति लिखितव्ये प्रमादतस्तथा लिखितं स्यात् ।
५ "सर्वदैव" इति च क्वचित् ।

[अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् ॥ सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ १३ ॥]

स सर्वतः सिद्धियुतः सदैव जिगाय[1] जीवारिगणान्[2] पुरश्च । संसाररूपा अभिनद् वृषेण प्राणेन तिग्मेन विरोधिनः प्रति ॥ २२ ॥ संयोजयामास वज्रेण वृत्रं ज्ञानेन वाऽज्ञानममुष्य हत्यै । मतिं च स्वामदिशत्[3] स्वप्रजाभ्यः स शाशदानः सुसुखी सर्वदैव[4] ॥ २३ ॥ * ॥

[१४–१५ भुरिक् पङ्क्तिः[5], पञ्चमः स्वरः]

(३९७) आवःकुत्समिन्द्रयस्मिञ्चाकन्प्रावोयुद्ध्यन्तंवृषभन्दशद्युम् ॥
शफच्युतोरेणुर्नक्षतद्यामुच्छ्वैत्रेयोनृषाह्यायतस्थौ ॥ १४ ॥

[आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युद्ध्यन्तम् । वृषभम् । दशऽद्युम् ॥ शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसाह्याय[6] । [नृऽसह्याय ।] तस्थौ ॥ १४ ॥]

---

१ अभि अजिगात् जिगाय । अभिगमनं हि जयान्तमिति जिगायेति व्याख्यातम् । अभ्यजिगात् अभिजगामेति मुखतोऽर्थः । "अजगन् । जिगाति । पतति" (२.१४) इति गतिकर्मसु पाठात् । यद्वा जयार्थोऽपि जिगातिः पठनीयः ।

२ "देवारिगणान्" इति क्वचित् ।

३ अतिरत्, अतरत्, अदिशदिति यावत् । 'तृतीयोऽतिशये' इत्यकारस्येकारः ।

४ "सदैव" इति प्र. पाठः ।

५ प्रथमतृतीयचतुर्थेषु पादेषु एकाक्षरोनत्वात् एकचत्वारिंशदक्षरः प्रथमो मन्त्रः । ततश्चैकाक्षराधिका पङ्क्तिरिति भुरिक् पङ्क्तिः । प्रथमपादे "इन्दर" इति क्षैप्रसंयोगव्यूहेन, तृतीये "दियाम्" इति व्यूहेन, चतुर्थे च "नृषाहियाय" इति व्यूहेन चतुश्चत्वारिंशदक्षरत्वे च सम्पन्ने अनुक्रमणिकोक्तदिशा त्रिष्टुप् भवति । द्वितीये च मन्त्रे प्रथमद्वितीयतृतीयपादेषु दशाक्षरत्वात् भुरिगेव पङ्क्तिः । "तुग्रियासु" इति, "श्वित्रियम्" इति, "जियोक्" इति च व्यूहेन केवला च त्रिष्टुप् ।

६ "नृऽसह्यायेति त्वध्यापकपदपाठः" इति मन्त्रार्थमञ्जरीवचनात् "नृऽसाह्याय" इत्यपि पदपाठः सम्मत इत्यवगम्यते ।

कुत्सं दशद्युं च मुनिं नृपं च यस्मिन् स्थितः स्वात्मरूपं सुभक्त्या। अदर्शयस्तोषितो यः स्वतन्त्रश्चाकमुक्तः कर्म यतः स्वतन्त्रे ॥ २४ ॥ वृषरूपस्यास्य नृपस्य युद्धयतः शफच्युतो रेणुरुन्नक्षत द्याम् । श्वेता वाणी वायुभार्या[1] सुतोऽस्याः श्वैत्रेयोऽयं युधतो ह्युद्स्थात् ॥ २५ ॥ वृषः[2] श्वैत्रेयो धर्म एवाथ कुत्सनामाऽध्यात्मे कुत्सितोत्सारणात् स्यात् । धर्मरेणुः स्वर्गमात्राभिगामी[3] साक्षाद् धर्मो मोक्षफलोपगः[4] स्यात् ॥ २६ ॥ * ॥

(३९८) आवश्शमंवृषभन्तुग्र्यासुक्षेत्रजेषेमघवञ्छ्वित्र्यङ्गाम् ॥

ज्योक्चिदत्रतस्थिवांसोअक्रञ्छत्रूयतामधरावेदनाकः ॥ १५ ॥ [॥ ३ ॥]

[आवः । शमम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् ॥

ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकरित्यकः ॥ १५ ॥ ३ ॥]

इति त्रयस्त्रिंशं सूक्तम्

शमात्मकं वृषभं धर्ममेवाप्यरक्षस्त्वं तुग्रियास्वप्यधीशः[5] । तुग्रियाख्या[6] सन्ततिर्दीर्घकाला मुक्तिक्षेत्रविजयायैव धर्मम् ॥ २७ ॥ श्वेतासुतं रमणाद् रेफ उक्तस्तमरक्षस्त्वं त्वयि ये तस्थिवांसः । ज्योतिश्चक्रुर्निजरूपं विमुक्त्या ज्ञानान्यरीणामधराणि चाकरोः ॥ २८ ॥ * ॥ * ॥

---

१ श्वा वायुरिति पूर्वमुक्तम् (मं–३९४) तेन इता श्वेता श्विता वा। सा रतिरूपा चेति श्वित्रा वाणी। तत्पुत्रो हि दशद्युः। "श्वित्रायाः पुत्रो दशद्युः" इति वेङ्कटमाधवश्चाऽह । एतेन "दशद्युं बहुदीप्तिं वृषभं नाम राजानम्" इति वदन् स्कन्दस्वामी परास्तः।

२ "वृषा" इति क्वचित् पाठः।

३ "स्वर्गमात्राधिगामी" इति क्वचित्।

४ "मुक्तिफलोपगः" इति पाठान्तरम्।

५ "–प्यधीश" इति प्र. पाठः।

६ "तुग्र्याख्या स्यात् सन्ततिः" इति प्र. पाठः। "तुग्र्याख्या सन्ततिः" इत्येव च क्वचित् । निघण्टुस्तु तुग्र्येति जलनामसु पठति। सन्ततसरणादेव हि जलमपि तुग्र्या।

—३४—

[[1]त्रिश्चिन्नो द्वादश, हिरण्यस्तूप आङ्गिरसः, अश्विनौ।]

[१–८ जगती, निषादः स्वरः]

[१–विराड् जगती[2]]

(३९९) त्रिश्चिन्नोअद्याभवतन्नवेदसाविभुर्वायामउतरातिरश्विना ॥
युवोर्हियन्त्रंहिम्येववाससोभ्यायंसेन्याभवतम्मनीषिभिः ॥ १ ॥

[त्रिः। चित्। नः। अद्य। भवतम्। नवेदसा। विऽभुः। वाम्। यामः। उत। रातिः। अश्विना ॥ युवोः। हि। यन्त्रम्। हिम्याऽइव। वाससः। अभिऽआयं-सेन्या। भवतम्। मनीषिऽभिः ॥ १ ॥]

आरभ्य चाद्यैव दिवा निशायां तदन्तरे[3] च त्रिरपि स सर्वदा। अस्माकमेव भवतं यतोऽन्यो वेत्ता न तावित्युदितौ नवेदसौ ॥ २९ ॥ गौणं तदन्यत्र हरौ तु मुख्यतो व्यापी तु मार्गो युवयोश्च[4] दानम्। अशेषदेशेषु गतेरशेषदातृत्वतश्चैव युवोर्हि यन्त्रम् ॥ ३० ॥ वासोयन्त्रं यद्वदयत्नतः स्याद्धिम्या हिनोतेस्तन्तुविक्षेपणी हि। तद्वद् बुद्धिप्रेरकाऽयत्नतो[5] वामायार्थसेनौ भवतं मनीषिभिः ॥ ३१ ॥ सहैव देवैः ॥ * ॥

[निचृत् जगती[6]]

(४००) त्रयःपवयोमधुवाहनेरथेसोमस्यवेनामनुविश्वइद्विदुः ॥
त्रयस्कम्भासस्कभितासआरभेत्रिर्नक्तंयाथस्त्रिर्वश्विनादिवा ॥ २ ॥

---

१ "त्रिश्चिद् द्वादश, आश्विनम्, नवम्यन्त्ये त्रिष्टुभौ" इत्यनुक्रमणिका। "त्रिश्चिदित्याश्विनं ततः" (३. १०४) इति बृहद्देवतायाम्।

२ तृतीयचतुर्थयोरेकादशाक्षरत्वाद्विराड् जगती। "हिमियेव" इति क्षैप्रसंयोगव्यूहेन "वाससो अभ्यायन्" इत्येकाक्षरीभावव्यूहेन च केवला जगती।

३ "तदन्ते च" इति क्वचित्।

४ "युवयोस्तु" इति क्वचित् प्र. पाठः।

५ "बुद्धिप्रेरकौ अयत्नतः" इति वक्तव्ये प्रेरकाऽयत्नत इत्यार्षं रूपम्। सयुजा सखाया इतिवत् प्रेरका इति द्विवचनस्य आकारः। ततश्च सन्धावेकाक्षरीभावः। "देवाऽभवन्" इत्यादिवदयं सन्धिः।

६ चतुर्थपाद एकाक्षरोनेति निचृत्। "त्रिरु अश्विना" इति विश्लेषेण केवला जगती।

[त्रयः । पवयः । मधुऽवाहने । रथे । सोमस्य । वेनाम् । अनु । विश्वे । इत् । विदुः ॥ त्रयः । स्कम्भासः । स्कभितासः । आऽरभे । त्रिः । नक्तम् । याथः । त्रिः ऊँइति । अश्विना । दिवा ॥ २ ॥]

पवयश्चायुधानि सोमस्य पानं[1] चेतनत्वाद् विदुस्ते । वज्रः खड्गः शर इत्यायुधानि[2] त्रिवेणवः स्तम्भनामान एव[3] ॥ ३२ ॥ दिवा निशायां त्रिस्त्रिरेवानुयाथः कर्मारम्भार्थे लोकसिद्ध्यर्थमञ्जः । चक्रं गदा शर इत्यायुधानि वेदास्त्रयो[4] वासुदेवस्य च स्युः । रथः स्वीयो ज्ञानिनां वा शरीरं प्राणादयः स्तम्भनान्यस्य चापि ॥ ३३ ॥ * ॥

(४०१) समानेअहन्त्रिरवद्यगोहना त्रिरद्य यज्ञम्मधुनामिमिक्षतम् ॥
त्रिर्वाजवतीरिषोअश्विना युवन्दोषाअस्मभ्यमुषसश्चपिन्वतम् ॥ ३ ॥

[समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् । मधुना । मिमिक्ष-तम् ॥ त्रिः । वाजऽवतीः । इषः । अश्विना । युवम् । दोषाः । अस्मभ्यम् । उषसः । च । पिन्वतम् ॥ ३ ॥]

वैषम्यहीने सुखभाजनेऽह्नि विमुक्तिकालेऽखिलदोषनाशकौ । स्वभक्तानां शोधयतं[5] च यज्ञं त्रिर-स्माकं युद्धजिता इषश्च । सुखानि वा मोक्षगतानि नोऽलमहोरात्रे[6] क्षरतं सर्वदैव ॥ ३४ ॥ * ॥

---

१ वेनां पानम् । पानेच्छां पानपात्रं पानक्रियां वा । "वी कान्तिगतिव्याप्तिक्षेपप्रजनखादनेषु" ।

२ तथाहि निरुक्ते यास्कः—"पविः शल्यो भवति । यद् विपुनाति कायम्" (१२. ३०.) इत्याह ।

३ स्तम्भ तु स्तुम्भ स्कम्भ स्कुम्भ म्र रोधने" इति वोपदेवः सौत्रधातुपाठे ।

४ "वेदास्त्रयो वा वासु-" इति क्वचित् पठ्यते ।

५ "शोधयन्तौ" इति पाठान्तरम् ।

६ "नोऽलमहोरात्रम्" इति च । अहोरात्रे इति चाध्यात्मे इत्यादिषदार्षम् । दोषा उषसश्चाहोरात्रम् । "उष-श्शब्देनात्र साहचर्यादहर्लक्ष्यते । सप्तम्येकवचनस्थाने उभयत्र प्रथमाबहुवचनम् । रात्रौ चाहनि च पिन्वतम्" इति स्कन्दस्वामी । अभिव्याप्तौ द्वितीया वा स्यात् ।

[४—भुरिक् त्रिष्टुप्, धैवतः स्वरः[1]]

(४०२) त्रिर्वर्तिर्यातन्त्रिरनुव्रते जने त्रिस्सुप्राव्ये त्रेधेव शिक्षतम् ॥
त्रिर्नान्द्यं वहतमश्विना युवन्त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ॥ ४ ॥

[त्रिः । वर्तिः । यातम् । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतम् ॥ त्रिः । नान्द्यम् । वहतम् । अश्विना । युवम् । त्रिः । पृक्षः । अस्मेइति । अक्षराऽइव । पिन्वतम् । ॥ ४ ॥]

यद् वर्तनं सर्वलोकेषु तच्च त्रिकालगं युवयोरेव सर्वम् । भक्ते जने सुष्ठु रक्ष्ये सुभक्ते त्रिधैव[2] कालानुगते सुशिक्षतम् । सुखं वहेतं च युवां तु नः सदा पुष्टिं च नित्यां क्षरतं वर्णवच्च ॥ ३५ ॥ * ॥

(४०३) त्रिर्नो रयिं वहतमश्विना युवन्त्रिर्देवताता त्रिरुतावतन्धियः ॥
त्रिस्सौभगत्वन्त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहिता रुहद्रथम् ॥ ५ ॥

[त्रिः । नः । रयिम् । वहतम् । अश्विना । युवम् । त्रिः । देवऽताता । त्रिः । उत । अवतम् । धियः ॥ त्रिः । सौभगऽत्वम् । त्रिः । उत । श्रवांसि । नः । त्रिऽस्थम् । वाम् । सूरे । दुहिता । आ । रुहत् । रथम् ॥ ५ ॥]

[3]वित्तं नित्यं देवतातिं च[4] नित्यं धियं च शुभ्रां नित्यमेवावतं नः । कीर्तिं सौभाग्यं रक्षतं नः सदैव कालत्रये युष्मदीयं रथं च । पुत्री सूर्यस्याऽरुहद्[5] भक्तदेहे ज्ञानोदयो वा भगवत्प्रसादात् । ॥ ३६ ॥ * ॥

---

१ द्वितीयपादे दशाक्षराणि । तृतीय एकादश । ततः पञ्चचत्वारिंशदक्षरेति भुरिक् त्रिष्टुप् । "सुप्राविये त्रेधा इव" इति विश्लेषेण, 'त्रिर्नान्दियम्' इति च विश्लेषेणानुक्रमणिकोक्तदिशा जगती च भवति । तदात्वे च निषादः स्वरः ।

२ "त्रिधेव" इति प्र. पाठः । "त्रेधेव" इति क्वचित् । ३ "वित्तं च नित्यम्" इति प्र. पाठः ।

४ "इष्टिः । देवताता । मखः" (३. १७.) इति निघण्टौ देवतातेति यज्ञनामसु पठ्यते । तथाऽपि देवा यज्ञस्वीकारार्थं यथाऽऽगच्छेयुस्तथा करणमेव हि यज्ञरक्षणम् । तदेव च देवततिरक्षणम् । नान्ततोऽर्थभेदः ।

५ तथाहि स्कन्दस्वामी चाऽऽह—"अत्रेतिहासमाचक्षते—सूर्यस्य दुहितरं देवा वरयामासुः । त ऊचुः—आजिं धावाम । यो नो जेष्यति तस्येयं भविष्यतीति । तामश्विनौ जिग्यतुः । सा जिताऽश्विनो रथमारुरोहेति" इति । सूरे सूर्यस्य दुहिता उषाः । षष्ठ्यर्थे सप्तमी । सूरेः सूर्यस्येति विसर्गलोपो वा ।

[विराड् जगती[1]]

(४०४) त्रिर्नोअश्विनादिव्यानिभेषजात्रिःपार्थिवानित्रिरुदत्तमद्भ्यः ॥
ओमानंशंयोर्ममकायसूनवेत्रिधातुशर्मवहतंशुभस्पती ॥ ६ ॥ [॥ ४ ॥]

[त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊँइति । दत्तम् । अत्ऽभ्यः ॥ ओमानम् । शम्ऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतम्। शुभस्पतीइति । [शुभः । पतीइति[2] ।] ॥ ६ ॥ ४ ॥]

सर्वेषु कालेष्वपि भेषजानि नः सर्वलोकप्रभवानि दत्तम् । [3]अद्भ्यः सुखायैव सुखं ममैव स्वल्पस्य युष्मत्पुत्रकस्याथ दत्तम् । पती शुभस्याथ सुतस्य शंयोर्मदीयस्यैवाऽवहतं सुखं वा ॥ ॥ ३७ ॥ * ॥

[७-८ निचृत् जगती[4]]

(४०५) त्रिर्नोअश्विनायजतादिवेदिवेपरित्रिधातुपृथिवीमशायतम् ॥
तिस्रोनासत्यारथ्यापरावतआत्मेववातःस्वसराणिगच्छतम् ॥ ७ ॥

---

१ "प्रथमद्वितीयपादयोरेकादशाक्षरत्वात् द्व्यूना विराट् । "दिवियानि" इति "दत्तमद्भियः" इति च विश्लेषेण केवला जगती ।

२ "अध्यापकसम्प्रदायागतोऽयं पदपाठः । पारस्करत्वादित्वात् सुडिति टीकावचनादेकं पदमिति प्रतीयते । मन्त्रार्थमञ्जर्यामपि तथा ।

३ 'अद्भ्यः अन्तरिक्षगतलोकेभ्यः भेषजानि दत्तम्' इत्येकोऽर्थः । तदेतत् सर्वलोकप्रभवानीति कथितम् । अर्थान्तरं चाऽह—अद्भ्यः सुखायैवेति । सुखायैव सुखाय वा । दिव्यानि दिवि भवानि । पार्थिवान्यन्तरिक्षगतानि, अद्भ्य इति भूमिगतानि वा । तथाहि निघण्टुः—"अन्तरिक्षम् । आकाशम् । आपः । पृथिवी" (१. ३.) इत्यन्तरिक्षनामसु । अप्शब्दस्याऽकाशवाचकत्वे पृथिवीति स्फुटम् । पृथिवीपदस्यान्तरिक्षवाचकत्वेऽब्राधारा पृथिवी अप्पदेनोच्यते । सुखवाचित्वे तु "अपः । अप्नः" (२. १.) इति कर्मनामसु पाठादाप इति कर्मसाध्यं सुखमप्युच्यते । "पुण्येन पुण्यं लोकं नयति" इत्यादिना कर्मफलत्वात् सुखस्य । यद्वा आप इति मुख्यतः सुखमेव । तत्साधनत्वात् कर्म चाऽप इत्युच्यते । तदेतदाह—सुखायैवेति ।

४ तृतीयपादे "रथिया" इति विश्लेषे केवला जगती । अन्यथैकाक्षरोनेति निचृत् । उत्तरमन्त्रे च द्वितीयपादे "त्रइधा" इति विश्लेषेण ।

[त्रिः । नः । अश्विना । यजता । दिवेऽदिवे । परि । त्रिऽधातु । पृथिवीम् । अशायतम् ॥ तिस्रः । नासत्या । रथ्या । पराऽवतः । आत्माऽइव । वातः । स्वसराणि । गच्छतम् ॥ ७ ॥]

(४०६) त्रिरश्विनासिन्धुभिस्सप्तमातृभिस्त्रयआहावास्त्रेधाहविष्कृतम् ॥
तिस्रःपृथिवीरुपरिप्रवादिवोनाकंरक्षेथेद्युभिरक्तुभिर्हितम् ॥ ८ ॥

[त्रिः । अश्विना । सिन्धुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः । त्रेधा । हविः । कृतम् ॥ तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकम् । रक्षेथेइति । द्युऽभिः । अक्तुऽभिः । हितम् ॥ ८ ॥]

[९–त्रिष्टुप् छन्दः[1], धैवतः स्वरः, भुरिक् पङ्क्तिः[2], पञ्चमः स्वरः।]

(४०७) क्व१त्रीचक्रात्रिवृतोरथस्यक्व१त्रयोवन्धुरोयेसनीळाः ॥
कदायोगोवाजिनोरासभस्ययेनयज्ञंनासत्योपयाथः ॥ ९ ॥

[क्व । त्री । चक्रा । त्रिऽवृतः । रथस्य । क्व । त्रयः । वन्धुरः । ये । सऽनीळाः ॥ कदा । योगः । वाजिनः । रासभस्य । येन । यज्ञम् । नासत्या । उपऽयाथः ॥ ॥ ९ ॥]

[१०–११ जगती, निषादः स्वरः।]

(४०८) आनासत्यागच्छतंहूयतेहविर्मध्वःपिबतम्मधुपेभिरासभिः ॥
युवोर्हिपूर्वंसवितोषसोरथमृतायचित्रङ्घृतवन्तमिष्यति ॥ १० ॥

---

१ "नवम्यन्ते त्रिष्टुभौ" इति ह्यनुक्रमणिका ।

२ प्रथमद्वितीयचतुर्थेषु पादेषु दशाक्षरत्वात् भुरिक् पंक्तिः । प्रथमद्वितीययोः "कुव" इति च्छेदेन, चतुर्थे च "नासतियोपयाथः" इति च्छेदेनानुक्रमणिकोक्तदिशा त्रिष्टुबेव भवति ।

[आ । नासत्या । गच्छतम् । हूयते । हविः । मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः ॥ युवोः । हि । पूर्वम् । सविता । उषसः । रथम् । ऋताय । चित्रम् । घृतऽवन्तम् । इष्यति ॥ १० ॥]

(४०९) आनासत्यात्रिभिरेकादशैरिहदेवेभिर्यातम्मधुपेयमश्विना ॥
प्रायुस्तारिष्टन्नीरपांसिमृक्षतंसेधतन्द्वेषोभवतंसचाभुवा ॥ ११ ॥

[आ । नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातम् । मधुऽपेयम् । अश्विना ॥ प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥ ११ ॥]

[१२ त्रिष्टुप् छन्दः, धैवतः स्वरः ।]

[निचृत् त्रिष्टुप्[१]]

(४१०) आनोअश्विनात्रिवृतारथेनार्वाञ्चंरयिंवहतंसुवीरम् ॥
शृण्वन्तावामवसेजोहवीमिवृधेचनोभवतंवाजसातौ ॥ १२ ॥ [॥ ५ ॥]

[आ । नः । अश्विना । त्रिऽवृता । रथेन । अर्वाञ्चम् । रयिम् । वहतम् । सुऽवीरम् ॥ शृण्वन्ता । वाम् । अवसे । जोहवीमि । वृधे । च । नः । भवतम् । वाजऽसातौ ॥ १२ ॥ ५ ॥]

इति चतुस्त्रिंशं सूक्तम्

---

१ "रथेन अर्वाञ्चम्" इति पादविश्लेषेण द्वितीयपादेऽप्येकादशाक्षरत्वे केवला त्रिष्टुप् ।

—३५—

[[1]ह्वयाम्यग्निम् एकादश, हिरण्यस्तूप आङ्गिरसः ।]

[१–जगती, निषादः स्वरः]

[१–क्रमेण चतुर्षु पादेषु अग्निः, मित्रावरुणौ,
रात्रिः सविता च देवताः[2]]

[विराड् जगती[3]]

(४११) ह्वयाम्यग्निम्प्रथमंस्वस्तयेह्वयामिमित्रावरुणाविहावसे ॥
ह्वयामिरात्रीञ्जगतोनिवेशनींह्वयामिदेवंसवितारमूतये ॥ १ ॥

[ह्वयामि । अग्निम् । प्रथमम् । स्वस्तये । ह्वयामि । मित्रावरुणौ । इह । अवसे ॥
ह्वयामि । रात्रीम् । जगतः । निऽवेशनीम् । ह्वयामि । देवम् । सवितारम् ।
ऊतये ॥ १ ॥]

ह्वयामि देवानग्निपूर्वानथोवा विष्णुं तैस्तैर्नामभी राति यस्मात् । रतित्वाद् वा रतिदत्वाद् स रात्री ॥ ※ ॥

[२–८ त्रिष्टुप्, धैवतः स्वरः]

[२–११, सविता देवता]

[२ विराट् त्रिष्टुप्[4]]

(४१२) आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥
हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ २ ॥

---

१ "ह्वयाम्येकादश, सावित्रम्, नवमी जगत्याद्या च, सा लिङ्गोक्तदेवतापादा" इत्यनुक्रमणिका ।

२ "पादोऽग्नये ह्वयामीति मैत्रावरुण उत्तरः । तृतीयो रात्रिसंस्तावः सूक्तं सावित्रमुच्यते" (३. १०५.) इति बृहद्देवतायाम् । "पञ्चैतानि जगौ दृष्ट्वा सूक्तान्याङ्गिरसो मुनिः । हिरण्यस्तूपतां प्राप्य सख्यं चेन्द्रेण शाश्वतम्" (३. १०६.) इति च । तेन एकत्रिंशादा पञ्चत्रिंशं पञ्चसूक्तानि हैरण्यस्तूपः सप्तमोऽनुवाकः ।

३ "प्रथमपादे द्व्यक्षरोनेति विराट् । "ह्वयामि अग्निं प्रथमं सुअस्तये" इति व्यूहेन केवला जगती ।

४ द्वितीयचतुर्थपादयोर्दशाक्षरत्वाद् विराट्त्वम् । "मर्तियं च" इति यण्व्यूहेन, "रथेन आ देवः" इति पादव्यूहेन च केवला त्रिष्टुप् ।

[आ । कृष्णेन । रजसा । वर्तमानः । नि॒ऽवेशयन् । अमृतम् । मर्त्यम् । च ॥
हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ॥ २ ॥]

कृष्णं रजः शार्वरं ह्वत्तमो वा ॥ ३८ ॥ देवान् नृजातानथवा[1] विमुक्तानन्यांश्च मर्त्यान्[2] स्मृतिगान् वा लयेषु । निशासु वा स्वात्मनि सन्निवेशयन् प्रस्वापयन् वा रविगो जनार्दनः ॥ ३९ ॥ * ॥

(४१३) यातिदेवःप्रवतायात्युद्वतायातिशुभ्राभ्यांयजतोहरिभ्याम् ॥
आदेवोयातिसवितापरावतोपविश्वादुरिताबाधमानः ॥ ३ ॥

[याति । देवः । प्रऽवता । याति । उत्ऽवता । याति । शुभ्राभ्याम् । यजतः ।
हरिऽभ्याम् ॥ आ । देवः । याति । सविता । पराऽवतः । अप । विश्वा ।
दुःऽइता । बाधमानः ॥ ३ ॥]

आयाति नित्यं चोच्चनीचप्रदेशैः[3] शुभ्राश्वयुक्तेन रथेन याज्यः । शुभ्रौ च तौ रमणीयौ च शुभ्रौ पुरोगाश्वौ हरिदश्वो हि सूर्यः ॥ ४० ॥ परावतो दूरतः ॥ * ॥

(४१४) अभीवृतङ्कृशनैर्विश्वरूपंहिरण्यशम्यंयजतोबृहन्तम् ॥
आस्थाद्रथंसविताचित्रभानुःकृष्णारजांसितविषीन्दधानः ॥ ४ ॥

[अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः । बृहन्तम् ॥
आ । अस्थात् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् ।
दधानः ॥ ४ ॥]

---

१ "-वाऽपि मुक्ता-" इति क्वचित् ।
२ "-नन्यान् मर्त्यान्" इति च ।
३ "चोच्चनीचैः प्रदेशैः" इति प्र. पाठः ।

अभीवृतश्च रथो [1]हिरण्यैस्तस्य शम्या युगाणी[2] । तमःप्रकाशौ[3] यदधीनौ यतस्तौ दधान इत्युच्यते वासुदेवः ॥ ४१ ॥ कृष्णं रजस्तविषी [4]सत्त्वपूर्वगुणास्त्रयो वा व्युत्क्रमात् ॥ * ॥

[५—विराट् त्रिष्टुप्[5]]

(४१५) विजनाञ्छ्यावाशितिपादोअख्यन्रथंहिरण्यप्रउगंवहन्तः ॥

शश्वद्विशस्सवितुर्दैव्यस्योपस्थेविश्वाभुवनानितस्थुः ॥ ५ ॥

[वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः ॥ शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ ५ ॥]

तत्तुरङ्गाः । श्यावाः श्यामत्वान्नीलपादो[6] जगत् ते पश्यन्ति सन्धिः [7]प्रउगं रथस्य । देवप्रियत्वाद् दैव्यनाम्नो हरेस्तु समीपस्थं सर्वगत्वाज्जगद्धि ॥ ४२ ॥ * ॥

---

१ कृशनैः हिरण्यैः । "हिरण्यम् । पेशः । कृशनम्" (१. २.) इति निघण्टुः ।

२ "वोढुरश्वस्यानपगमार्थं या निधीयते सा शम्या" इति स्कन्दस्वामी ।

३ तविषीति प्रकाशः, प्रकाशात्मकत्वात् सत्त्वं चोच्येते । "तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्" (१४. ६.) इति गीतासु । निघण्टुकारस्तु बलनामसु पपाठ—"तविषी । शुष्मम् । शुष्णम्" (२.९.) इत्यादि । ज्ञानमेव हि मुख्यं बलम् । "बलं ज्ञानबलं चैव बाह्यं चेति द्विधा मतम्" इति हि तत्त्वसारवचनं छन्दोगोपनिषद्भाष्ये । "द्विविधं बलम् । प्रज्ञाबाहुभवम्" इति चोपरि ।

४ "सत्त्वपूर्वगुणास्त्रयो व्युत्क्रमात्" इति, "सत्त्वपूर्वा गुणास्त्रयो व्युत्क्रमात्" इति "सत्त्वपूर्वा गुणास्त्रयो वा व्युत्क्रमात्" इति च कोशेषु पाठान्तरम् ।

५ तृतीयचतुर्थपादयोर्दशाक्षरत्वात् द्व्यक्षरोनेति विराट् । "दैवियस्य उपस्थे" इति विश्लेषेण केवला त्रिष्टुप् ।

६ श्यावा हरिद्वर्णाः । हरिदश्वो हि सूर्यः । शितिपादो नीलपादाः । "असितं शिति कृष्णं च कालं नीलं च मेचकम्" इति ह्यभिधानम् । स्कन्दस्वामी वेङ्कटमाधवश्च श्यावशब्दस्य कृष्णवर्णवाचित्वभ्रान्त्या शितिश्यावपदयोरनैकार्थ्याय शितिपादः श्वेतपादा इति व्याचख्यतुः । "शितिः सितासितयोः" इति मेदिनीवचनसंवादात् । तत्र मूलं चिन्त्यम् । नहि क्वापि सूर्याश्वानां पादयोः श्वेतता श्रूयते ।

७ "प्रउगं तद्रथस्य" इत्यन्यत्र पाठः । "यत्र रथो निबद्ध्यते स युगबन्धनप्रदेशः प्रउगमित्युच्यते" इति स्कन्दस्वामी ।

(४१६) तिस्रोद्यावस्सवितुर्द्वाउपस्थाँएकायमस्यभुवनेविराषाट् ॥
आणिन्नरथ्यममृताधितस्थुरिहब्रवीतुयउतच्चिकेतत् ॥ ६ ॥[॥ ६ ॥]

[तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने । विराषाट् ॥
आणिम् । न । रथ्यम् । अमृता । अधि । तस्थुः । इह । ब्रवीतु । यः । ऊँइति ।
तत् । चिकेतत् ॥ ६ ॥ ६ ॥]

तिस्रो द्यावो मात्रयं द्वावुपस्थौ जडाजडे श्रीर्विराषाडधीशा[1] । विश्वस्य साक्षाद् भगवान् नियन्ता यमोऽस्य सर्वं गदितं सदैव । जडाजडत्वान्मानमुक्तं पृथग्घि सर्वस्वाम्यं वक्तुमेवोदिता श्रीः ॥ ४३ ॥ अन्योन्यसम्बन्धविवक्षयैव ह्युपस्थत्वं मुक्तभूतानि यानि । अशेषतस्तानि रथस्य यद्वदाणिं रथ्यं संश्रितं सर्वदैव । एवं हरिं संश्रितान्यब्जजेशपूर्वाण्यपीत्येष वेदार्थसारः ॥ ४४ ॥ इह ब्रवीत्वन्यथा योऽभिपश्येत् कुर्याद् वा तद् यो यथावच्च पश्येत् । [2]शेषज्ञानं स ब्रवीत्वस्य-दर्थं चकार यो विष्णुरेतत् स वा नः ॥ ४५ ॥

[७–८, भुरिक् पङ्क्तिः[3], पञ्चमः स्वरः ।]

(४१७) विसुपर्णोअन्तरिक्षाण्यख्यद्गभीरवेपाअसुरस्सुनीथः ॥
क्वे३दानींसूर्यःकश्चिकेतकतमान्द्यांरश्मिरस्याततान ॥ ७ ॥

[वि । सुऽपर्णः । अन्तरिक्षाणि । अख्यत् । गभीरऽवेपाः । असुरः । सुऽनीथः ॥
क्व । इदानीम् । सूर्यः । कः । चिकेत । कतमाम् । द्याम् । रश्मिः । अस्य ।
आ । ततान ॥ ७ ॥]

---

१ "विराषाडधीरा" इति (?) प्र. पाठः । २ "शेषं ज्ञानम्" इति प्र. पाठः ।

३ प्रथमपादे दशाक्षराणि, तृतीये नवेति एकचत्वारिंशदक्षरा एकाक्षराधिका भुरिक् पङ्क्तिः । "अन्तरिक्षाणि अख्यत्" इति, "क्व इदानीं सूरियः" इति च व्यूहेन चतुश्चत्वारिंशदक्षरा त्रिष्टुबेव । तदात्वे च धैवतः स्वरः । द्वितीयमन्त्रे च प्रथमद्वितीयचतुर्थचरणेषु दशाक्षरत्वाद् भुरिक् पङ्क्तिः । 'वि अख्यत्' इति, 'पृथिवियाः' इति, 'वारियाणि' इति च विश्लेषेण त्रिष्टुप् ।

[1]गम्भीरवेगो भगवान्[2] सुपर्णः परानन्दादन्तरीक्ष्याण्यपश्यत्[3] । असौ रतिः शुभनीतिश्च [4]विष्णुरित्यपश्यद् दुर्लभत्वात् क एव ॥ ४६ ॥ पश्यन् रवे रश्मिगणानपीह सर्वव्याप्तानपि विष्णोर्न रश्मीन् । लोकः पश्येदिति कुत्राऽऽततानेत्याक्षिप्यते व्यक्तिमपेक्ष्य[5] रश्मेः ॥ ४७ ॥ * ॥

(४१८) अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धून् ॥
हिरण्याक्षस्सवितादेवआगाद्दधद्रत्नादाशुषेवार्याणि ॥ ८ ॥

[अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् ॥ हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥ ८ ॥]

ऊर्ध्वं मध्यमधरं चेति धन्वत्रयं तमः सुखलीनं यतस्तत् । युक्तं भवेत् तद्रतैः सर्वदैव दृढश्लेषाद् योजनं स्यात् तमो हि ॥ ४८ ॥ अष्टौ दिशः प्रकृतेर्वा पृथिव्या महदाद्याः सिन्धव-स्तान्यपश्यत्[6] । हिरण्याक्षो नरसिंहात्मना स वार्याणि यद् वरणीयं सुवित्तम्[7] ॥ ४९ ॥ * ॥

[९ जगती, निषादः स्वरः]

[निचृज्जगती[8]]

(४१९) हिरण्यपाणिस्सविताविचर्षणिरुभेद्यावापृथिवीअन्तरीयते ॥
अपामीवाम्बाधतेवेतिसूर्यमभिकृष्णेनरजसाद्यामृणोति ॥ ९ ॥

---

१ "गभीर–" इति क्वचित् । २ "भगवान् वा सुपुर्णः" इति प्र पाठः ।

३ "–दन्तरिक्षाण्यपश्यत्" इति च । ४ "विष्णुमित्यपश्यत्" इति क्वचित् ।

५ "व्यक्तिमवेक्ष्य" इत्यन्यत्र । रात्रिकाले क्वेदानीं सूर्यः, कतमां च दिशं रश्मिरस्याततानेत्यजानन्त ऋषय एतं मन्त्रमपश्यन् इति व्याख्यानं परेषां शोचनीयमेव । नहि सूर्यगतिमप्यजानन्तो बाला मन्त्रद्रष्टार इति भवति । नहि मन्त्रो नाम बालानां भाषितम् । चित्रमिदं यद् बाला अपि विद्युस्तन्न ऋषयः परावरविदो विदन्तीति ।

६ "–स्तान् व्यपश्यत्" इति पाठान्तरम् ।

७ "सुशेवः" इति क्वचित् कोशे । "सुचित्तम्" इति च । शेव इति सुखनाम । रत्नमिति सुखं च भवति । वित्तं च भवति । दधत् ददत् । "धाञ् दाने" ।

८ तृतीयपादे एकादशाक्षरत्वान्निचृत् । "वेति सूरियम्" इति व्यूहेन केवला जगती ।

[हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभेइति । द्यावापृथिवीइति । अन्तः । ईयते ॥ अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ॥ ९ ॥]

चर्षणिभ्यो यत् प्रजाभ्यो विशिष्टो विचर्षणिः केशवः सूर्यमेति । ऋणोति सम्पूरयति ॥ * ॥

[१०-११ त्रिष्टुप् छन्दः, धैवतः स्वरः]

[१०–११ विराट् त्रिष्टुप्[1]]

(४२०) हिरण्यहस्तोअसुरस्सुनीथस्सुमृळीकस्स्ववाँयात्वर्वाङ् ॥
अपसेधन्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषङ्गृणानः ॥ १० ॥

[हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् ॥ अपऽसेधन् । रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ॥ १० ॥]

स्ववान् स स्वतन्त्रत्वात् स्वर्णपात्रं सुपूर्णम् ॥ ५० ॥ दधानोऽसौ स्वर्णवर्णश्च तेन सुवर्णपाणिः[2] स्वर्णहस्तश्च देवः । पृथक्पृथक् पाणिपूर्वाङ्गवित्त्यै [3]सुवर्णवर्णः स्वर्णपाणिः [4]स उक्तः ॥ ५१ ॥ [5]एतैर्लिङ्गैर्वेति सूर्यं यतश्च सूर्यादन्यः सविता वासुदेवः । उक्तो गायत्र्या चाऽरणैस्तत्रतत्र कप्यास-पद्माक्ष इति ह्युदाख्यः ॥ ५२ ॥ * ॥

(४२१) येतेपन्थास्सवितःपूर्व्यासोरेणवस्सुकृताअन्तरिक्षे ॥
तेभिर्नोअद्यपथिभिस्सुगेभीरक्षाचनोअधिचब्रूहिदेव ॥ ११ ॥ [॥ ७ ॥]

---

१ दशममन्त्रे द्वितीयपादे द्व्यक्षरोनत्वाद् विराट् । "सुववान् यातु अर्वाङ्" इति विश्लेषेण केवला च त्रिष्टुप् । एकादशमन्त्रे च "पूर्वियासो अरेणवः" इति द्व्यक्षरव्यूहेन केवलत्वम् ।

२ "स्वर्णपाणिः" इति प्र. पाठः ।

३ "स्वर्णवर्णः" इति प्र. पाठः ।

४ "समुक्तः" इत्यपि क्वचित् ।

५ "एतैर्लिङ्गैर्वेत्ति" इति प्र. पाठः प्रामादिकः । "बाधते वेति सूर्यम्" इत्येव हि श्रुतिपाठः पूर्वं पठितः ।

[यें । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः । अन्तरिक्षे ॥ तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः ॥ रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥ ११ ॥ ७ ॥]

इति पञ्चत्रिंशं सूक्तम्

**ये पन्थानो देवयाना अमुत्र साध्या ये तेऽरेणवोऽरागतो वा । रजोहानादथवा तान् प्रदाय रक्षाधिकान् ब्रूहि नोऽथो समेभ्यः ॥ ५३ ॥ * ॥ * ॥**

इति सप्तमोऽनुवाकः

---

—३६—

**कण्वस्त्वध्यापयन् विष्णोरनुग्रहमथाऽप्नुवन् । इच्छंश्च ज्ञानवितर्ति देवांस्तुष्टाव भक्तितः ॥५४॥**
**[1]ऋक्च्छतेनावशिष्टं च जप्यस्यान्ते तु कालतः । शृण्वन्तु स्तोममित्यन्ता ददर्शैकाग्रमानसः ॥ ५५ ॥ ॥ * ॥**

---

१ यद्यपि षडुत्तरा नवतिरेव मन्त्राः कण्वदृष्टत्वेनाष्टमेऽनुवाके पठ्यन्ते । षट्त्रिंशादा त्रिचत्वारिंशं अष्टौ हि सूक्तानि कण्वदृष्टानीत्यनुक्रमणिकाकृदुवाच । चतुश्चत्वारिंशं तु नवमानुवाकस्य प्रथमं सूक्तं प्रस्कण्वेन कण्वपुत्रेण दृष्टमिति । तदेतत् सर्वमसङ्गतमित्याचार्यो ब्रवीति । चतुश्चत्वारिंशं च सूक्तं चतुर्दशर्चं कण्वदृष्टमेव । न प्रस्कण्वदृष्टम् । तेन दशोत्तरशतमन्त्राः कण्वदृष्टाः । चतुश्चत्वारिंशसूक्तान्त एव चाष्टमानुवाकपूर्तिः । ननु कथं तर्हि "प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चिनः" (३.११६) इति बृहद्देवतोक्तं सङ्घटते, शतादप्याधिक्यात्? घटते। नहि दशाधिकान् मन्त्रान् ददर्शेति शतद्रष्टा तदद्रष्टा भवति । समाधानान्तरं चोच्यते–जप्यस्यान्ते तु कालत इति । शतं मन्त्रान् सकृद् ददर्श । अवशिष्टांश्च दश मन्त्रान् कालान्तरे ददर्शेति । नच "प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे–" (४४.६.) इति लिङ्गात् तस्य सूक्तस्य प्रस्कण्व एव ऋषिरिति युक्तमिति वाच्यम् । "कण्वासस्त्वा सुतसोमास इन्धते (४४. ८.) इति कण्वस्यापि श्रवणात् । आत्मार्थेऽपि बहुवचनसम्भवात् । पूर्वमपि कण्वदृष्ट एव मन्त्रे "यं कण्वो मेध्यातिथिः" (३६. १०.) इत्यादि कण्वपुत्रः श्रुतः । तस्मान्मन्त्रोक्तमलिङ्गं भवति ।

[प्रवो यह्वम् विंशतिः, कण्वो घौरः, प्रगाथः, अग्निः[1]]

[१–एकोना विराट् पथ्या बृहती, मध्यमः स्वरः]

(४२२) प्रवोयह्वम्पुरूणांविशान्देवयतीनाम् ॥

अग्निंसूक्तेभिर्वचोभिरीमहेयंसीमिदन्यईळते ॥ १ ॥

[प्र । वः । यह्वम् । पुरूणाम् । विशाम् । देवऽयतीनाम् ॥ अग्निम् । सुऽउक्तेभिः । वचःऽभिः । ईमहे । यम् । सीम् । इत् । अन्ये । ईळते ॥ १ ॥]

**बह्वाधेयत्वतः [2]पुत्रं बहूनां वो हुताशनम् । [3]बहुज्ञेयत्वतो विष्णुं वेमहे हे प्रजाः सदा ॥ ५६ ॥**
**देवज्ञानाद् वा [4]यजनाद् देवयत्यः समीळते । यमन्ये च जनाः सन्तः ॥ * ॥**

[२–निचृत् सतोबृहती पंक्तिः[5], पञ्चमः स्वरः]

(४२३) जनासोअग्निन्दधिरेसहोवृधंहविष्मन्तोविधेमते ॥

सत्वन्नोअद्यसुमनाइहाविताभवावाजेषुसन्त्य ॥ २ ॥

---

१ "आग्नेयं प्रेति" (३. १०७) इति बृहद्देवता । "प्रवो विंशतिः, कण्वो घौरः, आग्नेयम्, प्रागाथम्," इत्यनुक्रमणिका च । प्रगाथ इति बृहतीविशेष एव । यस्मिन् सूक्ते बृहती च सतोबृहती च छन्दो भवति तत् प्रागाथं सूक्तम् । "बृहतीसतोबृहत्यौ बार्हतप्रगाथः" इति हि वदन्ति । तत्र प्रथममन्त्रे पथ्याबृहती । "जागतः पादो यदि तृतीयो भवति, अन्ये गायत्राः, तदाऽसौ बृहती पथ्या नाम च्छन्दो भवति" इति हि हलायुधः । पूर्वार्धे द्व्यक्षरोनत्वाद् विराट् । तृतीयपादेऽप्येकादशाक्षरत्वात् पुनरेकोना । पुरुउनाम्, देवयतीइनाम्, सुउक्तेभिः इति व्यूहेन केवला पथ्या बृहती । इमां केवलामपि बृहतीं वदन्ति । तथाहि–"आदितोऽष्टाक्षरौ पादौ तृतीयो द्वादशाक्षरः । चतुर्थोऽष्टाक्षरश्चेति बृहती खलु वै भवेत्" इति ।

२ यह्वं पुत्रम् । "अपत्यम् । यहुः । सूनुः" (२. २.) इति निघण्टुः ।

३ "ब्रह्मज्ञेय–" इति क्वचित् । ४ "–ज्ञानाद् वा जयाद् देव–" इति च ।

५ सतोबृहतीति पङ्क्तिविशेषश्छन्दः । अत एव पिङ्गलः "सतःपङ्क्तिः" इत्येतामाजुहाव । "पूर्वौ चेदयुजौ सतःपङ्क्तिः" (३. ३८.) इति तत्सूत्रात् । "प्रथमतृतीयौ पादौ जागतौ, द्वितीयचतुर्थौ गायत्रौ तच्छन्दः सतःपङ्क्तिर्नाम भवति" इति च हलायुधोऽप्याह । सायणादयस्तु सतोबृहतीत्येवाऽहुः । "अयुजौ जागतौ सतोबृहती" इति हि श्रूयते । अत्र तु चतुर्थपादे सप्ताक्षरत्वान्निचृत्त्वम् । "सन्तिय" इति पादपूरणे च केवला सतोबृहती ।

[जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः । विधेम । ते ॥ सः ।
त्वम् । नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । सन्त्य ॥ २ ॥]

सहसा वायुनेधितम्[1] ॥ ५७ ॥ धारयन्ति जनास्तस्य कर्म कुर्मो वयं च ते । [2]सन्त्यः सम्यक् ततो विष्णुर्वायोरपि विवृद्धिकृत् ॥ ५८ ॥ * ॥

[३–निचृत् पथ्याबृहती[3], मध्यमः स्वरः ।]

(४२४) प्रत्वादूतंवृणीमहेहोतारंविश्ववेदसम् ॥
महस्तेसतोविचरन्त्यर्चयोदिविस्पृशन्तिभानवः ॥ ३ ॥

[प्र । त्वा । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् ॥ महः । ते । सतः ।
वि । चरन्ति । अर्चयः । दिवि । स्पृशन्ति । भानवः ॥ ३ ॥]

[४–निचृत् सतोबृहती पंक्तिः[4], पञ्चमः स्वरः]

(४२५) देवासस्त्वावरुणोमित्रोअर्यमासन्दूतम्प्रत्नमिन्धते ॥
विश्वंसोअग्नेजयतित्वयाधनंयस्तेददाशमर्त्यः ॥ ४ ॥

[देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सम् । दूतम् । प्रत्नम् । इन्धते ॥
विश्वम् । सः । अग्ने । जयति । त्वया । धनम् । यः । ते । ददाश । मर्त्यः ॥४॥

प्रततेः पुरातनत्वाद् वा प्रत्नः ॥ * ॥

---

१ "वायुनैधितम्" इति प्र. पाठः ।     २ "सम्यक्त्वतो–" इति प्र. पाठः प्रामादिकः ।

३ तृतीयपादे एकादशाक्षरत्वात् निचृत्त्वम् । "विचरन्ति अर्चयः" इति विश्लेषेण केवला पथ्याबृहती ।

४ पूर्वार्धे विंशतिरक्षराणि । उत्तरार्धे चैकोना विंशतिरिति निचृत् सतोबृहती पंक्तिर्भवति । द्वितीयपादे "अरियमा" इति, चतुर्थे च "मर्तियः" इति व्यूहे कृते प्रथमपादे नवाक्षरत्वादेकाक्षराधिक्यं भवति । ततश्चेयं "भुरिक् सतोबृहती" भवति । केवलमुत्तरार्धे एव व्यूहे केवला सतोबृहती ।

[५–निचृत् पथ्याबृहती[१], मध्यमः स्वरः]

(४२६) मन्द्रोहोतागृहपतिरग्नेदूतोविशामसि ॥

त्वेविश्वासङ्गतानिव्रताध्रुवायानिदेवाअकृण्वत ॥ ५ ॥ [॥ ८ ॥]

[मन्द्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि ॥ त्वेइति । विश्वा । सम्ऽगतानि । व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥ ५ ॥ ८ ॥]

**मन्द्रो महामखः ॥ * ॥**

[६–एकोना विराट् सतोबृहती पंक्तिः[२], पञ्चमः स्वरः]

(४२७) त्वेइदग्नेसुभगेयविष्ठ्यविश्वमाहूयतेहविः ॥

सत्वन्नोअद्यसुमनाउतापरंयक्षिदेवान्त्सुवीर्या ॥ ६ ॥

[त्वेइति । इत् । अग्ने । सुऽभगे । यविष्ठ्य । विश्वम् । आ । हूयते । हविः ॥ सः । त्वम् । नः । अद्य । सुऽमनाः । उत । अपरम् । यक्षि । देवान् । सुऽवीर्या ॥ ६ ॥]

**देवान् सुवीर्याद् यजसि ॥ * ॥**

[७–पथ्याबृहती, मध्यमः स्वरः]

(४२८) तङ्घेमित्थानमस्विनउपस्वराजमासते ॥

होत्राभिरग्निम्मनुषस्समिन्धतेतितिर्वांसोअतिस्रिधः ॥ ७ ॥

[तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते ॥ होत्राभिः । अग्निम् । मनुषः । सम् । इन्धते । तितिर्वांसः । अति । स्रिधः ॥ ७ ॥]

---

१ तृतीयपादे एकादशाक्षरत्वात् निचृत् । "तुवे" इति व्यूहेन केवला च ।

२ प्रथमपादे द्व्यक्षरोनत्वाद् विराट् । चतुर्थे पुनरेकाक्षरोनत्वादेकोना विराट् । "तुवे", "यविष्ठिय" इति प्रथमपादे, "सुवीरिया" इति च चतुर्थपादे व्यूहेन केवलेयं सतोबृहती ।

तं हि त्वामेव सर्वदा। उपासते नमस्यन्तः सन्तस्तीर्णास्तु संसृतेः ॥ ५९ ॥ त्रिधो ह्यतितिति-र्वांसस्तीर्णदुःखा इहैव वा। [1]त्वत्प्रसादेन विद्वांसः प्राप्य ब्राह्मण्यमुत्तमम् ॥ ६० ॥ * ॥

[८–विराट् सतोबृहती पंक्तिः[2], पञ्चमः स्वरः]

(४२९) घ्नन्तोवृत्रमतरन्रोदसीअपउरुक्षयायचक्रिरे ॥

भुवत्कण्वेवृषाद्युम्न्याहुतःक्रन्ददश्वोगविष्टिषु ॥ ८ ॥

[घ्नन्तः । वृत्रम् । अतरन् । रोदसीइति । अपः । उरु । क्षयाय । चक्रिरे ॥ भुवत् । कण्वे । वृषा । द्युम्नी । आऽहुतः । क्रन्दत् । अश्वः । गोऽइष्टिषु ॥ ८ ॥]

तमो घ्नन्तोऽतरन् लोकानपः कर्माणि चोत्तमाः। उरु ब्रह्म क्षितित्वेन[3] चक्रुस्तत्रैव संस्थितेः॥ ६१॥ वृषा स भगवान् विष्णुर्मुनौ कण्वेऽभवत् स्थितः। [4]क्रन्ददश्वस्वरूपश्च ज्ञानस्यान्वेषणे कृते। ततः कण्वान्निस्सरन्ति शुद्धा वेदानुगा गिरः॥ ६२ ॥ द्युतिमत्त्वात् स तु द्युम्नी ॥ * ॥

[९–निचृत् पथ्याबृहती[5], मध्यमः स्वरः]

(४३०) संसीदस्वमहाँअसिशोचस्वदेववीतमः ॥

विधूममग्नेअरुषम्मियेध्यसृजप्रशस्तदर्शतम् ॥ ९ ॥

[सम् । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः ॥ वि । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रऽशस्त । दर्शतम् ॥ ९ ॥]

---

१ "तत्प्रसादेन" इत्यन्यत्र।

२ तृतीयपादे जागते दशाक्षरत्वात् विराट्। व्यूहेन च केवलत्वं सम्पाद्यम्। तद्यथा—"दियुम्नियाहुतः" इति।

३ अपः उरु क्षयाय चक्रिरे इति चत्वारि पदानि व्याख्यातानि—अपः कर्माणि उरु ब्रह्म क्षितित्वेन चक्रुरिति भाष्यपदैः। अत्रैवं भाति—अप इति षष्ठ्यर्थे द्वितीया। उरु पूर्णं ब्रह्म अपां कर्मणां क्षयाय क्षितित्वेन चक्रुः। सर्वं कर्म ब्रह्मार्पणं चक्रुरिति। भाष्ये च कर्माणि प्रतीत्यध्याहार्यम्। यद्वा कर्माणि चक्रुरुत्तमाः। यच्चक्रुस्तस्य चोरु ब्रह्म क्षितित्वेन चक्रुरिति प्रत्येकं क्रियान्वयः। यद्वा उरुब्रह्मक्षितित्वेनेत्येकं पदम्। श्रुतौ च 'उरुक्षयाय' इत्येकं पदम्। पदपाठस्त्वयोगव्यवच्छेद एवेत्युक्तम्। अत एव टीकायाम्—"उरुः पूर्णस्त्वमेव क्षय आश्रयस्तस्मै" इति व्याख्यातम्। तदिदं व्याख्यानमैकपद्ये हि स्वरसम्।

४ "क्रन्दन्नश्व–" इत्यपि क्वचित्। एतत्पाठे क्रन्ददिति भिन्नं पदमिति द्योतितं भवति।

५ तृतीयपाद एकाक्षरोनेति निचृत्। "मियेधिय" इति व्यूहेन केवला पथ्याबृहती।

देवेषु ज्ञानवत्तमः । स त्वं शोचस्व दीप्यस्व धूमः संसारधूत्कृतिः[1] । अरुषो रोषहीनत्वाद् धूमश्चेच्छुभगन्धनात्[2] ॥ ६३ ॥ * ॥

[१०–निचृत् सतोबृहती पंक्तिः[3], पञ्चमः स्वरः ।]

(४३१) यन्त्वादेवासोमनवेदधुरिहयजिष्ठंहव्यवाहन ॥
यङ्कण्वोमेध्यातिथिर्धनस्पृतंयंवृषायमुपस्तुतः ॥ १० ॥ [॥ ९ ॥]

[यम् । त्वा । देवासः । मनवे । दधुः । इह । यजिष्ठम् । हव्यऽवाहन ॥ यम् । कण्वः । मेध्यऽअतिथिः । धनऽस्पृतम् । यम् । वृषा । यम् । उपऽस्तुतः ॥
॥ १० ॥ ९ ॥]

[११–निचृत् पथ्याबृहती[4]]
[११–१३, मध्यमः स्वरः]

(४३२) यमग्निम्मेध्यातिथिःकण्वईधऋतादधि ॥
तस्यप्रेषोदीदियुस्तमिमाऋचस्तमग्निंवर्द्धयामसि ॥ ११ ॥

[यम् । अग्निम् । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् । अधि ॥ तस्य । प्र । इषः । दीदियुः । तम् । इमाः । ऋचः । तम् । अग्निम् । वर्द्धयामसि ॥॥ ११ ॥]

यं सुतो मे समीधेऽग्निं मेध्यातिथि ऋतादधि[5] । उक्त्वा सत्यां वेदवाचं देयान्यन्नानि तस्य हि ॥ ६४ ॥ तं प्रतीमा ऋचः सर्वाः प्रकाशाद् वर्द्धयाम तम् । इन्धनं तु हरेर्नान्यत् क्वचिदस्ति प्रकाशनात् ॥ ६५ ॥ * ॥

---

१ "–धूत्कृतेः" इति प्र. पाठः ।

२ "–गन्धवान्" इत्यन्यत्र । शुभगन्धेन याज्ञिकान् प्रसादयति, न चक्षुः क्लेशयतीति तस्यारोषत्वमुच्यते । प्रसन्नो ह्येवं कुर्यान्न रुष्टः । एतेन 'अरुषम्, आरुषम्, आरोचमानम्' इत्याङोऽयमकार इति वदन्तः परास्ताः ।

३ तृतीयपादे "मेधियातिथिः" इति व्यूहे केवला सतोबृहती ।

४ प्रथमपादे "मेधियातिथिः" इति व्यूहेन केवला पथ्याबृहती । मेध्यअतिथिरिति वा ।

५ "मेध्यातिथिर्ऋतादधि" इति च क्वचित् पाठः । "मेध्यातिथि ऋतादधि" इति पाठे "शक्य अहमेवंविधोऽर्जुन" इत्यादिवदार्षो विसर्गलोपः । "त्रुटि युगायते" इति च यथा भागवते ।

[१२–एकोना विराट् पथ्याबृहती[1]]

(४३३) रायस्पूर्धिस्वधावोस्तिहितेअग्नेदेवेष्वाप्यम् ॥
त्वंवाजस्यश्रुत्यस्यराजसिसनोमृळमहाँअसि ॥ १२ ॥

[रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यम् ॥ त्वम् । वाजस्य । श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् । असि ॥ १२ ॥]

**वित्तानि पूरयास्माकं देवेष्वप्याप्यमस्ति ते । यज्ञभागादिपूज्यत्वात् स्वधावः सुखवर्तकः[2] । श्रुत्यवाजो यज्ञभागो राजा भवसि तस्य हि ॥ ६६ ॥ * ॥**

[१३—पथ्याबृहती[3]]

(४३४) ऊर्ध्वऊषुणऊतयेतिष्ठादेवोनसविता ॥
ऊर्ध्वोवाजस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥

[ऊर्ध्वः । ऊँइति । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता ॥ ऊर्ध्वः । वाजस्य । सनिता । यत् । अञ्जिऽभिः । वाघत्ऽभिः । विऽह्वयामहे ॥ १३ ॥]

**अस्मद्रक्षाकृते नित्यं सूद्यतो भव विष्णुवत् । विष्णुश्चेत् स्वात्मदृष्टान्तो नोऽन्नदाता तथोद्यमी ॥ ६७ ॥ यत् स्तुवद्भिर्द्विजैर्युक्ताः स्नेहैस्त्वां विह्वयामहे ॥ * ॥**

---

१ तृतीयपादे जागते दशाक्षरत्वाद् विराट् । द्वितीये गायत्रे सप्ताक्षरत्वात् पुनरेकोना । "देवेषुआप्यम्" इति द्वितीये, "तुवं वाजस्य श्रुतियस्य" इति च तृतीये व्यूहेन केवला पथ्याबृहती । अथवा "विषमा बृहत्यः समाः सतोबृहत्यः" इति श्रवणात् सतोबृहत्येवेयमृक् । तत्र "रायस्पूर्धि सुवधावो अस्ति हि ते" इति प्रथमपादे व्यूहेन द्वादशाक्षरत्वम् । "अग्ने देवेषु आपियम्" इति व्यूह्याष्टाक्षरो द्वितीयः पादः । तृतीये पूर्ववत् "तुवं वाजस्य श्रुतियस्य राजसि" इति समानम् । चतुर्थश्चाव्यूहेनैवाष्टाक्षरः पाद इति सतोबृहती । तदात्वे च पञ्चमः स्वरः । पङ्क्तिविशेषत्वात् ।

२ "सुखवर्द्धकः" इति प्र. पाठः ।

३ यद्यप्यनुक्रमणिकाकृत् "ऊर्ध्व ऊषु यौप्यौ" इति त्रयोदशं चतुर्दशं च मन्त्रं यूपदेवतमाह । तच्चिन्त्यम् । लिङ्गादर्शनादिति व्याख्यातारो वदन्ति । यद्यपि शौनको लिङ्गतो न दैवतानि ज्ञेयानि भवन्ति । किन्त्वादेशाद्देवेत्याह । तथाहि तद्वचनम्–"आदेशाद् दैवतं ज्ञेयमृङ्मन्त्राणां न लिङ्गतः । न शक्यं लिङ्गतो ह्यासां ज्ञातुं तत्त्वेन दैवतम्"

[१४–निचृत् सतोबृहती पंक्तिः[1], पञ्चमः स्वरः]

(४३५) ऊर्ध्वोनःपाह्यंहसोनिकेतुनाविश्वंसमत्रिणन्दह ॥
कृधीनऊर्ध्वाञ्चरथायजीवसेविदादेवेषुनोदुवः ॥ १४ ॥

[ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुना । विश्वम् । सम् । अत्रिणम् । दह । कृधि । नः । ऊर्ध्वान् । चरथाय । जीवसे । विदाः । देवेषु । नः । दुवः ॥ १४ ॥]

ज्ञानेन पाहि नितरामुद्यम्युच्चगुणोऽपि नः ॥ ६८ ॥ असुरा[2] अत्रयः प्रोक्ता मार्गत्रयविवर्जिताः । स्वर्गापवर्गमानुष्यं त्यक्त्वा यान्ति तमो हि ते । अदन्तीत्यथ रक्षांसि वाऽत्रयोऽधिकभक्षणात् ॥ ६९ ॥ भोगाय जीवनायापि स्वलोकचरणाय च । उत्तमान् कुरु नो नित्यं दोहनानि च लम्भय । देवेभ्योऽखिलकाम्यानि सदा[3] नोऽतिमहान्ति च ॥ ७० ॥ * ॥

[१५–विराट् पथ्याबृहती[4]]
[१५–१७ मध्यमः स्वरः]

(४३६) पाहिनोअग्नेरक्षसःपाहिधूर्तेरराव्णः ॥
पाहिरीषतउतवाजिघांसतोबृहद्भानोयविष्ठ्य ॥ १५ ॥ [॥ १० ॥]

[पाहि । नः । अग्ने । रक्षसः । पाहि । धूर्तेः । अराव्णः ॥ पाहि । रिषतः । उत । वा । जिघांसतः । बृहद्भानोइतिबृहत्ऽभानो । यविष्ठ्य ॥ १५ ॥ १० ॥]

---

इति बृहद्देवतायाम् । "उक्तमन्त्रर्षिणा पूर्वमादेशाद् दैवतं विना । ज्ञातुं न शक्यते लिङ्गात् तथाऽपि क्वचिदुच्यते" (३. ११०.) इति च । सत्यम् । आदेशाश्च ऋक्संहितादय एव मुख्यतो भवन्ति । नानुक्रमणिका बृहद्देवता वा । तत्राप्यादेशपरम्पराविच्छेददर्शनात् । तदुक्तं पूर्वमेवाऽचार्यैः—"ऋक्संहितायाः स्वाध्यायात् प्रबन्धाद् व्यासनिर्मितात् । ब्राह्मणेभ्यस्तथा मानात् प्रोक्ताः स्युर्मुनयोऽत्र ये" इति । "श्रुतिलिङ्गान्यता यावत् तावत् पूर्वप्रमा भवेत्" इति च । देवताया अप्युपलक्षणमिदम् । यूपोच्छ्रयणे विनियोगात्तद्देवतत्वं च स्यादिति भाति । अग्निरेव हि यूपदेवता ।

१ "पाहि अंहसः" इति व्यूहेन केवला सतोबृहती ।

२ "आसुराः" इत्यपि पाठः । "अत्रिशब्दो रक्षोवचनः" इति स्कन्दस्वामी ।

३ "–काम्यानि समम्" इति क्वचित् ।

४ "अरावणः" इति व्यूहेन, "यविष्ठिय" इति व्यूहेन च केवला पथ्याबृहती ।

अरं छिद्रं प्रापयतीत्यरावा पापपूरुषः। धूर्त्कृतेस्तस्य नो रक्ष नश्यतोऽस्मदघाय च[1] ॥ ७१ ॥ यवीयस्तु स्थितत्वेन यविष्ठो हरिरुच्यते। ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एव यत्। अग्निर्यविष्ठ्य इत्युक्तो यदाधिक्यार्थतोऽधिकम् ॥ ७२ ॥ * ॥

[१६—बृहती[2]]

(४३७) घनेवविष्वग्विजह्यराव्णस्तपुर्जम्भयोअस्मध्रुक् ॥

योमर्त्यश्शिशीतेअत्यक्तुभिर्मानस्सरिपुरीशत ॥ १६ ॥

[घनाऽइव । विष्वक् । वि । जहि । अराव्णः । तपुःऽजम्भ । यः । अस्मऽध्रुक् ॥ यः । मर्त्यः । शिशीते । अति । अक्तुऽभिः । मा । नः । सः । रिपुः । ईशत ॥ ॥ १६ ॥]

वायुर्मेघानिव जहि सर्वतः[3] पापपूरुषान्। अस्मद्द्रोही च यस्तं च तापेनैवात्ति यत् ततः ॥७३॥ तपुर्जम्भः शिशीते यस्तीक्ष्णो भवति सर्वदा। नेशो भवतु सोऽस्माकं दुरात्मा पापपूरुषः ॥७४॥ ॥ * ॥

[१७-विराट् पथ्याबृहती[4]]

(४३८) अग्निर्वव्नेसुवीर्यमग्निःकण्वायसौभगम् ॥

अग्निःप्रावन्मित्रोतमेध्यातिथिमग्निस्साताउपस्तुतम् ॥ १७ ॥

[अग्निः । वव्ने । सुऽवीर्यम् । अग्निः । कण्वाय । सौभगम् ॥ अग्निः । प्र । आवत् । मित्रा । उत । मेध्यऽअतिथिम् । अग्निः । साता । उपऽस्तुतम् ॥१७॥]

---

१ "नश्यतोऽस्मद्वधाय च" इति प्र. पाठः। प्राचीनपाठे अस्मदघाय रिषतः नश्यतः इत्यन्वयः। साधूनामघं प्रसञ्जयितुमात्मनाशमपि न बहु मन्यते हि खलः। तथाच आत्मनाशेनापि साधूनामनिष्टमिच्छन् रिषन्नुच्यते। साधूनां वधाय प्रवर्तमानः जिघांसन्निति।

२ दशाक्षरौ प्रथमतृतीयौ, अष्टाक्षरौ द्वितीयचतुर्थौ यदा तदा च बृहती भवति। उक्तं हि पिङ्गलनागेन—"वैराजौ गायत्रौ च" (३. ३४.) इति। वैराजाविति दशाक्षरौ। "विषुवग् विजहि अराव्णः" इति प्रथमपादे," मर्तियः शिशीते अतिअक्तुभिः" इति च तृतीयपादे व्यूहेन जागतत्वे सतोबृहती भवति। तदात्वे तु पञ्चमः स्वरः।

३ "सर्वशः" इत्यपि पठ्यते।

४ "सुवीरियम्" इति, "मेध्यअतिथिम्" इति च व्यूहेन केवला पथ्याबृहती।

सुवीर्यं सौभगं चैव ममेशः समभाजयत् । मेध्यातिथिं सुतं चैव मित्राणि च ररक्ष मे । उपस्तुतं चैव मुनिं सातौ लाभे ररक्ष ह ॥ ७५ ॥ * ॥

[१८–सतोबृहती पंक्तिः, पञ्चमः स्वरः]

(४३९) अग्निनातुर्वशंयदुम्परावतउग्रादेवंहवामहे ॥

अग्निर्नयन्नववास्त्वम्बृहद्रथन्तुर्वीतिन्दस्यवेसहः ॥ १८ ॥

[अग्निना । तुर्वशम् । यदुम् । पराऽवतः । उग्रऽदेवम् । हवामहे ॥ अग्निः । नयत् । नवऽवास्त्वम् । बृहत्ऽरथम् । तुर्वीतिम् । दस्यवे । सहः ॥ १८ ॥]

तुर्वशादींस्तथा राज्ञो वयं तेन हवामहे । तुरोऽपि [1]यद्वशो विष्णुः स च तुर्वशनामवान् । यदस्ति तत उच्चत्वाद् यदुरुग्रोऽसुरान् प्रति ॥ ७६ ॥ तमेव तत्प्रसादेन ह्वयामोऽनयदेव सः । नववास्त्वादिकान् राज्ञो बलं दस्युविनिग्रहे ॥ ७७ ॥ * ॥

[१९–पथ्याबृहती, मध्यमः स्वरः]

(४४०) नित्वामग्नेमनुर्दधेज्योतिर्जनायशश्वते ॥

दीदेथकण्वऋतजातउक्षितोयन्नमस्यन्तिकृष्टयः ॥ १९ ॥

[नि । त्वाम् । अग्ने । मनुः । दधे । ज्योतिः । जनाय । शश्वते ॥ दीदेथ । कण्वे । ऋतऽजातः । उक्षितः । यम् । नमस्यन्ति । कृष्टयः ॥ १९ ॥]

मनुष्यः सन्नहं त्वां तु ज्योतिर्मुक्तजनाय च । निदधे हृदि स त्वं च दीप्यसे मयि सर्वदा ॥ ७८ ॥ ब्रह्मजोऽग्निर् ऋताद् वेदवाचोऽभिव्यज्यते हरिः । उक्षितः [2]स्वगुणैः सर्वैर्युक्तः ॥ * ॥

[२०–सतोबृहती पंक्तिः, पञ्चमः स्वरः ।]

(४४१) त्वेषासोअग्नेरमवन्तोअर्चयोभीमासोनप्रतीतये ॥

रक्षस्विनस्सदमिद्यातुमावतोविश्वंसमत्रिणन्दह ॥ २० ॥ [॥ ११ ॥]

---

१ "यद्वशो" इत्यन्यत्र ।

२ "स गुणैः" इत्यपि पाठान्तरम् ।

[त्वेषासः । अग्नेः । अमऽवन्तः । अर्चयः । भीमासः । न । प्रतिऽइतये ॥ रक्षस्विनः । सदम् । इत् । यातुऽमावतः । विश्वम् । सम् । अत्रिणम् । दह ॥ २० ॥ ११ ॥]

इति षट्त्रिंशं सूक्तम्

**अमेयाश्च शक्तयः । त्वेषा इत्युदितास्तस्य हरे रश्मय एव च ॥ ७९ ॥ भीमा न प्रतिगन्तुं च शक्या राक्षसपक्षिणः । यातवो जङ्गमास्तेषां हिंसनावांस्तु राक्षसः ॥ ८० ॥ यातुमावानिति प्रोक्तो यातनानुभवात् क्वचित् । यातुरित्येव च प्रोक्तः सन्तं प्रत्यनुकूलतः ॥ ८१ ॥ स्थितास्ताः शक्तयो विष्णोः ॥ * ॥ * ॥**

३७

[[1]क्रीळं वः पञ्चदश, कण्वो घौरः, गायत्री, मरुतः, षड्जः ।]

**(४४२) क्रीळंवश्शर्धोमारुतमनर्वाणंरथेशुभम् । कण्वाअभिप्रगायत ॥ १ ॥**

**[क्रीळम् । वः । शर्धः । मारुतम् । अनर्वाणम् । रथेऽशुभम् ॥ कण्वाः । अभि । प्र । गायत ॥ १ ॥]**

**क्रीडाशीलं च मारुतम् । शर्धः [2]सुखबलाढ्यं [3]चाप्यनर्वाणमनिन्द्रियम् ॥ ८२ ॥ न वायोरिन्द्रियाणां हि देवाः सन्त्यभिमानिनः । अतोऽनिन्द्रियता तस्य रथे देहे शुभश्च सः । कण्वास्तं गायताभीक्ष्णं विष्णुं वा तादृशं[4] गुणैः ॥ ८३ ॥ * ॥**

---

१ "मरुतां क्रीळं त्रीणि पराण्यतः" (३. १०७.) इति बृहद्देवतायां शौनकः । "क्रीळं पञ्चोना, मारुतं हि, गायत्रं तु" इत्यनुक्रमणिकायां कात्यायनः । पञ्चोना विंशतिः पञ्चदश । हिशब्दः सङ्केतितत्वादुत्तरस्यापि सूक्तद्वयस्य मारुतत्वमाह । शौनकोऽपि मरुतां त्रीणीति किलाऽह । तुशब्दः उत्तरस्यापि सूक्तस्य गायत्रत्वमाह । "तुहिहवैतच्छन्दविशिष्टान्यृषिदैवतच्छन्दांसि द्वित्रिचतुष्पञ्चषट्सूक्तभाञ्जि" इति हि परिभाषा ।

२ सुखाढ्यं बलाढ्यं च । "शर्धः । बाधः । नृम्णम् । तविषी । शुष्मम्" (२. ९.) इति बलनामसु निघण्टुः । शं सुखम् । तेनर्द्धः शर्द्धः सुखाढ्यः ।

३ "वाऽप्यन–" इति प्र. पाठः । ४ "तादृशैः" इति प्र. पाठः ।

(४४३) येपृषतीभिरृष्टिभिस्साकंवाशीभिरञ्जिभिः । अजायन्तस्वभानवः ॥ २ ॥

[ये । पृषतीभिः । ऋष्टिऽभिः । साकम् । वाशीभिः । अञ्जिऽभिः ॥
अजायन्त । स्वऽभानवः ॥ २ ॥]

पृषत्यो वाहनान्येषामन्यदायुधमुच्यते । स्वप्रकाशोऽथवा [1]विष्णुस्तल्लिङ्गैर्व्यज्यते सह । तत्तद्देव-गतस्यापि विष्णोर्लिङ्गं च तद् भवेत् ॥ ८४ ॥ * ॥

[३–निचृद् गायत्री[2]]

(४४४) इहेवशृण्वएषाङ्कशाहस्तेषुयद्वदान् । नियामंश्चित्रमृञ्जते ॥ ३ ॥]

[इहऽइव । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् ॥
नि । यामन् । चित्रम् । ऋञ्जते ॥ ३ ॥]

यत् ते वदन्ति वचनं मेघनादात्मकं हि तत् । इहापि श्रूयत इव वर्णाव्यक्तेरिवेति च ॥ ८५ ॥ हस्तेष्वेषां कशाः सन्ति चित्रं मार्गेऽधिगम्यते । रेण्वादिसर्ववस्तूनां गमनान्मार्गचित्रता । विष्णोः [3]सर्वं जगच्चित्रं मार्गे सम्प्रेर्यतेऽमुना ॥ ८६ ॥ * ॥

(४४५) प्रवश्शर्धायघृष्वयेत्वेषद्युम्नायशुष्मिणे । देवत्तम्ब्रह्मगायत ॥ ४ ॥

[प्र । वः । शर्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे ॥
देवत्तम् । ब्रह्म । गायत ॥ ४ ॥]

शोधकाय प्रधानाय वो बलाय च वायवे । शुद्धाय वा सुप्रकाशज्ञानायातिबलाय च । गायत ब्रह्म देवत्तं देवेषु ततमीश्वरम् ॥ ८७ ॥ प्रीतिर्वायोर्विष्णुगमनाद् वेदाख्यं ब्रह्म विष्णवे । देवैरधी-यमानत्वाद् देवत्तं ब्रह्म वैष्णवम् ॥ ८८ ॥ * ॥

---

१ "विष्णुस्तैर्लिङ्गै–" इति प्र. पाठः ।

२ प्रथमपादे "इहइव" इति व्यूहेनाष्टाक्षरत्वे केवला गायत्री ।

३ "सर्वजगच्चित्रम्" इत्यपि क्वचित् पठ्यते ।

[५–विराड् गायत्री[1]]

(४४६) प्रशंसागोष्वघ्न्यंक्रीळंयच्छर्धोमारुतम् । जम्भेरसस्यवावृधे ॥ ५ ॥ [॥ १२ ॥]

[प्र । शंस । गोषु । अघ्न्यम् । क्रीळम् । यत् । शर्धः । मारुतम् ॥
जम्भे । रसस्य । ववृधे ॥ ५ ॥ १२ ॥]

अहन्तव्यत्वतस्त्वघ्न्यं वायुं वृषभरूपिणम् । क्रीडन्तं वेदरूपासु गोषु तं स्तुहि मारुतम् ॥ ८९ ॥ माभिर्वेदैः स्तुतत्वेन मारुतो विष्णुरेव वा । भक्षणार्थं रसस्यासौ ववृधे मरुतां पिता ॥ ९० ॥ * ॥

(४४७) कोवोवर्षिष्ठआनरोदिवश्चग्मश्चधूतयः । यत्सीमन्तन्नधूनुथ ॥ ६ ॥

[कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः ॥
यत् । सीम् । अन्तम् । न । धूनुथ ॥ ६ ॥

आ समन्तादुत्तमः कः प्रधानो वायुरेव वः[2] । विष्णोराक्षेप एव स्यात् को नामास्ति परस्त्विति । तत्पर्यन्तं च वर्षिष्ठः को भवेदिति वा भवेत् ॥ ९१ ॥ आ धूतयो दिवो ग्मश्च भूम्या इत्यन्वयो भवेत् । तस्मादन्तं प्रतीवैतज्जगत् सन्धूनुथाखिलम् ॥ ९२ ॥ * ॥

(४४८) निवोयामायमानुषोदध्रउग्रायमन्यवे । जिहीतपर्वतोगिरिः ॥ ७ ॥

[नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे ॥
जिहीत । पर्वतः । गिरिः ॥ ७ ॥]

नीचैर्धृतो मानुषो वो मार्गायोग्राय मन्यवे । न पूर्यते च कोपाय स्वल्पत्वान्मानुषः क्वचित् ॥ ९३ ॥ बहुपर्वयुतोऽत्युच्चगिरिर्मार्गे हि वोऽत्यजत् । मूलम् ॥ * ॥

(४४९) येषामज्मेषुपृथिवीजुजुर्वाँइवविश्पतिः । भियायामेषुरेजते ॥ ८ ॥

---

१ प्रथमपादे "गोषु अघ्नियम्" इति विश्लेषेणाष्टाक्षरत्वे केवला गायत्री ।

२ "वायुरेव वा" इत्यन्यत्र ।

[येषाम् । अज्मेषु । पृथिवी । जुजुर्वान्ऽइव । विश्पतिः ॥
भिया । यामेषु । रेजते ॥ ८ ॥]

येषां तथाऽज्मेषु मार्गेष्वतिभिया धरा । कम्पते जीर्णराजेव ॥ * ॥

[९–निचृद् गायत्री[1]]

(४५०) स्थिरंहिजानमेषांवयोमातुर्निरेतवे । यत्सीमनुद्विताशवः ॥ ९ ॥

[स्थिरम् । हि । जानम् । एषाम् । वयः । मातुः । निःऽएतवे ॥
यत् । सीम् । अनु । द्विता । शवः ॥ ९ ॥]

स्थिरं वो जननं यतः ॥ ९४ ॥ जाता वायोर्दिवि वयो मातुः प्राप्ता निरेतवे । निर्गन्तुं तत्क्षणेनैव सर्वलोकाटनाय हि । यौवनं ते युवानो हि निसर्गान्मातुरा जनेः ॥ ९५ ॥ मातुरेव प्रसादेन सम्यक्[2] च द्विविधं बलम् । प्रज्ञाबाहुभवं यस्मात् तस्मात् ॥ * ॥

[१०–पिपीलिकामध्या निचृद्गायत्री[3]]

(४५१) उदुत्येसूनवोगिरःकाष्ठाअज्मेष्वत्नत । वाश्राअभिज्ञुयातवे ॥ १० ॥ [॥ १३ ॥]

[उत् । ऊँइति । त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु । अत्नत ॥
वाश्राः । अभिऽज्ञु । यातवे ॥ १० ॥ १३ ॥]

दिश उदापिरे ॥ ९६ ॥ ते गिरः सूनवो देव्या वाश्रा वचनशीलिनः । अभिजन्मानुसारेण गुणान् यातुमुदापिरे ॥ ९७ ॥ * ॥

---

१ एषामिति त्रीण्यक्षराणि । तथाहि अनुभूतिस्वरूपाचार्यः प्राह सारस्वते व्याकरणे–"ए स्भि बहुत्वे" (१३५) इति । अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति" इति हि तदर्थः । तेन एकारः एकमक्षरम् । "सुडामः" (१५०) इत्यामः सुडागमे षकारो द्वितीयमक्षरम् । आम्प्रत्ययश्च तृतीयमक्षरमिति । ततश्च त्रिष्वपि पादेषु अष्टाक्षरा केवला गायत्री ।

२ "सम्यक् तद् द्विविधम्" इति क्वचित् प्र. पाठः ।

३ मध्ये सप्ताक्षरत्वात् पिपीलिकामध्या । "अज्मेषुअत्नत" इति व्यूहेन केवला गायत्री ।

[११-निचृद् गायत्री[१]]

(४५२) त्यश्चिद्धादीर्घम्पृथुम्मिहोनपातममृध्रम् । प्रच्यावयन्तियामभिः ॥ ११ ॥

[त्यम् । चित् । घ । दीर्घम् । पृथुम् । मिहः । नपातम् । अमृध्रम् ॥
प्र । च्यवयन्ति । (च्यावयन्ति)[२] । यामऽभिः ॥ ११ ॥]

**पद्भ्यां भूमिरिति श्रुत्या सुता विष्णोर्वसुन्धरा । तज्जत्वात् पर्वता विष्णोर्नप्तारः सेचनाद्धि मिट् । हरिस्तमपि मेर्वादिं मरुतश्च्यावयन्ति हि ॥ ९८ ॥ [३]अमृध्रमप्रधृष्यत्वात् ॥ * ॥**

(४५३) मरुतोयद्धवोबलञ्जनाँअचुच्यवीतन । गिरीँरचुच्यवीतन ॥ १२ ॥

[मरुतः । यत् । ह । वः । बलम् । जनान् । अचुच्यवीतन ॥
गिरीन् । अचुच्यवीतन ॥ १२ ॥

**बलं यदपि वोऽखिलम् । जनांश्च्यावयितुं स्थानाच्छक्ताः सम्यग् गिरीनपि ॥ ९९ ॥ * ॥**

[१३-पादनिचृद् गायत्री[४]]

(४५४) यद्धयान्तिमरुतस्संहब्रुवतेऽध्वन्ना । शृणोतिकश्चिदेषाम् ॥ १३ ॥

[यत् । ह । यान्ति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ ॥
शृणोति । कः । चित् । एषाम् ॥ १३ ॥]

**कुर्वन्ति शास्त्रसंवादं मार्गे शृण्वन्ति केचन । तेषां मध्ये हि मरुताम् ॥ * ॥**

---

१ "तियम्" इति व्यूहेन केवला गायत्री ।

२ च्यावयन्तीत्येवाऽचार्यसम्मतः पदपाठ इति भाति ।

३ मृध्रशब्दो हि मृदुपर्यायः । "मृध्रवाचः मृदुवाचः" इति यास्केन व्याख्यातत्वात् । अतोऽमृध्रास्तीक्ष्णाः । यद्वा मृध्र इति प्रधृष्यतामेवाऽह । तथाहि श्रुतिः-"देवा वीर्यवन्तो अभवन् । मृध्रा असुराः" इति ।

४ यान्ति इति त्रीण्यक्षराणि । तद्यथा या अन्तीति । धातुश्च प्रत्ययश्च विश्लिष्येते । एषामिति त्रीण्यक्षराणीत्युक्तम् । "ब्रुवते अध्वन्" इति च व्यूहः । तेन च केवला गायत्री ।

[१४–निचृद् गायत्री[1]]

(४५५) प्रयातशीभमाशुभिस्सन्तिकण्वेषुवोदुवः । तत्रोषुमादयाध्वै ॥ १४ ॥

[प्र । यात । शीभम् । आशुऽभिः । सन्ति । कण्वेषु । वः । दुवः ॥
तत्रोइति । सु । मादयाध्वै ॥ १४ ॥]

शीभं क्षिप्रं प्रयात नः[2] ॥ १०० ॥ मदं कुरुत तत्रैव दोहनान्यत्र सन्ति हि ॥ * ॥

[१५–पिपीलिकामध्या निचृद् गायत्री[3]]

(४५६) अस्तिहिष्मामदायवस्मासिष्मावयमेषाम् । विश्वंश्चिदायुर्जीवसे ॥ १५ ॥ [॥ १४ ॥]

[अस्ति । हि । स्म । मदाय । वः । स्मसि । स्म । वयम् । एषाम् ॥
विश्वम् । चित् । आयुः । जीवसे ॥ १५ ॥ १४ ॥]

इति सप्तत्रिंशं सूक्तम्

सर्वमायुर्जीवसेऽस्ति प्रसादान्मरुतां हि नः ॥ १०१ ॥ * ॥ * ॥

—३८—

[कद्ध नूनम् पञ्चदश, कण्वो घौरः, गायत्री, मरुतः, षड्जः ।]

(४५७) कद्धनूनङ्कधप्रियःपितापुत्रन्नहस्तयोः । दधिध्वेवृक्तबर्हिषः ॥ १ ॥

[कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः ॥
दधिध्वे । वृक्तऽबर्हिषः ॥ १ ॥]

---

१ "मादयाधवै" इति विश्लेषेण केवला गायत्री । २ "प्रयातन" इति क्वचित् प्र. पाठः ।

३ एषामिति त्रीण्यक्षराणि । तेन केवला गायत्री ।

[1]कदनयोर्हस्तयोर्देवा दधिध्वे प्रियतातवत् । कदाऽपि यत् प्रियस्तातः कथप्रिय इतीरितः । स्तृतं बर्हिर्यद्विषये ते प्रोक्ता वृक्तबर्हिषः ॥ १०२ ॥ * ॥

[२–निचृद् गायत्री[2]]

(४५८) क्वनूनङ्कद्वोअर्थङ्गन्तादिवोनपृथिव्याः । क्ववोगावोनरण्यन्ति ॥ २ ॥

[क्व । नूनम् । कत् । वः । अर्थम् । गन्त । दिवः । न । पृथिव्याः ॥
क्व । वः । गावः । न । रण्यन्ति ॥ २ ॥

दिवः पृथिव्याश्चेदानीं क गच्छथ च किं फलम् । न गच्छथ क वाऽप्येतज्ज्ञातव्यं तत्प्रसादतः ॥ १०३ ॥ आह्वयन्ति क वो[3] गावो यथैव यवसार्थिनः । फलार्थिनः स्तुवन्तो वः[4] क्वाऽऽह्वयन्ति तथैव च ॥ १०४ ॥ * ॥

[३–पादनिचृद् गायत्री[5]]

(४५९) क्ववस्सुम्नानव्यांसिमरुतःक्वसुविता । क्वो३विश्वानिसौभगा ॥ ३ ॥

[क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता ॥
क्वो३इति । विश्वानि । सौभगा ॥ ३ ॥

स्तुत्यानि वः सुखानि[6] च कथं ज्ञेयानि नः सदा । इत्यभिप्रायतः प्रश्नः कस्मिन् नो ज्ञापकस्त्विति । सुवितानि सुभद्राणि सौभगं लक्षणं परम् ॥ १०५ ॥ * ॥

---

१ "कदाऽनयोर्हस्तयोर्देवा धध्वे" इति प्र. पाठः । प्राचीनपाठे कत् अनयोरिति च्छेदः । कत् कदेति दधिध्वे धध्वे इति चार्थः स्फुटत्वान्नोक्तः । केवलं श्रुतिपदे एव प्रतीकतया गृहीते इत्यवधेयम् । "कच्छब्दः कदेत्यस्य पर्यायः" इति स्कन्दस्वामी ।

२ "कुव" इति व्यूहेन केवला गायत्री ।

३ "क वा" इति प्र. पाठः ।

४ स्तुवन्तो वा" इति क्वचित् ।

५ अत्र त्रिष्वपि पादेषु "कुव" इति व्यूहेन केवला गायत्री ।

६ "सुखानीव" इत्येकस्मिन् कोशे । सुम्ना सुम्नानि सुखानि । "सुम्नम् । शेवम् । शिवम् । शम् । कम्" (३. ६.) इति सुखनामसु निघण्टुः ।

[४–आर्ची उष्णिक्[1], ऋषभः स्वरः]

(४६०) यद्यूयम्पृश्निमातरोमर्तासस्स्यातन । स्तोतावोअमृतस्स्यात् ॥ ४ ॥

[यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन ॥
स्तोता । वः । अमृतः । स्यात् ॥ ४ ॥]

पृश्निर्वेदः प्रश्नयोग्यः पृश्निमाता हरिस्ततः । ज्ञेयस्तस्यापि विज्ञाता मरुतश्चेत् सुता गिरः । मानुषा यदि यूयं वः स्तोता देवो भवेदपि ॥ १०६ ॥ * ॥

[५–पिपीलिकामध्या निचृद् गायत्री[2]]

(४६१) मावोमृगोनयवसेजरिताभूदजोष्यः । पथायमस्यगादुप ॥ ५ ॥ [॥ १५ ॥]

[मा । वः । मृगः । न । यवसे । जरिता । भूत् । अजोष्यः ॥
पथा । यमस्य । गात् । उप ॥ ५ ॥ १५ ॥ ]

न स्यादसेव्यः स्तोताऽत्र यथा यवसगोचरे । गोप्राप्ये तु मृगोऽसेव्यो यममार्गं नच व्रजेत् । याच्ञारीतिविशेषोऽयं निन्दा स्तुत्येकदेशभुक् ॥ १०७ ॥ * ॥

[६–७ निचृद् गायत्री[3]]

(४६२) मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् । पदीष्टतृष्णयासह ॥ ६ ॥

[मोइति । सु । नः । पराऽपरा । निःऽऋतिः । दुःऽहना । वधीत् ॥
पदीष्ट । तृष्णया । सह ॥ ६ ॥]

---

१ एकविंशत्यक्षरत्वादार्ची उष्णिक् । मर्तास इति चतुरक्षराणि । असुगव्यूहेन मर्तअस इति वा मरतास इति वा । "सियातन" इति यणव्यूहेन चतुरक्षराणि । तृतीयपादे च "सियात्" इति द्वे अक्षरे । ततश्च केवला गायत्री । तदात्वे षड्ज एव स्वरः ।

२ "अजोषियः" इति व्यूहे केवला गायत्री ।

३ मो इति द्वे अक्षरे । माउ इति । तेनाष्टाक्षरत्वात् केवला च गायत्री ।

**मा वधीन्नः क्वचिन्मृत्युः परतःपरतोऽपि च । दुर्हणा दुःखदा हन्त्री यातु सा तृष्णया[1] सह ॥ १०८ ॥ * ॥**

(४६३) सत्यन्त्वेषाअमवन्तोधन्वंश्चिदारुद्रियासः । मिहङ्कृण्वन्त्यवाताम् ॥ ७ ॥

[सत्यम् । त्वेषाः । अमऽवन्तः । धन्वन् । चित् । आ । रुद्रियासः ॥
मिहम् । कृण्वन्ति । अवाताम् ॥ ७ ॥]

**अप्रमेया यथा सत्यं धन्वन्नपि हि सेचनम् । रुजां विद्रावकस्यैव वायोः पुत्रा हि रुद्रियाः । विनाऽप्यचेतनं वातं वृष्टिं[2] कृण्वन्ति हीच्छया ॥ १०९ ॥ * ॥**

(४६४) वाश्रेवविद्युन्मिमातिवत्सन्नमातासिषक्ति । यदेषांवृष्टिरसर्जि ॥ ८ ॥

[वाश्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति ॥
यत् । एषाम् । वृष्टिः । असर्जि ॥ ८ ॥]

**एषां सकाशाद् वृष्टिश्च विद्युद् भूमिं प्रकाशयेत् । गौर्वत्समिव भूम्यां च ॥ * ॥**

[९–१० निचृद् गायत्री[3]]

(४६५) दिवाचित्तमःकृण्वन्तिपर्जन्येनोदवाहेन । यत्पृथिवींव्युन्दन्ति ॥ ९ ॥

[दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन ॥
यत् । पृथिवीम् । विऽउन्दन्ति ॥ ९ ॥]

**लोकं सिञ्चन्ति मातृवत् ॥ ११० ॥ * ॥**

---

१ "निर्ऋतिः मृत्युदेवता । तृष्णा नाम निर्ऋतेर्दुहिता । अन्यायेन वाऽर्थाभिलाषस्तृष्णा" इति स्कन्दस्वामी ।

२ "वृष्टिं कुर्वन्ति" इति क्वचित् ।

३ नवमे मन्त्रे "विउन्दन्ति" इति व्यूहेन, दशमे च "सुवनात्" इति व्यूहेन केवलगायत्रीत्वं सम्पाद्यम् ।

(४६६) अधस्वनान्मरुतांविश्वमासद्मपार्थिवम् । अरेजन्तप्रमानुषाः ॥ १० ॥ [॥ १६ ॥]

[अध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् ॥
अरेजन्त । प्र । मानुषाः ॥ १० ॥ १६ ॥]

मानुषादित्वमन्यच्चाबिभेदेषां[1] स्वनादपि । गृहमानिनो गृहाद्यं वा चचालैषां स्वनादिति[2] ॥ १११ ॥ * ॥

(४६७) मरुतोवीळुपाणिभिश्चित्रारोधस्वतीरनु । यातेमखिद्रयामभिः ॥ ११ ॥

[मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु ॥
यात । ईम् । अखिद्रयामऽभिः ॥ ११ ॥]

अखिन्नैर्गमनैश्चैव दृढस्वीयैश्च पाणिभिः[3] । अनुयात नदीश्चित्राः ॥ * ॥

[१२–पिपीलिकामध्या निचृद् गायत्री[4]]

(४६८) स्थिरावस्सन्तुनेमयोरथाअश्वासएषाम् । सुसंस्कृताअभीशवः ॥ १२ ॥

[स्थिराः । वः । सन्तु । नेमयः । रथाः । अश्वासः । एषाम् ॥
सुऽसंस्कृताः । अभीशवः ॥ १२ ॥]

स्थिराः सन्ति रथादयः ॥ ११२ ॥ * ॥

(४६९) अच्छावदातनागिराजरायैब्रह्मणस्पतिम् । अग्निम्मित्रन्नदर्शतम् ॥ १३ ॥

[अच्छ । वद । तना । गिरा । जरायै । ब्रह्मणः । पतिम् ॥
अग्निम् । मित्रम् । न । दर्शतम् ॥ १३ ॥]

---

१ "–मन्यच्च बिभेदेषाम्" इति क्वचित् ।
२ "स्वनादपि" इति प्र. पाठः ।
३ वीळुपाणिभिः दृढैः स्वीयपाणिभिः । "वीळुशब्दोऽत्र दृढवचनः" इति स्कन्दस्वामी चाऽऽह ।
४ एषामिति त्रीण्यक्षराणि, अशवास इति चतुरक्षराणि वा । तेन केवलगायत्रीत्वं च ।

ब्रह्मणश्च पतिं विष्णुं यथावद् व्याप्तया गिरा । जरायै संस्तुतित्वेन तृतीया भावरूपिणी ॥ ११३॥ सर्वा विभक्तयश्चेत्थम्भाववाचिन्य एव च । महाव्याकरणे सूत्रमिति[1] तत् स्तुतिरूपतः । वद विष्णुं स्वप्रकाशमग्निवत् सूर्यवत् तथा ॥ ११४॥ आह चाऽत्मानमेवात्र दार्ढ्ये स्वप्रतियोगिता । इति सूत्रात् ॥ * ॥

[१४-यवमध्या विराड् गायत्री[2]]

(४७०) मिमीहिश्लोकमास्येपर्जन्यइवततनः । गायगायत्रमुक्थ्यम् ॥ १४ ॥

[मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः ॥
गाय । गायत्रम् । उक्थ्यम् ॥ १४ ॥]

कीर्तिमस्य विष्णोः कुरु मुखे सदा ॥ ११५ ॥ विस्तारयति पर्जन्यो यद्वद् वृष्टिं तथैव च । विस्तृणीहि तथेशस्य तथा कीर्तिं जगत्यपि ॥ ११६ ॥ * ॥

(४७१) वन्दस्वमारुतङ्गणन्त्वेषम्पनस्युमर्किणम् । अस्मेवृद्धाअसन्निह ॥ १५ ॥ [॥ १७ ॥]

[वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् ॥
अस्मेइति । वृद्धाः । असन् । इह ॥ १५ ॥ १७ ॥]

इत्यष्टत्रिंशं सूक्तम्

पनस्युं ज्ञानशीलं च विज्ञेयं गणमर्किणम् । अभवन् ज्ञापका वृद्धा अस्माकं तदनुग्रहात् ॥ ११७ ॥
॥ * ॥ * ॥

---

१ "—मिति संस्तुति—" इति प्र. पाठः । कोशेषु च क्वचित् तथा ।

२ "आसिये" इति, "उक्थियम्" इति च व्यूहेन केवलगायत्रीत्वम् ।

— ३९ —

[प्रयदित्था दश, कण्वो घौरः, प्रगाथः[1], मरुतः]

[१–पथ्याबृहती, मध्यमः स्वरः]

(४७२) प्रयदित्थापरावतश्शोचिर्नमानमस्यथ ॥
कस्यक्रत्वामरुतःकस्यवर्पसाकंयाथकंहधूतयः ॥ १ ॥

[प्र । यत् । इत्था । पराऽवतः । शोचिः । न । मानम् । अस्यथ ॥
कस्य । क्रत्वा । मरुतः । कस्य । वर्पसा । कम् । याथ । कम् । ह । धूतयः ॥
॥ १ ॥]

परावतो हरेः स्थानान्मानं शोचिरिवास्यथ । सूर्यादयो यथा शोचिर्दूरादस्यन्ति जन्तुषु । एवं ज्ञानं सम्प्रदायान्मरुतो विष्णुरेव वा ॥ ११८ ॥ इत्थं यथा सर्वदृश्यं तत् तथा भवतां कृतम् । एवं यत्रक्कवा ज्ञानाद् बलाद् वा गच्छत क्वचित् । स्वतन्त्रत्वात् परापेक्षा नहि वः क्वचिदिष्यते ॥ ११९ ॥ [2]किञ्चिद् याथ बलात् किञ्चिद् धूनुथ स्वबलाद्धि तत् ॥ * ॥

[२–विराट् सतःपङ्क्तिः[3], पञ्चमः स्वरः]

(४७३) स्थिरावस्सन्त्वायुधापराणुदेवीळुउतप्रतिष्कभे ॥
युष्माकमस्तुतविषीपनीयसीमामर्त्यस्यमायिनः ॥ २ ॥

[स्थिरा । वः । सन्तु । आयुधा । पराऽनुदे । वीळु । उत । प्रतिऽस्कभे ॥
युष्माकम् । अस्तु । तविषी । पनीयसी । मा । मर्त्यस्य । मायिनः ॥ २ ॥]

---

१ "प्र यद् दश, प्रागाथं तु" इत्यनुक्रमणिका । तुशब्दादुत्तरमपि सूक्तं प्रागाथम् ।

२ "कंचिद् याथ बलात् कञ्चित्" इति क्वचित् ।

३ इयमेव हि सतोबृहतीति नामान्तरेण गदिता । "सन्तुआयुधा" इति, "मर्तियस्य" इति च व्यूहेन केवला सतःपंक्तिः ।

शत्रूणामपनोदाय सन्ति[1] वस्त्विह हेतयः । स्तम्भनाय च शत्रूणां सुदृढान्येव ताः सदा ॥१२०॥ स्थिरत्वं दीर्घकालत्वं वीळुत्वं दृढता तथा । युष्माकं तविषी तेजो बलमस्त्युत्तमं सदा । मायिनो नहि मर्त्यस्य बलं तेजोऽथवोत्तमम् ॥ १२१ ॥ * ॥

[३–अनुष्टुप्[2], गान्धारः स्वरः]

(४७४) पराहयत्स्थिरंहथनरोवर्तयथागुरु ॥
विंयाथनवनिनःपृथिव्याव्याशाःपर्वतानाम् ॥ ३ ॥

[परा । ह । यत् । स्थिरम् । हथ । नरः । वर्तयथ । गुरु ॥
वि । याथन । वनिनः । पृथिव्याः । वि । आशाः । पर्वतानाम् ॥ ३ ॥]

स्थिरं चाज्ञानपापादि तद्भक्ताय पराहथ । गुरूनपि नरान् नित्यं गुणैर्वर्तयथाञ्जसा ॥ १२२ ॥ पर्वतानां पृथिव्याश्च दिशो नित्यं वियाथन । वनिनश्च तरून् सम्यग् भजनीयान् सुरान् हरिः ॥ १२३ ॥ * ॥

[४–निचृत् सतःपङ्क्तिः[3], पञ्चमः स्वरः]

(४७५) नहिवश्शत्रुर्विविदेअधिद्यविनभूम्यांरिशादसः ॥
युष्माकमस्तुतविषीतनायुजारुद्रासोनूचिदाधृषे ॥ ४ ॥

[नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् । रिशादसः ॥
युष्माकम् । अस्तु । तविषी । तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥ ४ ॥]

---

१ "सन्तु" इति पाठान्तरम् । सन्त्वित्येतत् सन्तीति व्याख्यातम् । स्थितस्य हि कथनमेतत् । नत्वाशंसनम् ।

२ इयमपि व्यूहेन पथ्याबृहत्येव भवति । पूर्वार्धे अष्टाक्षरौ द्वौ पादाविति समानम् । तृतीयपादे च–"पृथिवियाः" इति विश्लेषेण एकादशाक्षरत्वे एकोनं जागतं भवति । चतुर्थपादे च "विआशाः पर्वतअनाम्" इत्यष्टाक्षरत्वम् । ततश्च निचृत् पथ्याबृहती । तदात्वे मध्यमः स्वरः ।

३ "भूमियाम्" इति व्यूहेन केवला सतःपंक्तिः ।

भूमौ दिवि च वः शत्रुः क्वचिन्नैव हि लभ्यते। रिशादसः सुसुखिनः सुखेन शमदन्ति यत् ॥ १२४ ॥ बलं तेजोऽपि वो ह्यस्ति [1]व्याप्ता नित्यतया युजा। अद्याप्याधर्षणायैव निखिलाशुभसन्ततेः ॥ १२५ ॥ * ॥

[५–पथ्याबृहती, मध्यमः स्वरः]

(४७६) प्रवेपयन्तिपर्वतान्विविञ्चन्तिवनस्पतीन् ॥

प्रोआरतमरुतोदुर्मदाइवदेवासस्सर्वयाविशा ॥ ५ ॥ [॥ १८ ॥]

[प्र। वेपयन्ति। पर्वतान्। वि। विञ्चन्ति। वनस्पतीन् ॥

प्रोइति। आरत। मरुतः। दुर्मदाःऽइव। देवासः। सर्वया। विशा ॥ ५ ॥ १८ ॥]

प्रवेपयन्ति पर्वतान् [2]विभिन्दन्ति वनस्पतीन्। जनिपर्ववतो जीवान् सम्प्रेरयति केशवः॥ १२६॥ भजनीयपतीन् ब्रह्मपूर्वांश्च फलदानतः। तारतम्येन सम्यक् च विवेचयति सर्वदा ॥ १२७ ॥ सर्वप्रजास्वतिष्ठन्त प्राप्तास्ताभिः सहैव च। मत्ता इव प्रेरयन्ति शुभाशुभकृतौ नरान् ॥ १२८ ॥ ॥ * ॥

[६–विराट् सतःपङ्क्तिः[3], पञ्चमः स्वरः]

(४७७) उपोरथेषुपृषतीरयुग्ध्वम्प्रष्टिर्वहतिरोहितः ॥

आवोयामायपृथिवीचिदश्रोदबीभयन्तमानुषाः ॥ ६ ॥

[उपोइति। रथेषु। पृषतीः। अयुग्ध्वम्। प्रष्टिः। वहति। रोहितः ॥

आ। वः। यामाय। पृथिवी। चित्। अश्रोत्। अबीभयन्त। मानुषाः ॥ ६ ॥]

---

१ "व्याप्त्या" इति क्वचित्।

२ "विविञ्चन्ति" इति प्र. पाठः। विविञ्चन्ति विभिन्दन्ति। "विचिर् पृथग्भावे"।

३ "अयुग्धवम्" इति, "अशरोत्" इति च व्यूहेन केवला सतःपंक्तिः।

[1]अयुग्ध्वं पृषतीश्चैव रोहितं पृष्ठतो रथे[2]। वो यामं प्रति दाढर्याय शेषमश्नेत् पुनर्धरा ॥ १२९ ॥ भीतिमापुर्मनुष्याश्च[3] ॥ * ॥

[७–उपरिष्टाद् विराड्बृहती[4], मध्यमः स्वरः]

(४७८) आवोमक्षूतनायकंरुद्राअवोवृणीमहे ॥
गन्तानूनन्नोवसायथापुरेत्थाकण्वायबिभ्युषे ॥ ७ ॥

आ । वः । मक्षु । तनाय । कम् । रुद्राः । अवः । वृणीमहे ॥
गन्त । नूनम् । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ॥ ७ ॥]

क्षिप्रं वः प्राप्तये सुखम् । रक्षां वृणीमहे युष्मद् गन्ताद्यापिच नोऽवसा ॥ १३० ॥ भीतियुक्ताय कण्वाय मह्यम् ॥ * ॥

[८–विराट् सतःपङ्क्तिः[5], पञ्चमः स्वरः]

(४७९) युष्मेषितोमरुतोमर्त्येषितआयोनोअभ्वईषते ॥
वितंयुयोतशवसाव्योजसावियुष्माकाभिरूतिभिः ॥ ८ ॥

[युष्माऽइषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते ॥
वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ ८ ॥]

---

१ "अयुङ्ग्ध्वम्" इति प्र. पाठः ।

२ "एकस्यामेव धुरि यः पार्श्वे द्वितीयो नियुज्यते स प्रष्टिरित्युच्यते" इति स्कन्दस्वामी ।

३ "–मापुर्मानुषाश्च" इति प्र. पाठः ।

४ "उपरिष्टाद् बृहत्यन्ते" (३. ३१.) इति पिङ्गलनागः । अष्टाक्षरास्त्रयः पादाः जागतश्च चतुर्थः यत्र सोपरिष्टाद् बृहती । अत्र तृतीयपादे सप्ताक्षरत्वात् चतुर्थे चैकादशाक्षरत्वाद् विराट्त्वम् । "नो अवसा" इति व्यूहेन, "बिभियुषे" इति व्यूहेन च केवलोपरिष्टाद् बृहती । वस्तुतस्त्वियं पथ्याबृहत्येव भवति । तदर्थं तृतीयपादस्य द्वादशाक्षरत्वं चतुर्थस्याष्टाक्षरत्वं च सम्पाद्यम् । "नो अवसा यथा पुरा इत्था" इति विश्लेषेण च तत् सम्पद्यते ।

५ "मर्त्य इषितः" इति, "विओजसा" इति च व्यूहेन केवला सतःपंक्तिः ।

युष्माभिरेव च। प्रेरितोऽथ नियन्तृत्वाद् युष्माकं मानुषेण च[1] ॥ १३१ ॥ बाह्यदृष्ट्या त्वभूतीर्नो य इच्छति तमोजसा। बलेन च द्रावयत युष्मदीयोतिभिस्तथा ॥ १३२ ॥ * ॥

[९–पथ्याबृहती, मध्यमः स्वरः]

(४८०) असामिहिप्रयज्यवःकण्वंदद्प्रचेतसः।
असामिभिर्मरुतआनऊतिभिर्गन्तावृष्टिंनविद्युतः ॥ ९ ॥

[असामि। हि। प्रऽयज्यवः। कण्वम्। दद। प्रऽचेतसः ॥
असामिऽभिः। मरुतः। आ। नः। ऊतिऽभिः। गन्त। वृष्टिम्। न। विऽद्युतः ॥
॥ ९ ॥]

[१०–विराट् सतःपंक्तिः[2], पञ्चमः स्वरः]

(४८१) असाम्योजोबिभृथासुदानवोसामिधूतयश्शवः ॥
ऋषिद्विषेमरुतःपरिमन्यवइषुंनसृजतद्विषम् ॥ १० ॥ [॥ १९ ॥]

[असामि। ओजः। बिभृथ। सुऽदानवः। असामि। धूतयः। शवः ॥
ऋषिऽद्विषे। मरुतः। परिऽमन्यवे। इषुम्। न। सृजत। द्विषम् ॥ १० ॥ १९ ॥]

इत्येकोनचत्वारिंशं सूक्तम्

ओजोऽसमं बिभृथ च मरुज्ज्याः सममुत्तमम्। सुदानशीलाः कण्वाय दत्तासममभीप्सितम्। असमैर्नोऽप्यभिप्रायैर्गन्त वृष्टिं न विद्युतः ॥ १३३ ॥ * ॥ * ॥

---

१ मानुषेण वा" इति प्र. पाठः।

२ "असामि ओजः" इति, "सुदानवो असामि" इति च व्यूहेन केवला सतःपंक्तिः।

—४०—

[[1]उत्तिष्ठ अष्टौ, कण्वो घौरः, प्रगाथः, ब्रह्मणस्पतिः]
[१—निचृदुपरिष्टाद् बृहती[2], १—२ मध्यमः स्वरः]
[१—ब्रह्मणस्पतिर्मरुत इन्द्रश्च देवताः]

(४८२) उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥
उपप्रयन्तुमरुतस्सुदानवइन्द्रप्राशूर्भवासचा ॥ १ ॥

[उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयन्तः । त्वा । ईमहे ॥
उप । प्र । यन्तु । मरुतः । सुऽदानवः । इन्द्र । प्राशूः । भव । सचा ॥ १ ॥]

देवयन्तः पूजयन्तः स्तुवन्तोऽतिकृताशनः । प्राशूः ॥ * ॥

[२—निचृद् बृहती[3]]
[२—सहसस्पुत्रो मरुतश्च देवताः]

(४८३) त्वामिद्धिसहसस्पुत्रमर्त्यउपब्रूतेधनेहिते ॥
सुवीर्यम्मरुतआस्वश्व्यन्दधीतयोवआचके ॥ २ ॥

[त्वाम् । इत् । हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते ॥
सुऽवीर्यम् । मरुतः । आ । सुऽअश्व्यम् । दधीत । यः । वः । आऽचके ॥ २ ॥]

---

१ "उत्तिष्ठाष्टौ ब्राह्मणस्पत्यम्" इत्यनुक्रमणिका । "उत्तिष्ठ ब्राह्मणस्पत्यम्" (३. १०७.) इति च बृहद्देवता ।

२ "त्वाईमहे" इति व्यूहेन केवलोपरिष्टाद् बृहती । 'उपप्रयन्तु मरुतः' इति तृतीयः पादः तत उत्तरश्चतुर्थ इति विवक्षित्वेदमुदितम् । किञ्च 'सुदानव' इति यावत् तृतीयः पादः 'इन्द्र प्राशूर्भवा सचा' इति चतुर्थः पाद इति तु यदा तदा पथ्याबृहत्येवेयम् ।

३ अत्र "सुअश्व्यम्" इति व्यूहेन षट्त्रिंशदक्षरत्वे केवला बृहती । अपिच सतःपंक्तिरियं भवति । तथाहि— "तुवामिद्धि सहसस्पुत्र मर्तिय" इति व्यूहेन द्वादशाक्षरः प्रथमः पादः। द्वितीयोऽष्टाक्षरः । "सुवीरियं मरुतआसु-अश्वियम्" इति व्यूहेन द्वादशाक्षर एव तृतीयः । चतुर्थश्चाष्टाक्षर इति ।

वायोः सुतेत्येव सहसः पुत्र[1] इत्यपि । तद्यङ्ग्यत्वाद्धरिः प्रोक्तः शक्रस्तत्सुत एवच ॥ १३४ ॥
युद्धं हितधनं प्रोक्तं निहितं धनमेव वा । स्वश्व्यं तु स्विन्द्रियफलमाचकेऽपश्यदित्यपि ॥१३५॥*॥

[३-आर्ची त्रिष्टुप्[2], धैवतः स्वरः]
[३-ब्रह्मणस्पतिः, सूनृता देवी, देवाश्च देवताः]

(४८४) प्रैतुब्रह्मणस्पतिःप्रदेव्येतुसूनृता ॥
अच्छावीरन्नर्यम्पङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ॥ ३ ॥

[प्र । एतु । ब्रह्मणः । पतिः । प्र । देवी । एतु । सूनृता ॥
अच्छ । वीरम् । नर्यम् । पङ्क्तिऽराधसम् । देवाः । यज्ञम् । नयन्तु । नः ॥३॥]

पतिस्तु ब्रह्मणो विष्णुर्वागीशत्वात् समीरणः । अग्रतो यात्वसावस्मत्कार्येष्वेवं सरस्वती ॥ १३६ ॥ सूनृता वैष्णवी वा[3] वाग् यज्ञं वीरं नरं प्रति । नयन्तु देवाः सर्वेऽपि यत् पञ्चजन-वर्द्धनः ॥ १३७ ॥ पङ्क्तिराधा हरिस्तेन वीरो नर्यः स एव च । देवगन्धर्वनृपितृदैत्याः पञ्चजनाभिधाः ॥ १३८ ॥ * ॥

[४- सतःपङ्क्तिः, पञ्चमः स्वरः]

(४८५) योवाघतेददातिसूनरंवसुसधत्तेअक्षितिश्रवः ॥
तस्माइळांसुवीरामायजामहेसुप्रतूर्तिमनेहसम् ॥ ४ ॥

[यः । वाघते । ददाति । सूनरम् । वसु । सः । धत्ते । अक्षिति । श्रवः ॥
तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे । सुऽप्रतूर्तिम् । अनेहसम् ॥ ४ ॥]

---

१ "सहसस्पुत्र इत्यथ" इति प्र. पाठः । कोशेषु च क्वचित् ।

२ त्रयस्त्रिंशदक्षरत्वादार्ची त्रिष्टुप् । इयमपि पथ्याबृहत्येव भवति । तथाहि "प्रएतु" इति प्रथमपादेऽष्टाक्षरता । "देवीएतु" इति द्वितीयपादे च । "नरियम्" इति व्यूहेन तृतीयपादे द्वादशाक्षरता । तथा च पथ्याबृहती । तथाच मध्यमः स्वरः ।

३ "वैष्णवी वाग् वा" इति प्र. पाठः ।

वाघते स्तुवते विष्णुर्ददाति [1]सुनरं वसु । सुष्ठु येन नरो भूयात् सुनरं ज्ञानमुच्यते ॥ १३९ ॥ स धत्ते चाक्षयां कीर्तिमिळामन्नं यजामहे । सुवीर्यत्वात् सुवीरं तत् सुप्रतूर्तिः सुपेशकृत् । प्राणचेष्टानिमित्तत्वात् तदनेह इतीरितम् ॥ १४० ॥ * ॥

[५–विराट् पथ्या बृहती[2], मध्यमः स्वरः]

(४८६) प्रनूनम्ब्रह्मणस्पतिर्मन्त्रंवदत्युक्थ्यम् ॥

यस्मिन्निन्द्रोवरुणोमित्रोअर्यमादेवाओकांसिचक्रिरे ॥ ५ ॥ [॥ २० ॥]

[प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् ॥ यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥ ५ ॥ २० ॥]

स एव भगवान् विष्णुर्मन्त्रं तद्विषयं वदेत् । [3]उक्थमुत्थापकत्वेन स एव भगवान् हरिः ॥ १४१ ॥ तन्मन्त्रवाच्या देवाश्च ॥ * ॥

[६–सतःपंक्तिः, पञ्चमः स्वरः]

[६–७ देवाः देवताः]

(४८७) तमिद्वोचेमाविदथेषुशम्भुवम्मन्त्रन्देवाअनेहसम् ॥

इमाञ्चवाचम्प्रतिहर्यथानरोविश्वेद्वामावोअश्नवत् ॥ ६ ॥

[तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः । अनेहसम् ॥

---

१ "सूनरम्" इति प्र. पाठः । क्वचित् कोशेषु च तथा । सुनरमेव सूनरम् ।

२ "वदति उक्थियम्" इति व्यूहेन केवला पथ्याबृहती ।

३ "उक्थ उत्थापकत्वेन" इति क्वचित् ।

इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ ६ ॥]

यद्वाच्या देवतास्तु ताः । तमेव मन्त्रं वोचेम ज्ञानार्थं सुखकारणम् ॥ १४२ ॥ इमां वाचं स्वीकुरुत सकाशाद् वोऽखिलं शुभम् । अश्नवानि ॥ * ॥

[७–आर्ची त्रिष्टुप्[1], धैवतः स्वरः]

(४८८) कोदेवयन्तमश्नवज्जनङ्कोवृक्तबर्हिषम् ॥
प्रप्रदाश्वान्पस्त्याभिरस्थितान्तर्वावत्क्षयन्दधे ॥ ७ ॥

[कः । देवऽयन्तम् । अश्नवत् । जनम् । कः । वृक्तऽबर्हिषम् ॥
प्रऽप्र । दाश्वान् । पस्त्याभिः । अस्थित । अन्तःऽवावत् । क्षयम् । दधे ॥ ७ ॥]

अतिदौर्लभ्याद् देवभक्तं क आप्नुयात् । यजमानं वाऽनुगच्छेत् कः सम्यक् स्तृतबर्हिषम् ॥ १४३ ॥ तत्रतत्र प्रस्थितोऽसौ यजमानः सुखैः स्वयम् । स्वेष्टस्थानेषु चान्तर्वा विष्णुरन्तर्गतो यतः । तद्वत्त्वेन क्षयं स्थानं प्राप्नोति ज्ञानतो यजन् ॥ १४४ ॥ * ॥

[८–निचृत् सतःपंक्तिः[2], पञ्चमःस्वरः]

[८–इन्द्रो देवता]

(४८९) उपक्षत्रम्पृञ्चीतहन्तिराजभिर्भयेचित्सुक्षितिन्दधे ॥
नास्यवर्तानतरुतामहाधनेनार्भेअस्तिवज्रिणः ॥ ८ ॥ [॥ २१ ॥]

---

१ व्यूहेन चेयं पथ्याबृहत्येव । तथाह्येवमुत्तरार्धं व्यूह्यम्—"प्रप्रदाशवान् पस्तियाभिरस्थितअन्तर्वावत्" इत्यादि ।

२ "वजरिणः" इति व्यूहेन केवला सतः पंक्तिः ।

[उप । क्षत्रम् । पृञ्चीत । हन्ति । राजऽभिः । भये । चित् । सुऽक्षितिम् । दधे ॥
न । अस्य । वर्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ॥
॥ ८ ॥ २१ ॥]

इति चत्वारिंशं सूक्तम्

[1]उपपृक्तः क्षत्रियैः स आवेशेन जनार्दनः । हन्ति शत्रूंश्च तैर्देवो भये च स्वाश्रयं ददौ ॥ १४५ ॥
वर्ताऽभिगन्ता तरुता जेता चास्य नहि क्वचित् । युद्धं महाधनं त्वर्भे [2]प्रसिद्धं धनमेव हि[3]
॥ १४६ ॥ * ॥ * ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादकृते

श्रीमदृग्भाष्ये

तृतीयाध्याये एकविंशो वर्गः समाप्तः

---

समाप्तश्चायं ग्रन्थः

---

१ "उपपृक्तैः"(?) इति क्वचित् पाठो मृग्यार्थः । २ "प्रसिद्धधनमेवहि" इति क्वचित् ।

३ अत्र सर्वत्रापि प्रायः प्रतनकोशेषु—"धनमेव हि । य—" इतीयद्विलख्य समाप्तिवाक्यं पठ्यते । तदेतन्म-हद्विचिकित्सास्थानं भवति–किमेतदक्षरमिति? "यं रक्षन्ति प्रचेतसः" इति चोत्तरसूक्तस्याऽद्यो मन्त्रः । किमिदमुत्तर-सूक्तभाष्यस्याऽद्यमक्षरं 'य' इति? तर्हि किमाचार्यः समग्रमपि तृतीयाध्यायमष्टकं वा व्याचख्यौ? किं तर्हि एकचत्वा-रिंशसूक्तभाष्यस्याऽद्ययकारात् परः सर्वोऽपि भाष्यभागो लुप्तः? सम्प्रदायस्त्वत्र न संवदते । तथाहि टीका—"अनेन मार्गेणोत्तरस्यापि मन्त्रजातस्य व्याख्यानं सिद्धमेवात उपरम्यत इति हिशब्देनाऽचष्टे भगवान् मुनिः" इति । "स्वमहिमोक्तिपरमारुतसूक्तव्याख्यानेन समाप्तिमप्रीयमाणो विष्णूत्कर्षोक्तिपरसूक्तमन्ते व्याख्याय समापितवान् भगवानाचार्यः" इति च मन्त्रार्थमञ्जरी । तेन चेयदेव भाष्यं भगवत्पादकृतमिति सम्प्रदायविदः ।

# खण्डार्थनिर्णयः*

ॐ ॥ य इज्यते विधीशानशक्रपूर्वैः सदा मखैः[1]।
रमाप्रणयिने तस्मै सर्वयज्ञभुजे नमः ॥ * ॥

[ॐ ॥ महानाम्नीनामुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीया सर्वेभ्यो वा एष लोकेभ्यः सन्निर्मितो यत् षोळषी तद् यन्महानाम्नीनामुपसर्गानुपसृजति सर्वेभ्य एवैनं तल्लोकेभ्यः सन्निर्मिमीते सर्वेभ्यो लोकेभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद[2] ।]

(ऐत. ब्रा. पं. ४. अ. १. खं. ४. वाक्य. १.)

**महानाम्नीनामृचां उपसर्गा ये उपसर्जनभूतास्तानुपसृजति संयोजयति । महन्नाम यास्वृक्षु विद्यते ता महानाम्न्यः । परस्य ब्रह्मणो यन्नामेन्द्रादिकं तन्महार्थत्वान्महत् । महद्धि तत् परं ब्रह्म, अशेषगुणसम्पूर्तेः[3] ।**

---

* अयमेव कर्मनिर्णय इति सम्प्रति प्रख्यायते । महानाम्नीमहिमोक्तिपरस्य ऐतरेयब्राह्मणगतस्य चतुर्थपञ्चिकाप्रथमाध्याये चतुर्थखण्डस्य आनुषङ्गिकतया च मध्ये तृतीयखण्डस्यार्थनिर्णयोऽत्र क्रियत इति खण्डार्थनिर्णय इत्यन्वर्थं नाम । क्वचित् कोशे "खण्डार्थः" इतीयदेव नाम पठ्यते । हृषीकेशतीर्थीये तु नायं ग्रन्थ उपलब्ध इति तदनुसारेण श्रीरघुवर्यतीर्थैर्यथामूलं लिखिते कोश उपलब्धः पाठ एवात्र मूलपाठतया पर्यग्राहि ।

१ "सदाऽमरैः" इति क्वचित् ।

२ भगवत्पादेनोत्तरग्रन्थे व्याचिख्यासितोऽयं खण्डभाग इति सुकरं भाष्यकृद्वचनबोधाय मूलभागोऽयमत्र सहैव मुद्रितः । ग्रन्थकृता तु ब्रह्मसूत्रभाष्ये ब्रह्मसूत्राणीव नायं खण्डः स्वग्रन्थे निवेशितः । यथा ऋग्भाष्ये ऋङ्मन्त्राणामनुद्धारेणैव व्याख्यानम्, तथाऽत्रापि । अत एवात्रोद्धृतः मूलमन्त्रब्राह्मणभागः [ ] इत्यावरणचिह्नान्तर्गतः कृत इत्यवगन्तव्यम् ।

३ "–गुणपूर्तेः" इति प्र. पाठः । कोशेष्वपि क्वचित् तथा ।

तत्रैकं[1] आहुरगुणं ब्रह्मेति । न तद् युक्तम् । श्रुतियुक्तिविरोधात् । तथाहि श्रुतिः—

"सत्यं ज्ञानमनन्तं ब्रह्म ।", "विज्ञानमानन्दं ब्रह्म ।", "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ।", "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रोऽक्षरात्[2] परतः परः ।", "एतावानस्य महिमा ततो[3] ज्यायांश्च पूरुषः ।", "यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।", "पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।" "सर्वनामा सर्वगन्धः[4] सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ।", "विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।", "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।", "न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप" इत्यादिका ।

युक्तिश्च । बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो युक्ताः[5] । "कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम्" इति च भागवते[6] । नच[7] "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिविरोधः[8] ।

---

१ "तदैक—" इति क्वचित् ।

२ "शुभ्रो ह्यक्षरात्" इति प्र. पाठः । "शुभ्रोऽक्षरात्" इत्येव प्राचीनश्रुतिपाठः ।

३ "महिमाऽतो—" इति च पाठान्तरम् । यद्यपि बह्वृचानां याजुषाणां च पौरुषे सूक्ते "महिमाऽतो ज्यायांश्च" इत्येव श्रुतिपाठः । छन्दोगानां तु "तावानस्य महिमा ततो ज्यायांश्च पूरुषः" (साम. ६२०) इति पाठः । आथर्वणे पुनः "तावन्तो अस्य महिमानस्ततो ज्यायांश्च पूरुषः" (अथर्व. १९. ६. ३.) इति पठ्यते। तदेवमुभयसङ्ग्रहाय भाष्यकृतैवमुदितं मन्यामहे । तथाहि—"एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः" इति बाह्वृचः याजुषश्च पाठः । याजुषे वाजसनेयिनः तैत्तिरीयाश्चैवमेव हि पठन्ति । स पूर्वार्द्धेन सङ्गृहीतः । छन्दोगानामथर्वणां च पाठः "ततो ज्यायांश्च पूरुषः" इत्युत्तरार्द्धेन सङ्गृहीत इति वेदचतुष्टयगतस्यापि पौरुषसूक्तस्यैकयोक्त्या समुद्धारेण महत्कौशलमनन्तवेदविदुषो भगवत्पादस्य ।

४ "सर्वकर्मा सर्वकामः सर्वगन्धः" इति प्र. पाठः । क्वचित्तु "सर्वकर्मा सर्वगन्धः सर्वकामः" इति व्यत्ययेन पठ्यते । "सर्वकर्मा सर्वगन्धः" इतीयदेव च क्वचित् । यद्यपि "सर्वकर्मा सर्वकामः सर्वगन्धः" इत्येवोपनिषदि पाठः । इदन्तु श्रुत्यन्तरगतं भवेत् । अथवा "सर्वनामा—" इति श्रुत्यन्तरवचनम् । "सर्वगन्धः—" इत्यादि तु च्छन्दोगोपनिषद इति ।

५ "सर्वज्ञत्वादयो गुणा युक्ताः" इति च क्वचित् । प्र. पाठोऽपि तथा ।

६ "इति भागवते" इति क्वचित् ।

७ "नहि" इति क्वचित् ।

८ "इत्यादिविरोधः" इति प्र. पाठः ।

सत्त्वादिगुणाभावोक्तेस्तत्र[1]। अन्यथा "एको देवः सर्वभूतेषु गूढः" इत्यादीनामपि गुणत्वात् स्वोक्तिविरोधः[2]।

नच निर्विशेषं नाम किञ्चिदस्ति। निर्विशेषत्वोक्तेरेव व्याहतत्वात्। निर्विशेषत्वेन विशिष्टं नवेत्युक्ते, यद्यविशिष्टं[3] न विशेषनिराकरणम्। विशेषवत्त्वमेव भवति। यदि तेन विशिष्टं स एव विशेष इति व्याहतिः।

नच निर्विशेषत्वे किञ्चिन्मानम्। अशेषविशेषवचनानुभव[4]युक्तिविरोधश्च। नच मिथ्याविशेषवत्। व्याहतेः[5]। मिथ्याविशेष इत्युक्ते ह्यसद्विशेष[6] इत्येव भवति। तथाचाविशेषपक्षोक्त[7]-दोष एव।

नचानिर्वचनीयविशेष इति भवति। अनिर्वचनीयासिद्धेः। नहि तत्र प्रत्यक्षमस्ति। मिथ्याशब्दस्त्वभाववाच्येव[8]। तदन्यत्र प्रमाणाभावात्। नचान्यत् प्रमाणम्। प्रतिज्ञाव्याहतेः। नहि सदन्तरादसतश्चान्यत् सदसद्विलक्षणं प्रसिद्धम्। असन्न भवतीत्युक्ते च[9] द्वौ नञौ प्रकृतमर्थं गमयत[10] इति सदेव भवति; असदन्तरं वा विशेषविवक्षायाम्।

किञ्चैतद् वैलक्षण्यं भेदोऽभेदो भेदाभेदौ वा[11]? न तावद् भेदः। अनङ्गीकारात्। व्यावहारिकभेदश्चानिर्वाच्यसिद्धौ वक्तव्यः। नचाव्यावहारिकं[12] किञ्चित्। नचाशेषव्यवहारनिवृत्तौ किञ्चिन्मानम्। नच मिथ्यासत्ययोः[13] सामान्यं व्यावहारिकत्वम्, धूमबाष्पयोर्धूमत्ववत्। नचाभेदः। अनङ्गीकारादेव। तथैवोभयम्। अभेदे चानिर्वाच्यब्रह्मणोस्तच्छब्दयोः पर्यायत्वम्। नच व्यावर्त्यविशेषेणापर्यायत्वं क्वचित्। व्यावर्त्यविशेषस्तद्व्यावृत्ते ब्रह्मणि विशेषमापादयति चेद् विशिष्टवाक्यार्थता। न चेन्न ब्रह्मज्ञानार्थिनः[14] पदान्तरं वाच्यम्। असङ्गतत्वात्। मिथ्याविशेषस्य चासिद्धिरुक्ता। ततो[15]ऽन्योन्याश्रयताऽनवस्थितिश्चक्रकं वा। भेदाभेदविलक्षणमप्युक्तरीत्यैवापाकृतम्।

---

१ "-गुणातीतत्वोक्तेस्तत्र" इति क्वचित्।

२ "स्वोक्तविरोधः" इति क्वचित्।

३ "यद्यविशिष्टं तर्हि न विशेष-" इति प्र. पाठः।

४ "-विशेषानुभवयुक्ति-" इति क्वचित्।

५ "-विशेषवत्त्वम्, स्वव्याहतेः" इति च क्वचित्।

६ "इत्युक्तेऽसद्विशेष-" इति क्वचित्।

७ "-शेषविशिष्टपक्षोक्त-" इति प्र. पाठः।

८ "-वाच्येव" इति प्र. पाठः।

९ प्र. पाठेऽयं 'च'कारो न पठ्यते।

१० "प्रकृतमर्थं सातिशयं गमयतः" इति प्र. पाठः।

११ "भेदाभेदो वा" इति प्र. पाठः। कोशेष्वपि केषुचित्।

१२ "नच व्यावहारिकम्" इति क्वचित् प्र. पाठः प्रामादिकः।

१३ "मिथ्यातथ्ययोः" इति प्र. पाठः।

१४ "-ज्ञानार्थिने" इति प्र. पाठः।

१५ "अतो-" इति पाठान्तरम्।

किञ्चासद्विलक्षणमित्यत्राभावान्यविरोधिनां[१] मध्ये नञः कोऽर्थः? यद्यभावः, न, असद्विलक्षणत्वं[२] भावत्वमेव जगतः स्यात्। नच सतोऽन्यस्मादसतो विलक्षणं जगत्। असतोऽन्यत्वादिधर्मानङ्गीकारात्। ब्रह्मणश्च। असतोऽनिर्वचनीयत्वाङ्गीकाराच्च न वैलक्षण्यं ततोऽनिर्वाच्यस्य[३]। तथाऽपि चेद् वैलक्षण्यमनिर्वाच्यत्वं न जगतः[४]। नच विरोधि[५]। विरोधिनोरन्यतरनिषेधेऽन्यतरत्वानुभवात्[६]। अविद्यमानं न भवतीत्युक्ते विद्यमानमित्येव हि सर्वलोकानुभवः। अतोऽनन्तगुणो भगवान् नारायण इति सिद्धम्॥ * ॥

नच सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावादीश्वराद्यसिद्धिः। सिद्धातिरिक्तकार्याभावात्। लिङाद्यर्थस्त्विष्टसाधनत्वमेव[७]। नहि कर्तव्यत्वं नामेष्टसाधनत्वादन्यत् किञ्चित्[८]। तन्मानाभावात्। शब्दस्तु न तद् वक्तीत्युक्तम्। लिङादेरिष्टसाधनत्वार्थत्वेनैव[९] कृतार्थत्वे तदन्यकार्य[१०]कल्पने कल्पनागौरवं च[११]। नच तत्कल्पकं[१२] किञ्चित्। विप्रतिपत्तौ चान्यन्मानं वक्तव्यं तद्भावे। नचानुमा। अप्रसिद्धविशेषणत्वात्। नचार्थापत्तिः। अनुपपत्त्यभावात्।

कार्याभावादेव कार्यान्वयान्वयिनि[१३] व्युत्पत्तिरित्यादि दूरतो निरस्तम्[१४]। कार्यान्विते व्युत्पत्तिरिति वदतोऽकार्यान्विते व्युत्पत्तिरित्युक्ते किमुत्तरम्? अध्याहार इत्युक्ते लोप इत्युत्तरम्। अशेषसिद्धपदानामर्थ[१५]लोपाल्लिङाद्यर्थमात्रलोप[१६] एव वरीयान्[१७]। हससि हसामीत्यादि

---

१ "–विरोधानाम्" इति प्र. पाठः।

२ "यद्यभावः, असद्विलक्षणत्वम्" इत्येकस्मिन् कोशे। यद्यभावो नञर्थः तर्हि असद्विलक्षणत्वं भावत्वमेव स्यादित्यर्थः। यद्यभावो नेति पाठेऽपि यद्यभावः नञर्थ इत्युच्यते स न युक्तः यतोऽसद्विलक्षणत्वं भावत्वमेव जगतः स्यादित्यर्थः। बहुषु प्राचीनकोशेषु नञ्घटितमेव वाक्यं पठ्यते। टीकायां च तथा।

३ "ततोऽनिर्वचनीयस्य" इति क्वचित्।

४ "वैलक्षण्यं नानिर्वाच्यत्वं जगतः" इति पाठान्तरम्।

५ "विरोधः" इति प्र. पाठः।

६ "अन्यतरव्याप्तत्वानुभवात्" इति प्र. पाठः। "अन्यत्वानुभवात्" इति क्वचित् कोशेषु।

७ "–साधनमेव" इति क्वचित्।

८ "किञ्चिदस्ति" इति प्र. पाठः क्वचित्।

९ "–साधनार्थत्वेनैव" इति प्र. पाठः।

१० "तदन्यकल्पने" इति क्वचित्।

११ प्र. पाठेऽत्र 'च'कारो न पठ्यते।

१२ "नच कल्पकम्" इति क्वचित्।

१३ "कार्यान्वयिनि कार्यान्वयान्वयिनि वा" इति प्र. पाठः। क्वचित्तु "वा"कारविरहितमिदं पठ्यते। "कार्यान्वयिकार्यान्वयान्वयिनि" इति त्वेकस्मिन् कोशे। अक्षरलोपः प्रमादतः स्यात्।

१४ "दूरतोऽपास्तम्" इति प्र. पाठः।

१५ "–सिद्धपदार्थ–" इति प्र. पाठः।

१६ "लिङाद्यर्थलोपः" इति प्र. पाठः।

१७ "गरीयान्" इति प्र. पाठः।

**सिद्धार्थ एव[1] बालानां व्युत्पत्तेः[2] । प्रथमप्राप्तत्वाच्च । नच तत्त्यागे[3] कारणम् । तथैव व्युत्पत्तिदर्शनाच्च । अतः सिद्धार्थे प्रामाण्यप्रसिद्धेश्च[4] सिद्धं महागुणत्वं विष्णोः[5] ॥ * ॥**

**ताश्च "विदा मघवन्" इत्याद्याः[6]—**

**[विदा मघवन् विदा गातुमनुशंसिषो दिशः ।**
**शिक्षा शचीनां पते पूर्वीणां पुरूवसो ॥ १ ॥]**

---

१ "प्रसिद्धार्थ एव" इति क्वचित् । २ "बालव्युत्पत्तेः" इति क्वचित् ।
३ "-प्राप्तत्वान्न तत्त्यागे" इति प्र. पाठः । ४ "प्रामाण्यसिद्धेश्च" इति प्र. पाठः ।
५ "महागुणवत्त्वं विष्णोः" इति क्वचित् प्र. पाठः ।
६ "विदा मघवन् विदेत्याद्याः" इति क्वचित् । ता एताः "विदा मघवन्" इत्याद्याः "विदा मघवन् विदो३म्" इत्यन्ता अत्रोद्धृता महानाम्नीऋचः ऐतरेयारण्यके ऐतरेय्या उपनिषदः समनन्तरं पठ्यन्ते । आद्वितीयप्रपाठकान्तं ऐतरेयी उपनिषत् । महानाम्न्यस्तु ऋचः तृतीयप्रपाठके प्रथमोऽध्यायः । आदितः पञ्चदशोऽध्यायः । आषष्ठाध्यायादा चतुर्दशाध्यायं ह्यैतरेय्युपनिषद् भवति । इममप्यध्यायमुपनिषद्भागतयैवापि पठन्ति । प्रजापत्यृषिकाणामासामृचां त्रैलोक्यात्मा इन्द्रो देवतेति सामवेदे स्थितम् । इन्द्रश्च परमैश्वर्याद् परमेव ब्रह्मेति स्फुटम् । अत एव "परस्य ब्रह्मणो यन्नामेन्द्रादिकं तन्महार्थत्वान्महत् । महद्धि तत् परं ब्रह्म, अशेषगुणसम्पूर्तेः" इति भगवत्पादवचनम् । अत एवच केवलमिन्द्रो देवतेत्यनुक्त्वा त्रैलोक्यात्मेन्द्र इत्युक्तमृषिभिः सम्प्रदायविद्भिः । प्रसिद्ध इन्द्रो हि स्वःपतिरेव भवति । दिवः परस्य लोकजातस्य द्युलोक एवान्तर्भावापेक्षया सप्तलोकाधिपतिः सर्वस्वामी भगवानेव हि त्रैलोक्यात्मेति युज्यते । आत्मा स्वामीति चानर्थान्तरमित्याकरे स्थितम् ।

एता ऋचः सामवेदेऽपि ईषद्व्यत्यासेन महानाम्न्यार्चिके (६४१–६५०) पठ्यन्ते । तद् यथा—

विदा मघवन् विदा गातुमनुशꣳसिषो दिशः ।
शिक्षा शचीनां पते पूर्वीणां पुरूवसो ॥ १ ॥
आभिष्ट्वमभिष्टिभिः स्वाऽ३र्न्नाꣳशुः ।
प्रचेतन प्रचेतयेन्द्र द्युम्नाय न इषे ॥ २ ॥
एवा हि शक्रो राये वाजाय वज्रिवः ।
शविष्ठ वज्रिन्नृञ्जसे मꣳहिष्ठ वज्रिन्नृञ्जस आ याहि पिब मत्स्व ॥ ३ ॥
विदा राये सुवीर्यं भुवो वाजानां पतिर्वशाꣳअनु ।
मꣳहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥
यो मꣳहिष्ठो मघोनामꣳशुर्न शोचिः ।
चिकित्वो अभि नो नयेन्द्रो विदे तमु स्तुहि ॥ ५ ॥
ईशे हि शक्रस्तमूतये हवामहे जेतारमपराजितम् ।
स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥

हे मघवन्, यशस्विन्, धनवन्[1], मखपत इति वा—

"तं वा एतं मखवन्तं[2] सन्तं मघवानित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः।", "तेभिरिन्द्रं चोदय दातवे मघम्", "तन्न

---

इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम्
स नः स्वर्षदति द्विषः स नः स्वर्षदति द्विषः ॥ ७ ॥
पूर्वस्य यत् ते अद्रिवोऽंशुर्मदाय ।
सुम्न आ धेहि नो वसो पूर्तिः शविष्ठ शस्यते ।
वशी हि शक्रो नूनं तन्नव्यंसंन्यसे ॥ ८ ॥
प्रभो जनस्य वृत्रहन् त्समर्येषु ब्रवावहै ।
शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ॥ ९ ॥
(अथ पञ्च पुरीषपदानि)
एवाह्येऽ३ऽ३ऽ३व । एवा ह्यग्ने । एवाहीन्द्र । एवा हि पूषन् ।
एवा हि देवाः ॐ एवा हि देवाः ॥ १० ॥

अयमर्थः । अत्र प्रथममन्त्रे तु न पाठव्यत्यास इति मूलोक्त एवार्थः ॥ १ ॥ द्वितीयमन्त्रे "स्वाऽर्न्नांशुः" इत्यधिकम् । अंशुरंशुमान् सूर्यः । भानुमान् भानुरितिवदंशुमानंशुरिति च भवति । स्वर्न स्वरादिलोकं यथा प्रबोधयेत् तथा नोऽस्मान् प्रचेतय प्रबोधयेत्यर्थः । यद्वा स्वः स्वर्गे लोके अंशुर्न भानुरिव द्योतमानः । परस्येव पूर्वस्यापि नञ उपमानार्थकत्वं युज्यत इति "अर्भको न कुमारकः" इति मन्त्रव्याख्याने मूल एवोत्तरत्र स्फुटम् । स्वर्न सूर्य इव अंशुर्भासमान इति वा ॥ २ ॥ चतुर्थे "रायः" इत्यस्य स्थाने "राये" इति पठ्यते । राये मोक्षाख्यवित्ताय तद्योग्यज्ञानाय वा सुवीर्यं सामर्थ्यं विद लम्भयेत्यर्थः ॥ ४ ॥ पञ्चमे मन्त्रे "अञ्जुर्न शोचिः" इत्यधिकम् । अञ्जु गतौ । अञ्जुः स्वप्रभया अभितो व्यापनशीलः भानुरिव शोचिः शोचमानः । द्योतमान इति यावत् । "स्तुषे" इति स्थाने "स्तुहि" इति पठ्यते । तं त्वामिन्द्रं त्वमेव स्तुहि । मदन्तः स्थित्वा स्तुतिकर्मणि मां प्रेरय । स्तावयेति यावत् । "न ऋते त्वत् क्रियते" इत्युक्तेः । स्तुहीति मन्त्रद्रष्टुः स्वात्मानं प्रत्येव सम्बोधनं वा । अन्यत् समानम् ॥ ५ ॥ षष्ठे "पर्षत्" इत्यत्र "स्वर्षत्" इति पाठभेदः । स नो द्विषः शत्रून् स्वर्षत् सम्यग् ज्ञापयतु । कानि मित्राणि के शत्रव इति विवेकवतोऽस्मान् करोतु । ऋष ज्ञाने । अस्माकं द्विषः क इति स एव स्वर्षत् सम्यग् व्यजानात्, जानातीति अस्मद्रक्षणभारस्तस्मिन्नेव निहित इति नास्माकं तत्र चिन्तेति वा । अन्यत् समानम् ॥ ६ ॥ उत्तरमन्त्रेऽपि स्वर्षदिति पूर्वोक्त एवार्थः । तात्पर्यार्थं पुनरुक्तिः । अत एव "अति स्वर्षत्" इत्यतिशयार्थः प्रयोगः ॥ ७ ॥ अष्टममन्त्रे "अंशुर्मदाय" इत्यधिकं पठ्यते । अंशुः प्रकाशरूपः । सूर्ये स्थित्वांऽशुपदवाच्यो वा । एवाहि पूषन् इति तस्याप्युपसंहारे श्रवणात् । ज्योतिर्मयं तन्नव्यं स्तुत्यं ब्रह्म मदाय स्वरूपानन्दाविर्भावाय हृदि सम्यक् न्यसे ध्यायामीति यावत् । "ईशे हि शक्रः" इत्यस्य स्थाने "वशी हि शक्रः" इति पठ्यते । 'ईशे' इति 'वशी' इति च नातिभिन्नार्थम् ॥ ८ ॥ उत्तरमन्त्रे जनस्य जनानां प्रभो स्वामिन् । जनानां मध्ये अर्येषु आर्येषु पूज्येष्वेव ब्रवावहै इति वा । "अनार्यकायानृजवे शठाय मा स्मा ब्रूयाः" इत्युक्तेः । अद्वया अद्वयुरिति चैकार्थम् । आकार उकारश्चातिशयार्थः अद्वितीयत्वमेव पुष्णाति ॥ ९ ॥ भगवद्गुणपूरणात् पुरीषाणि पदानि स्फुटार्थानीति ॥ १० ॥

१ "मघवन् धनवन् यशस्विन्" इति प्र. पाठः । २ "मघवन्तम्" इति मुद्रितः पाठः प्रामादिकः ।

आयातु मघम्[1]। यशो वाव मघम्[2]। मघमनु प्रापत्सि।", "आ मामेतु मघम्। मघमनु प्रापत्सि। धनं वाव मघम्" इत्यादिश्रुतिभ्यः।

गातुं त्वां स्तोतुम्। विद वेदयेति सामान्यतोऽपेक्षिताशेषवेदनमुक्त्वा तात्कालिकापेक्षितं[3] प्रार्थयति[4]— गातुं विदेति। त्वमेव अनुशंसिषो[5] दिशः मार्गान्। आत्मनः स्तुतिप्रकारान् [6]स्वयमेवोपदिशेत्यर्थः। पूर्वीणां भगवत्सम्प्रदायागतानां परमविद्यानामर्थे शिक्ष। शचीनां विद्यानां पते, वाचां पत इति वा। पुरुवसो[7] बहुवित्त, बहुज्ञानेति वा। बहुषु वसति, बहूनामावास इति च[8]॥ * ॥

[आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय।
इन्द्र द्युम्नाय न इष एवा हि शक्रः॥ २॥]

आभिरभिष्टिभिः एवम्भूतैस्त्वत्पर्येषणैः त्वत्प्रार्थनैः त्वं [9]किञ्चिन्मदादिकं प्रचेतय प्रबोधय। प्रकृष्टचेतन सर्वज्ञ परमात्मन्। द्युम्नाय ज्ञानाय, वित्ताय, यशसे वा। इषे अन्नाय, नः[10] प्रबोधय। एतादृशो हि शक्रः। शक्र एवेति वा। शक्तिरतिरूपत्वाच्छक्रः॥ * ॥

[राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे।
मंहिष्ठ वज्रिन्नृञ्जस आ याहि पिब मत्स्व॥ ३॥ १॥[11]]

---

१ "मघाय" इति पाठान्तरम्। प्राचीनकोशे तु "मघम्" इत्येव पाठः। मघमुद्दिश्य, मघं दातुमिति यावत्, तद् ब्रह्म नोऽस्मानायातु।

२ "यशो वा मघम्" इति क्वचित् प्र. पाठः प्रामादिकः।

३ "तात्कालिकापेक्षितार्थम्" इति प्र. पाठः। "तत्कालापेक्षितम्" इति क्वचित्।

४ "प्रार्थयते" इत्यपि क्वचित् पठ्यते।

५ "अनुशासिषः" इति प्र. पाठः प्रामादिकः।

६ "त्वमेवोपदिशेत्यर्थः" इति प्र. पाठः।

७ "पुरूवसो" इति क्वचित् पठ्यते। 'पुरुऽवसो' इति हि पदपाठः। संहितायां तु "पुरूरवाः", "पुरूतमम्" इतिवत् "रथीतमम्" इतिवत्, "ज्यायांश्च पूरुषः" इतिवत्, "विदा गातुम्", "शिक्षा शचीनाम्" इत्यादिवच्च दैर्घ्यम्। "संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते। उक्तार्थस्य महाधिक्यम्" इति तदेतद् विवृतम्। तेन पुरूवसो इति सांहितेन पाठेन निरवधिकं बहुज्ञत्वं तादृशमैश्वर्यं च सूचितं भवति।

८ "इति वा" इति पाठान्तरम्।

९ "कञ्चिन्मदादिकम्" इति पाठान्तरम्।

१० "इषे अन्नाय च नः" इति प्र. पाठः। "अन्नाय वा नः" इति क्वचित्।

११ ऋृचविभागेन तिस्रो महानाम्न्य इति पक्षे इदं लिकं (१-३) प्रथमा महानाम्नी।

राये वित्ताय ज्ञानाय वा। वाजाय अन्नाय[1]। वज्रिणमिन्द्रं वर्तयतीति वज्रिवा[2]। नियामकत्वेन गच्छतीति वा। शविष्ठ बलवत्तम, सुखवत्तमेति वा। ऋञ्जसे प्रेरयसि सर्वान्। "मंहिष्ठ वज्रि-ऋञ्जसे" इत्यभ्यासस्तत्पर्यायार्थः। मत्स्व मदं कुरु ॥ * ॥

[विदा रायः सुवीर्यं भुवो वाजानां पतिर्वशाँअनु।
मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥]

विद वेदय[3] लम्भय रायः सुवीर्यं च। वाजानां प्रजानां पतिः भुवः अभवः। "प्रजा वै वाजः" इति श्रुतेः[4]। वशमनु[5] यथावशम्। "वश इच्छायाम्" इति धातोः, यथावशं यथेच्छम्। शूराणां सकाशाद् बलवत्तमः[6] ॥ * ॥

[यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय।
इन्द्रो विदे तमु स्तुषे वशी हि शक्रः ॥ ५ ॥][॥ १[7] ॥]

मघोनां यशस्विनां महत्तमः। चिकित्वः ज्ञातः, कर्तरिति वा। नः अभितः सर्वतो नय। इन्द्रो विदे समस्तं व्यजानात्। तमेव स्तुषे[8] ॥ * ॥

[तमूतये हवामहे जेतारमपराजितम्।
स नः पर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥ २[9] ॥]

---

१ "राये वित्ताय वाजाय अन्नाय" इति प्र. पाठः।

२ "वज्रिवाः" इति पाठान्तरम्। "वज्रिवः" इति प्र. पाठः क्वचित्।

३ "विदा वेदय" इति क्वचित् प्र. पाठः प्रामादिकः। सांहितस्य दैर्घ्यस्य पदपाठेऽनवसरात्।

४ "इत्यादिश्रुतेः" इति क्वचित्।

५ "वशाँअनु" इति क्वचिन्मुद्रितः पाठः। "वशाननु" इति क्वचित् कोशे।

६ क्वचित् "बलवत्तम" इति सम्बुद्ध्यन्तः प्र. पाठः प्रामादिकः।

७ आद्याः पञ्च मन्त्राः प्रथमा महानाम्नीति पक्षे अत्र प्रथमभागपूर्तिः। द्वयमप्येतत् प्रमाणसिद्धमित्युत्तरत्र मूले स्फुटम्। "त्र्यृचास्तिस्रो महानाम्न्यः, पञ्चर्चा प्रथमा परा" इत्यादि हि वक्ष्यति।

८ "हे चिकित्वः, सर्वज्ञ सर्वकारण भगवन्, त्वमस्मान् सर्वतो नय। किं निमित्तम्? यो मघोनां मंहिष्ठः, यश्चेन्द्रः परमेश्वरो विदे वेद समस्तम्, तं त्वामेव स्तुषे स्तोतुम्। "तुमर्थे से–" (३. ४. ९.) इति पाणिनिः। यतः सर्वशक्तो भगवानेव वशी सर्वकर्मसु स्वतन्त्रः। अतस्तमेव स्तुषे स्तौमीति मन्त्रदृक् स्वात्मानमेव वाऽऽह।

९ त्र्यृचविभागेन इदं द्वितीयं त्रिकं (३–६) द्वितीया महानाम्नी भवति।

ऊतये रक्षायै, अभिप्रायसिद्धये वा । स नो द्विषः शत्रून् अतिपारयतु, पापानि तमांसि (वा[1]) । क्रतुः ज्ञानरूपः । छन्दः इच्छारूपः । छन्द्यत्वात्, छादनत्वाद् वा । ऋतं अशेषशास्त्रावगतम् ॥ ॥ * ॥

[इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ।
स नः पर्षदति द्विषः स नः पर्षदति स्रिधः ॥ ७ ॥]

सातये लब्धये । स्रिधः विनाशात्[2] ॥ * ॥

[पूर्वस्य यत् ते अद्रिवः सुम्न आ धेहि नो वसो ।
पूर्तिः शविष्ठ शस्यत ईशे हि शक्रः ॥ ८ ॥ ][॥ २[3] ॥]

पूर्वस्य अनादेः ते[4] सकाशात् यत् सुम्नं सुखं तस्मिन् न आधेहि । तव पूर्तिः शस्यते[5] ॥ * ॥

[नूनं तन्नव्यं सन्न्यसे प्रभो जनस्य वृत्रहन् ।
समन्येषु ब्रवावहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः ॥ ९ ॥]

तन्नव्यं स्तुत्यं ब्रह्म । तत् सम्यक् हृदि न्यसे[6] जनस्योपदेशेन । त्वत्स्वरूपेषु[7] त्वं चाहं च सम्ब्रवावहै । गोषु ज्ञानेषु गच्छति ज्ञानविषयो भवति । सुशेवः[8] सुसुखः । समाधिकरहितः अद्वयः ॥ * ॥

---

१ प्राचीनकोशे "वा" इत्येतन्न पठ्यते । गलितं स्खलितं वा भवेत् ।

२ "विनाशान्" इति प्र. पाठः । प्राचीनपाठे द्विषः शत्रुस्थानीयानि अज्ञानपापादीनि अतिपारयतु । ततश्च पापनिमित्तात् स्रिधः विनाशात् नरकाद्यनर्थाच्च नोऽतिपारयतु । विनाश इति नरकाद्यनर्थ उच्यते । "विनश्यति नरकाद्यनर्थं प्राप्नोति" इति हि गीताभाष्ये ।

३ आद्यानां पञ्चमन्त्राणां प्रथमभागगतत्वपक्षे ततः परमिदं त्रिकं (६–८) द्वितीया महानाम्नी ।

४ "अनादेः सतस्ते सकाशात्" इति प्र. पाठः । "अनादेः सतस्तव सकाशात्" इति क्वचित् ।

५ तव पूर्तिः शस्यते । यतो भवानेव हि सर्वस्य ईशो ईष्टे । अत्र मन्त्रे 'अद्रिवः'पदं "अद्रिरादरणीयत्वात् प्राणस्तद्वर्तकोऽद्रिवाः" इत्यृग्भाष्ये विवृतमिति नात्र पुनर्व्याख्यातम् ।

६ "हृदि सन्यसे" इति प्र. पाठः प्रमादिकः । उपदेशेन जनस्य हृदि न्यसे इत्यन्वयः ।

७ "तत्स्वरूपेषु" इति क्वचित् प्र. पाठः ।

८ "सुशेवः सुखरूपः" इति क्वचित् ।

[एवाह्येवैवाह्यग्ना३इ ॥ १ ॥ एवाह्येवैवाहीन्द्रँ ॥ २ ॥ एवाह्येवैवाहि विष्णा३उ ॥ ३ ॥ एवाह्येवैवाहि पूषन् ॥ ४ ॥ एवाह्येवैवा हे देवाः ॥ ५ ॥ एत्रा हि शक्रो वशी हि शक्रो वशाँअनु ॥ ६ ॥]

"एवा ह्येवैवा हि" इत्यग्न्यादिदेवता[1]संवादरूपेणोक्तमर्थमतिशयेनावधारयति । अभ्यासो हि तात्पर्यार्थः । एवं हि एवमेवहीत्यर्थः[2] । "विनिश्चिते तु संवादे विभागो रङ्ग एव च" इति शब्दनिर्णये । अतः 'अग्नाइ' इत्यादि[3] । एवमेव हि शक्रः वशाननु वथावशं स्वतन्त्रो वर्तत इत्यर्थः ॥ * ॥

आयोमन्याय मन्यव उपोमन्याय मन्यवे ।
उपेहि विश्वध ॥ १० ॥ विदा मघवन् विदो३म्[4] ॥ ७ ॥ ३[5] ॥]

आयो इत्यायतिः[6] । उपो इतिवदतिशयार्थ ओकारः । "ओ अतिशये" इति सूत्रम्[7] । आयो जानातीत्यायोमन्यः । समीपस्थितमपि[8] जानातीत्युपोमन्यः । अन्येषामिन्द्रियाणां पराङ्मुखत्वान्नह्यान्तरं जानन्ति[9] । अयं त्वान्तरमप्यापरोक्ष्येण पश्यति । अयनेन गमनेन प्राप्यं[10] दूरस्थ-

---

१ "—देवतानां संवाद—" इति प्र. पाठः ।

२ "एवाहि एवमेव हीत्यर्थः" इति क्वचिन्मुद्रितः पाठः प्रामादिकः । एवा हीत्यस्यार्थः एवं हीति । एवैवा हीत्यस्य एवमेवहीति ।

३ "अग्न इत्यादि" इति प्र. पाठः प्रामादिकः ।

४ 'विदा मघवन् विदा ॐ' इति स्थिते "प्रणवष्टेः" (८.२.८९.) इति पाणिनिस्मरणात् 'विदो३म्' इति भवति । पदस्य योऽन्त्यः स्वरः तदाद्यक्षरशेषस्य हि टिसंज्ञा । तस्य टेः स्थाने य ओङ्कारः स प्रणव इति शास्त्रसङ्केतः । टिस्थानिनः प्रणवसंज्ञस्य ओङ्कारस्य त्रिमात्रत्वं चात्र प्रणवष्टेरिति विधीयते । तेन विदा इत्यत्र टेराकारस्य लोपे विद् ओम् इति स्थिते प्रणवस्य प्लुतत्वे 'विदो३म्' इति रूपम् । तथाहि महाभाष्ये पतञ्जलिः—"प्रणव इत्युच्यते । कः प्रणवो नाम ? पादस्य वाऽर्धस्य वाऽन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोङ्कारं त्रिमात्रमोकारं वा विदधति तं प्रणव इत्याचक्षते" (८. २. ८९.) इति ।

५ अत्र तु पक्षद्वयेऽपि तृतीयभागपूर्तिः । त्रिकविभागे द्वौ मन्त्रौ किलावशिष्येते । तयोरन्त्यत्रिकेऽन्तर्भावविवक्षया (७–११) प्रथमपक्षप्रवृत्तिः । प्रथमत्रिकेऽन्तर्भाव्य पञ्च त्रयस्त्रय इति त्रिकमिति द्वितीयपक्षप्रवृत्तिः ।

६ "अय पय गताविति धातोः आयो इत्यायतिः" इति प्र. पाठे पठ्यते । प्राचीनकोशे तु धातुपाठे न पठितः । कोशेष्वपि क्वचित् पठ्यते ।

७ "इति च सूत्रम्" इति क्वचित् प्र. पाठः ।

८ "समीपस्थमपि" इति प्र. पाठः ।

९ "जानन्तीति" इति क्वचिन्मुद्रितः पाठः ।

१० "अयनेन प्राप्यम्" इति क्वचित् प्र. पाठः ।

मायो इति वा[1]। "मनु अवबोधने" इति धातोर्मन्युरिति ज्ञानी। बाह्यज्ञाय ज्ञानिन आन्तरज्ञाय ज्ञानिन इत्यभ्यासोऽतितात्पर्यार्थम्[2]। एवंविधं मद्गतं त्वामुद्दिश्यैवोपेहि। विश्वध विश्वधारक। समीपतो दूरतश्च त्वां मन्यमानाय मह्यं मन्यवे ज्ञानाय मामुपेहीति वा—

"समीपतो दूरतो ज्ञं[3] त्वामुद्दिश्यैव मद्गतम्। एहि विष्णो न मे शक्तिस्त्वदाह्वाने हि मामुप। इति ब्रह्माऽस्तुवद् विष्णुं तन्नाभ्युत्थितपद्मगः" इति पाद्मे। "समीपे दूरतश्चैव ध्यायन्तं त्वां सदा विभो। मामेहि ज्ञानदानायेत्याह गाधिसुतो[4] हरिम्" इति स्कान्दे ॥ * ॥

"ओतमस्मिन् जगद् यस्मादोमित्युक्तो हरिः सदा। तमेतं[5] जगदाधारं यतयः समुपासते" इति मान्यसंहितायाम्[6] ॥ * ॥

"इन्द्रो वा एताभिर्महानात्मानं निरमिमीत"[7] इत्यस्याप्युक्त एवार्थः। निर्माणं नामाऽऽत्मनस्तद्व्याख्यानेन ख्यापनम्[8]। नह्यन्यथा तासां करणत्वं[9] भवति।

"यस्तद् वेद स पितुष्पिताऽसत्" इति च श्रुतिः[10]। "त्रीणि पदा निहिता गुहासु यस्तद् वेद स पितुष्पिताऽसत्[11]।", "स्त्रियः सतीस्ताँ उ मे

---

१ "इति च" इति क्वचित्। २ "अतितात्पर्यार्थः" इति पाठान्तरम्।

३ "समीपे दूरतोऽभिज्ञम्" इति प्र. पाठः प्रामादिकः। "समीपदूरतोऽभिज्ञ" इत्यपि क्वचित्। "समीपद्दूरतोऽभिज्ञम्" इति च।

४ "गाथिसुतो हरिम्" इति क्वचित्। ५ तमेव" इति प्र. पाठः। "तमेवम्" इति क्वचित्।

६ "मानसंहितायाम्" इति क्वचित्।

७ तथाहि ब्राह्मणम्– "महानाम्नीष्वत्र स्तुवते शाक्करेण साम्ना रथन्तरेऽहनि पञ्चमेऽहनि पञ्चमस्य रूपमिन्द्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्यः" (पं. ५. अ. २. ब्रा. ७.) इति।

८ "स्थापनम्" इति प्र. पाठः। ९ "कारणत्वम्" इति क्वचित्।

१० "इति श्रुतिः" इति क्वचित् प्र. पाठः।

११ एतत्समानार्था सदृशानुपूर्वी च श्रुतिः माध्यन्दिनेषु पठ्यते। आथर्वणेषु च पठ्यते। तथाहि—

प्र तद्वोचेदमृतं नु विद्वान् गन्धर्वो धाम विभृतं गुहा सत्।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पिताऽसत् ॥
(शु. य. ३२. ९)

प्र तद्वोचेदमृतस्य विद्वान् गन्धर्वो धाम परमं गुहा यत्।
त्रीणि पदानि निहिता गुहाऽस्य यस्तानि वेद स पितुष्पिताऽसत् ॥
(अथ. सं. २. १. २)

**पुंस आहुः पश्यदक्षण्वान् न विचेतदन्धः। कविर्यः पुत्रः स ईमा[1] चिकेत यस्ता विजानात् स पितुष्पिताऽसत्" इत्यादिश्रुतिभ्यो विज्ञान-**

---

अयमर्थः—अमृतं शाश्वतं धाम तेजः। "परमं यो महत् तेजः" इति स्मरणात्। आथर्वणे च परमं धामेति स्फुटं श्रवणात्। तत्र अमृतस्य धामेति षष्ठीनिर्देशस्तु विशेषविवक्षया। "भर्गो देवस्य" इति श्रवणात्। उभयथाऽपि ऋषयः पश्यन्ति मन्त्रद्रष्टारः। 'आनन्दो ब्रह्म' इति पश्यन्ति; 'आनन्दं ब्रह्मणः' इति च पश्यन्ति। धाम आश्रयस्थानमिति वा। "परमं यः परायणम्" इति च स्म हि स्मर्यते। कीदृशं धाम? विभृतम्। विशेषतो भृतं मनसि मनस्विभिः। अथ च विभृतं विहृतम्। विहारोऽयं परमस्य धाम्नः यत्सृजत्यवति संहरति चेति। "क्रीडामात्रं प्रभोः सृष्टिः" इति श्रुतिः। "लीलाकैवल्यम्" इति भगवत्तमः स्वयमेवाऽह। "सोऽयं विहार इह" इति भगवत्पादश्च। यदि क्रीडत्येवं किं न दृश्यते सर्वैः? गुहा सत्। गुहायां सत्। "गुहा सन्तं मातरिश्वा मथायति" इति ह्यन्यत्र। तर्हि कथमस्तीति प्रज्ञायते? गन्धर्वो विद्वान्। गन्धर्वो हि तद् वेद। गन्धर्वः कः? गां वेदवाचं धारयतीति यो वेदतत्त्ववित्। "नावेदविन्मनुते" इति, "वेदा ह्येवैनं वेदयन्ति" इति च श्रवणात्। ननु कथं वयं जानीमः ये न गन्धर्वाः? प्र तद् वोचेत्। स गन्धर्व एव तदौपनिषदं धाम अस्माकमुपसन्नानां प्रवोचेत्। गुरूपदेशेन तज्ज्ञातव्यमित्येतत्। नानुमानादिना। "प्रोक्ताऽन्येनैव सुज्ञानाय" इति श्रवणात्। अस्य त्रीणि पदानि अनन्तासनश्वेतद्वीपवैकुण्ठाख्येषु गुहासु निहितानि। यस्तानि रहस्यरूपाणि वेद स सर्वपितुरपि पिता भवतीति।

बहुशाखाविदाऽऽचार्येण तु एतत्सदृशानुपूर्वीकं शाखान्तरगतं वचनमुद्धृतमित्यवगम्यते। अर्थस्तु समानः। इयं च परिपाटी सर्वत्र भगवतो दृश्यते। तथाह्युक्तं तत्त्वदीपिकायां "धृतेश्च—" (१. ३. १६.) इति सूत्रभाष्यव्याख्याने—"स सेतुरिति वक्तव्ये छन्दोगवाक्ये एष सेतुरिति वदता भगवता समानरूपं श्रुत्यन्तरमपि विषयवाक्यमादीयत इत्यावेदितम्। एवम्भूतेषु वचनभेदेष्वयमेवाऽऽशयो बोद्धव्यः" इति।

१ "इमा चिकेत" इति कोशपाठः प्रमादपतितः। "सः ईम् आ चिकेत" इति हि श्रुतिपदपाठः। तथाहि श्रुतिरियं बाह्वृचे (१. १६४. १६), तैत्तिरीयारण्यके (१. ११. ४), आथर्वणे (९. ९. १५.) च पठ्यते। तत्रर्ग्वेदे तावद् दीर्घतमोदृष्टे अस्यवामस्यसूक्ते मन्त्रोऽयं पठितः। तत्र विश्वे देवा देवताः। सर्वदेवान्तर्यामी बहुरूपो भगवानिति यावत्। आथर्वणे चेदं ब्रह्मदृष्टे आत्मसूक्ते पठ्यते। तत्र चाऽदित्यनामा गायत्रीप्रतिपाद्यो नारायणो देवता। उभयथाऽपि भगवत्परमिदम्। तथाह्युपक्रमे—"सप्त युञ्जन्ति रथमेकचक्रम्" इति; "द्वा सुपर्णा सयुजा सखाया" इति, "सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति" इति चोपरिष्टात्। तथाचायं श्रुत्यर्थः— स्त्रियः सतीः यानि निरवद्यानि स्त्रीरूपाणि, ताँ उ पुंस आहुः, तान्येव पुंरूपाणीत्याहुः मे मह्यमुपदेशका इति दीर्घतमोवचनम्। ब्रह्मदृष्टत्वावस्थायां मे मदीयानि मदुपास्यानि रूपाणीदृशानीति ज्ञानिन आहुः। अथवा मे मह्यं ब्रह्मणे आहुरुपदिशन्ति स्म इत्येवार्थः। यद्यपि ब्रह्मणो भगवानेक एवोपदेष्टेति न बहुवचनमुपपद्यते। तथाऽपि व्यासहंसादिरूपभेदाद् वा गौरवाद् वा बहुवचनमिति स्थितिः। "तेने ब्रह्म हृदा य आदिकवये" इति हि स्मृतिः। ब्रह्मणे स्वरूपाणि स्वयमेवोपदिदेश भगवानित्येतावत्। य एतत् पश्यति स एव चक्षुष्मान् प्राप्तचक्षुष्फलत्वात्। "अक्षण्वन्तः कर्णवन्तः" इत्यादिवत्। यस्तु न विचेतति सोऽन्ध एव नूनम्। योऽहमादिकविः पुत्र इति चतुर्मुखपरत्वे स्वनिर्देशः। दीर्घतमोदृष्टत्वावस्थायां यः स ब्रह्मेति परोक्षवचनम्। ईमित्येवार्थे। यो मुख्यः पुत्रः ब्रह्मा, अपरे च पुत्रतुल्या ज्ञानिनः, स एव च वेद, त एव च विदुः। वेदनादेव हेतोः पुत्रः पितुरपि पिताऽसदभवदिति।

**मेव हि तन्निर्माणम्[1] । "इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः[2]" इत्यादेर्विज्ञापनं वा ॥ * ॥**

---

ननु अन्यथाऽपि व्याख्यानं भवति । आह उव्वटः वेदभाष्ये-"स पितुरपि पिता भवति परं ब्रह्म भवति । तद्धि ब्रह्मरूपं श्रेष्ठम्" इति । महीधरोऽप्याह- "पितुः ब्रह्मणोऽपि पिता परमात्मा असत् भवति । परं ब्रह्मैव भवतीत्यर्थः" इति । तदिदं मूर्खाणां प्रलपितं भवति । नह्यभेदः श्रुतिगोचर इत्युक्तमन्यत्र । "कविर्यः पुत्रः-" इति मन्त्रे मन्त्रद्रष्टुः पुत्रत्वेन निर्देशात् पितुरिति षष्ठयन्तेनैव भगवद्बोधौचित्यात् । चतुर्मुखस्याप्रसक्तत्वेन पितुरिति तदुल्लेखानौचित्याच्च । अपिच सर्वजनकत्वात्पिता भगवानित्युचितम् । नहि चतुर्मुखः पितेति प्रसिद्धः । पितामह इति हि तं वदन्ति । किञ्च "स्त्रियः सतीः-" इति मन्त्रस्याऽथर्वणे पठितस्य स्वयं ब्रह्मदृष्टत्वेन तत्र पितुरिति कथं स एवोच्येत? तत्र हि स्वपितुर्विष्णोः स्वयं ब्रह्मा पिता ज्ञातृत्वेन भवतीत्यनिच्छताऽपि तेन व्याख्येयम् । एतेन "स पितुः पिता भवति, पुत्रपौत्रादिकं तस्य वर्द्धते" इति यत् सायण आह तदपि परास्तम् । नहि पुत्रपौत्रादिमात्रं धनधान्यादिमात्रं लौकिकमर्थं समीहमाना वेदेष्वधिकृता भवन्ति । परावरदृशो ह्यलौकिकज्ञा वेदव्याख्यानमर्हन्ति । किञ्च स ज्ञानी स्वपौत्रस्य पितुः पिता भवतीत्यपूर्वं व्याख्यानकौशलमिदम् । अज्ञानी किलापि हि स्वपौत्रस्य पितुः पिता भवति । नहि पुत्रपौत्रोत्पादनायापि ब्रह्मज्ञानमपेक्ष्यते । अज्ञानेनापि पूर्यते । एतादृशं वेदापचारमेव मनसि निधायोक्तं पाद्मे "पुत्रस्योत्पादने दक्षा अदक्षा मोक्षसाधने" इति ।

१ "-मेव तन्निर्माणम्" इति प्र. पाठः ।

२ मन्त्रोऽयमृग्वेदे (४. ५८. ४.), वाजसनेयके यजुर्वेदे (१७. ९२.), तैत्तिरीयारण्यके (१०. १०. २.) च पठ्यते । तथाच समग्रो मन्त्रः—

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥

वामदेवदृष्टोऽयं मन्त्रः अग्निदेवतः घृतदेवतो वा । अग्रणीत्वादग्निनामा वा दीप्तत्वाद् घृतनामा वा नारायण इति यावत् । पूर्वमन्त्रावलोकनेनैतत् स्फुटम् । तथाहि प्रथमो मन्त्रः—

समुद्रादूर्मिर्मधुमाँउदारदुपांशुना सममृतत्वमारट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥

महतः शब्दसमुद्राद्भगवद्गुणरूपोऽर्थभूत ऊर्मिः मधुरादपि मधुर उदगच्छत् । उपांशुना गुह्येन येनावगतेन ज्ञानी अमृतत्वं समश्नुते । किं गुह्यम्? घृतस्य दीप्तस्य पवित्रस्य च भगवतो यद्गुह्यं नाम तदिदं देवानां जिह्वा आह्वानम् । सर्वाणि देवाह्वानान्येव भगवतो मुख्यं नामेति यावत् । तदेवं यो देवानां नामधा एक एव स एवामृतस्य नाभिः मुक्तानां परमा गतिः । अत एव तद्विदमृतत्वं समारारूहि ।

अथ द्वितीयः—

वयं नाम प्र ब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद् गौर एतत् ॥

अतोऽग्नीन्द्रादिदेवतानामभिर्वयं विष्णोरेव नाम प्र ब्रवाम अस्मिन् जीवनयज्ञे । निरन्तरं नमोभिरेव धारयाम । शस्यमानं च नाम वेदराशिरूप शृणोतु । मन्त्रदेवताः प्रार्थ्यन्ते । अपौरुषेयतया स्वयं गौरः शुद्धः चतुःशृङ्गः वेदचतुष्टयात्मा ब्रह्मा एतद् घृतं भगवत्तत्त्वमवमीदुद्गिरतु स्फुटं ज्ञापयत्विति ।

"प्रचेतन", "प्रचेतय", "आ याहि पिब मत्स्व", "क्रतुश्छन्द ऋतं बृहत्", "सुम्न आ धेहि नो वसो" इत्युपसर्गाः । अंशा अप्यंशयपेक्षयोपसर्गा भवन्ति । उपसृष्टत्वादुपसर्गाः ।

"अन्तर्गतं बहिर्गतं च[1] द्विधा स्यादुपसर्जनम् । हस्तवद् हेतिवच्चैव पदानां चोपसर्गवत्" इति शब्दनिर्णये ।

"अधस्तान्यं जठरे प्रेमरिच्यत प्रचेतन" (१) ।" दाता राधः स्तुवते काम्यं वसु प्रचेतय" (२) । "अस्माकं बोधि चोदिता आ याहि[2] पिब मत्स्व" (३) । "तं त्वा परि ष्वजामहे क्रतुश्छन्द ऋतं

---

अथ तृतीयः—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥

चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । अथच चत्वारि परापश्यन्तीमध्यमावैखरीरूपाणि । त्रयो अस्य पादाः त्रयः काला भूतभविष्यद्वर्तमानाः । द्वे शीर्षे द्वावर्थभूतौ मुख्यो भगवान् समाकर्षेण च जगदिति । सप्त हस्तासो अस्य । सप्त विभक्तयः कारकाणि वा । त्रिधा बद्धः त्रिषु स्थानेषु बद्धः । उरसि कण्ठे शिरसीति । वृषभो वर्षणाद् वेदात्मा शब्दराशिः । रोरवीति घोषयति । किम्? महान् देवः भगवान् मर्त्यानन्तर्यामितया आविवेशेति । सर्वान्तर्यामी भगवान् सर्वशब्दाभिधेय इतीदं सर्वशास्त्रार्थ इत्येतावत् ।

अथच चत्वारि शृङ्गाणि चत्वारो वेदाः । शृङ्गग्राहिकया गवादिकमिव भगवन्तमिमे ग्राहयन्तीति । त्रयो अस्य पादाः स्वरूपभूताः त्रिपादस्यामृतं दिवीति कथिताः । द्वे चिदचिती अस्य शीर्षे श्रयणात् । सप्त च्छन्दांसि लोका वा क्रियानिर्वर्तकत्वादस्य हस्तासः । त्रिधा बद्धः श्वेतद्वीपे अनन्तासने वैकुण्ठे । अथच त्रिधा बद्धः अध्यात्मं हृदये कण्ठे चक्षुषि च । सुषुप्तिस्थाने स्वप्नस्थाने जागरितस्थाने च । वृषभोऽभीष्टवर्षिता । रोरवीति शब्दं करोति ब्रह्मादीनुपदिशति । किम्? महान् देवः मर्त्यानाविवेशेति । आवेशप्रयोजनं च जागरिताद्यवस्थाप्रेरणमिति पूर्वमेव त्रिधा बद्ध इत्युक्तम् ।

तदेवं सर्वशास्त्राणां भगवत्परत्वं तस्य सर्वपदवाच्यत्वं सर्वव्यापकत्वं सर्वनियामकत्वं चाभिधायेदमिदानीमुच्यते–त्रिधा हितं पणिभिर्गुह्यमानमिति । पणिभिर्वेदार्थं व्यवहरद्भिः वेदवचनैः स्तुवद्भिर्वा देवैः ऋषिभिश्च गुह्यमानं गोप्यमानम् । "परोक्षप्रिया इव हि देवाः" इति हि वदन्ति । त्रिधा बद्धम्, त्रिषु ऋक्सामनिगदेषु, त्रिषु लोकेषु, त्रिषु चक्षुःकण्ठहृदयेषु, अथच कर्मिणां त्रिषु सवनेषु हितं निहितं घृतं दीप्तं भगवन्तं देवासो गवि वेदवाचि अन्वविन्दन् । गूढं सन्तं मथित्वा निर्ज्ञातवन्तः । अथ च ज्ञात्वा इन्द्र एकं जजान ज्ञापितवान् । सूर्य एकं ज्ञापितवान् । वेनां वेदनां अत्ति आशयतीति वेनात् पापफलवेदनां भोजयिता देवताविशेष एकं ज्ञापितवान् । वेनां पीडां अत्ति नाशयतीति च व्याचक्षते । "पीडां वेनेति च प्राहुः" इति, "नाशो विनाश अदनम्" इति, "वेनाद् दुःखस्य नाशनात्" इति च तत्र प्रमाणान्युदाहरन्ति । एवं स्वधया सुखेन देवाः भगवन्तं निष्टतक्षुः निर्ज्ञापितवन्त इति । अत्र हि जजानेति निष्टतक्षुरिति च विज्ञापनमेव निर्माणमभिहितम् । वेनादग्नेः सकाशादिति पञ्चम्यन्तं पदमेतदिति परे उव्वटसायणमहीधरादयो व्याचक्षते ।

१ "बहिर्गं च" इति पाठान्तरम् । प्राचीनपाठे एकाक्षराधिकः पादः ।

२ "चोदिताऽऽयाहि" इति संश्लेषेण प्र. पाठे पठ्यते । उपसर्गाणामादृतत्वात् प्रायो न मूले सन्धिः कृतः ।

बृहत्" (४) "या ते रातिर्ददिर्वसु सुम्न आ धेहि नो वसो" (५) इत्युपसृजति[1] ॥ * ॥

---

१ अयमत्र मन्त्रोपसर्गक्रमः । द्वितीयमण्डले द्वाविंशे सूक्ते चत्वारो मन्त्राः पठ्यन्ते गार्त्समदा इन्द्रदैवत्याः । तत्र आद्यस्त्र्यृचः महाव्रते माध्यन्दिने सवने स्तोत्रियः । तदुक्तमाश्वलायनेन- "त्रिकद्रुकेषु महिषो यवाशिरं प्रो-ष्वस्मै पुरोरथमिति तृचावतिच्छन्दसौ" (श्रौ. सू. ६. २.) इति । ऐतरेयारण्यकेऽपि-"त्रिकद्रुकेषु महिषो यवाशिर-मिति स्तोत्रियः" (५. १.) स चायं त्र्यृचः-

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत् सोममपिबद् विष्णुना सुतं यथावशत् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ १ ॥
अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवदा रोदसी अपृणदस्य मज्मना प्र वावृधे ।
अधत्तान्यं जठरे प्रेमरिच्यत सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ २ ॥
साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।
दाता राधः स्तुवते काम्यं वसु सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ ३ ॥
(ऋ. मं. २. २२. १-३.)

अत्र प्रथममन्त्रे त्रिषु पादेषु षोळशाक्षरत्वात् चतुर्थपञ्चमयोरष्टाक्षरत्वात् स्वत एव षोळशित्वमिति नोपसर्गावकाशः । चतुःषष्ट्यक्षरा ह्यष्टिर्नाम च्छन्दः । केवलं द्वितीये तृतीये च मन्त्रे षष्टिरक्षराणीति तयोः षोळ-शित्वनिर्वाहाय महानाम्नीतश्चतुश्चतुरक्षराण्युपसृज्यन्ते । षष्ट्यक्षरा ह्यतिशक्करी नाम च्छन्दः ।

तथाहि—'अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवत्' इति प्रथमपादे 'अभि ओजसा' इति विश्लेषेण षोळशित्वमेव । 'आ रोदसी-' इत्यादिद्वितीयपादेऽपि षोळशाक्षराणीति स्वतः षोळशित्वम् । एवं चतुर्थपञ्च-मावनुष्टुप्द्वयमिति षोळशित्वमेव । 'अधत्तान्यं जठरे प्रेमरिच्यत' इति तृतीयपादे तु केवलं द्वादशाक्षराणीति षोळशित्वसम्पादनाय महानाम्नीतः 'प्रचेतन' इति चतुरक्षराण्यत्रोपसृज्यन्ते । तथाच तृतीयपादेऽपि 'अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतन' इति षोळशाक्षराणि सम्पद्यन्त इति सर्वोऽपि मन्त्रः षोळशी भवति ।

एवं तृतीयमन्त्रे- "साकं जातः-ववक्षिथ" इति प्रथमपादः षोळशाक्षर एव । "साकं वृद्धः-" इत्यादिः द्वितीयपादोऽपि 'वीरियैः' इति विश्लेषेण षोळशी । "सैनं सश्चत्-" इत्यादिरनुष्टुप्द्वयमिति षोळशा-क्षर एव । "दाता राधः स्तुवते काम्यं वसु" इति तृतीयचरणस्तु द्वादशाक्षर इति तस्यापि षोळशित्वनिर्वाहाय महानाम्नीतः "प्रचेतय" इति पदमुपसृज्यते । तथाच "दाता राधः स्तुवते काम्यं वसु प्रचेतय" इति तृतीय-चरणोऽपि षोळशी भवति । एवं समस्तस्यापि त्र्यृचस्य षोळशित्वसिद्धिः । तदेतत् "आद्ये सूक्ते द्वितीयतृतीय-मन्त्रयोः तृतीयेतृतीये पादे चतुर्भिश्चतुर्भिरक्षरैः संयोजनम्" भावदीपे स्फुटम् ।

इयं ह्यतिशक्करी नामातिच्छन्दः । तत्र षोळशाक्षरौ द्वौ चरणौ पूर्वार्द्धम् । तृतीयो जागतः उभावानुष्टु-भाविति त्रयः पादा उत्तरार्द्धम् । पूर्वार्द्धं तु स्वत एव षोळशि भवति । उत्तरार्द्धेऽपि चतुर्थपञ्चमयोः पादयोरानुष्टु-भयोः संयोगे षोळशित्वं भवति । तृतीयस्तृतीयः पादस्तु द्वादशाक्षरो महानाम्नीनां चतुर्भिश्चतुर्भिरक्षरैः संयोजनेन षोळशी भवतीति ।

अयं त्र्यृचः सोपसर्ग ईषद्व्यत्यासेन सामवेदेऽपि पठ्यते राणायनीये । तद् यथा—

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना यथावशम् ।
स ईं ममाद महि कर्म कर्तवे महामुरुꣳ सैनꣳ सश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम् ॥ १ ॥

साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।
दाता राध स्तुवते काम्यं वसु प्रचेतन सैनꣳ सश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम् ॥ २ ॥

अध त्विषीमाꣳअभ्योजसा क्रिविं युधाभवदा रोदसी आपृणदस्य मज्मना प्र वावृधे ।
अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय सैनꣳ सश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम् ॥ ३ ॥

(सामसं-१४८६-१४८८.)

मन्त्रार्थस्तु—

त्रिकद्रुकेषु । "अभिप्लवस्याहं पूर्वं त्रिकद्रुका इत्याचक्षते" इत्याश्वलायनः । अभिप्लव इति षडहसाध्यो यागक्रियाविशेषः । तत्राऽद्यानि त्रीण्यहानि त्रिकद्रुकाणि । सोमस्य द्रवणात् । तेषु सुतम् । अथच भगवन्तं प्रति द्रवणात् त्रीणि द्रुकाणि करणानि । कायश्च वाक् च मनश्च । तेषु । तृतीयार्थे सप्तमी । तैः कायेन वाचा मनसा सुतम् । त्रिकरणपूर्वकं भगवते समर्पितम् । किम्? यवाशिरं सोमम् । यवसक्तुमिश्रं सोमरसम् । अथचाध्यात्मं यवाशिरं सोमम् । यु मिश्रणे चामिश्रणे च । नित्यानित्यविवेकेन शास्त्रावमर्शजेन भगवत्येव आशिरं संलग्नं स्नेहरसम् । महिषः अपिबत् । महितषड्गुणः परमेश्वरः । इन्द्रश्चावान्तरम् । कीदृशः? तृपत् तृप्तः । तृम्पदिति सामपाठेऽप्ययमेवार्थः । अस्मदर्पितेन उभयविधसोमेन । पुनः कीदृशः? तुविशुष्मः पूर्णबलः । "उरु विश्वं तुवि पुरु" इति नामानुक्रमणी । विष्णुना सहेन्द्रः । विष्णुरूपेणेन्द्रगतेन च रूपेणेति द्विरूपो वा विष्णुः । आत्मान्तरात्मानौ वा इन्द्राविष्णू । स हि हृदये निविष्टः शुभं रसं पिबति । यथा अवशत् पातुमैच्छत् तथा । यथेच्छम् । "यथावशम्" इति राणायनीयानां कौथुमानां च सामशाखिनां पाठे स्फुटोऽर्थः । स पीतः सोमः स्वीकृतश्च भक्तिरसः महां गुणतो महान्तम्, उरुं देशतः कालतश्च ईमेनं भगवन्तं महि महत् भक्तानुग्रहरूपं कर्म कर्तुं ममाद मुमोद मोदयामास । तदयं स देवः मोदहेतुः सत्यः अकृत्रिमः इन्दुः उभयविधः सोमः । "इन्दुमासो वषट्कृतः" इति सोमनामसु नामानुक्रमणी । सत्यं देवमिन्द्रं सश्चत् प्राप्नोतु ॥ १ ॥

अध त्विषीमान् । अथ सोमस्वीकारानन्तरं त्विषीमान् त्विषिमान् दीप्तः इन्द्रः । क्रिविं अस्मद्धिंसकं शत्रुं तमः कूपं वा । "काटः क्रिविः कर्तम्" इति कूपनामसु नामानुक्रमणी । युधा अभि अभवत् । अथच क्रिविं मेघं निवार्य आलोकं ददौ । अथचाध्यात्मं अविद्यां निवार्य आत्मानं दर्शयामास । कृविमिति शाखान्तरपाठेऽपि समानोऽर्थः । अपिचाऽवरणापगमादेव सूर्यादिस्थितस्य स्वस्य मज्मना सामर्थ्येन द्यावापृथिवी आ अपृणत् सामस्त्येन पूरयामास । यतोऽयं स्वतः प्र वावृधे सदा प्रवृद्धोऽस्ति हि । "पौंस्यं मज्म स्वधा नृम्णम्" इति नामानुक्रमणी । स परमेश्वरः स्वस्मै समर्पिते सोमे अन्यमेकं भागं जठरे अधत्त । ईमन्यमेकं भागं इतरेभ्यो देवेभ्यः प्रारेचयत् । अन्तर्यामिणि भगवति समर्पितं सर्वदेवानां तृप्तये भवति, तस्मिंश्च प्रसन्ने सर्वेऽप्यन्ततः प्रसीदन्तीत्येतावत् । अपिचान्यं भक्तजनम्, "प्रोक्ताऽन्येनैव" इत्यादाविव अन्यत्वज्ञानिनं वा प्रेम्णा जठरेऽधत्त । ईमन्यं अनन्यताविदं प्रारिच्यत । प्रत्येकं स्थानान्तरे तमआदिके निहितवान् । हे प्रकृष्टचेतन स भवानेवमधत्तेति परोक्षेण प्रस्तुतं स्नेहातिशयादपरोक्षतोऽपि प्रस्तौति । सैनमित्यादि समानम् ॥ २ ॥

साकं जातः । क्रतुना कर्मणा ज्ञानेन च, ओजसा बलेन च साकमेव जातः । "स्वाभाविकी ज्ञानबलक्रिया च" इत्येतदाह । ववक्षिथ सर्वनिर्वहणमिच्छसि । नित्ययेच्छया सर्वं वहसि । वीर्यैः तदुपलक्षितैर्भगाख्यैः षड्गुणैः साकं वृद्धः नित्यपूर्णः । मृधः हिंसकान् बाह्यान्तरांश्च सासहिः अभिभविता । विचर्षणिः सर्वद्रष्टा । स्तुवते मह्यं मादृशाय च काम्यमिष्टं राधः सर्वार्थसाधकं ज्ञानाख्यं वसु दाता भवति । स त्वं नः प्रचेतय । प्रज्ञावतः कुरु । सैनमिति पुनः परोक्षेण स्तुतिः ॥ ३ ॥

तदेवं द्वावुपसर्गौ व्याख्यातौ । अवशिष्टास्त्रय आनुष्टुभास्त्रय उपसर्गा दशममण्डलीयेन सूक्तेनोपसृज्यन्ते । "प्रो ष्वस्मै–" इत्याद्ये हि सूक्ते (१०–१३३) सप्त मन्त्राः । तत्र सप्तमस्त्रिष्टुबिति नातिच्छन्दस्स्वन्तर्भवति । चतुर्थः पञ्चमः षष्ठश्च महापंक्तिः । ततश्च न तेऽप्यातिच्छन्दसाः । आद्यस्त्र्यृचस्तु महाव्रते शंसनीयो महानाम्नीपादोपसर्गेण षोळशी क्रियते । ते चेमे मन्त्राः—

प्रो ष्वस्मै पुरोरथ—मिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहा —ऽस्माकं बोधि चोदिता
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १ ॥

त्वं सिन्धूँरवासृजो—ऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ २ ॥

वि षु विश्वा अरातयो—ऽर्यो नशन्त नो धियः ।
अस्ताऽसि शत्रवे वधं यो न इन्द्र जिघांसति या ते रातिर्ददिर्वसु
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ ३ ॥

(ऋ. १०. १३३. १–३; साम. १८०१–१८०३; अथर्व२०. ९५. २–४)

इयं हि शक्करी नामातिच्छन्दः । तत्राऽनुष्टुभाः सप्त चरणा भवन्ति । तत्र द्वावानुष्टुभौ चरणौ पूर्वार्द्धम् । पञ्चोत्तरा उत्तरार्द्धमिति विवेकः । पूर्वार्द्धे तु स्वत एव शोळशि । उत्तरार्द्धे च पूर्वौ द्वौ, अन्त्यौ च द्वावानुष्टुभौ मिलित्वा षोळशिनौ भवतः । मध्यमस्त्वष्टाक्षरः पादः षोळशित्वनिर्वाहाय महानाम्नीपादेनाऽनुष्टुभेनोपसृज्यते । तथाहि—

"अस्माकं बोधि चोदिता आ याहि पिब मत्स्व नभन्तामन्यकेषां ज्याका अधि धन्वसु"
इति प्रथममन्त्रोत्तरार्द्धे तृतीयचरणस्यापि षोळशित्वम् ।

"तं त्वा परि ष्वजामहे ऋतुश्छन्द ऋतं बृहत् नभन्ताम्—" इत्यादि द्वितीयमन्त्रे ।
"या ते रातिर्ददिर्वसु सुम्न आ धेहि नो वसो नभन्ताम्—" इत्यादि तृतीयमन्त्रे ।

तदेतत् "त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमित्यतिच्छन्दसः शंसति" इति ब्राह्मणवाक्येन स्फुटम् । ब्राह्मणं चैतदाश्वलायनसूत्रोदाहरणेनोपरिष्टाद् व्याकरिष्यति भगवत्पादः ।

अयं मन्त्रार्थः—सुदाः पिजवनपुत्र ऋषिः । इन्द्रो देवता । प्रो ष्वस्मै । अस्य इन्द्रस्य पुरोरथं रथस्य पुरतो वर्तमानं शूषं सामर्थ्यं प्रो अतिप्रकर्षेण सु अर्चत । रथादपि पूर्वं तस्य बलं शत्रुषु प्रसरति । इन्द्रस्य शक्तिश्रवणेनैव शत्रवः कम्पन्ते, किमु रथदर्शनेनेति । "शर्धो दक्षस्तरः शोचिः शक्तिः शूषम्", इति नामानुक्रमणी । शूषं सुखमुद्दिश्य रथस्य पुरतः स्थिताय इन्द्राय अर्चतेति वा । "स्वस्तिः सुम्नं भोगशूषे" इति सुखनामसु । समत्सु युद्धेषु शत्रुभिः सह सङ्गे सति अभीके चित् तादृशे प्रबलशत्रुसन्निकर्षेऽपि निश्चिन्तं लोककृत् लोकधारणकृत् । शत्रवो नास्य विक्षेपाय प्रभवन्ति । वृत्रहा, अध्यात्ममज्ञानहा । अस्माकं ज्ञानमार्गे चोदिता स त्वं अस्मत्कृतं परिचरणं बोधि निबोध । (तदर्थमायाहि, सोमं पिब, भक्तिपूर्णां पूजां च आस्वादय, आस्वाद्य च मत्स्व मुदितः प्रसन्नो भव इत्युपसृष्टान्वयः ।) अन्येषां शत्रूणामस्मत्पूजाप्रतिषेधाय धन्वसु अधिरोपिताः ज्याः नभन्तां नश्यन्तु । "नभ हिंसायाम्" ॥ १ ॥

अशेषमहानाम्न्यर्थस्मरण[1]परिज्ञानपूर्वकमुपसर्गसंयोजनं कर्तव्यमित्येतदर्थत्वेन महानाम्नीप्रशंसा क्रियते । अन्यथा तावन्मात्रप्रशंसामृतेऽशेषमहानाम्नीप्रशंसाया व्यर्थत्वात् । त्र्यृचविभागेन[2], "विद्रा मघवन्–", "तमूतये–", "नूनम्–" इति वा तिस्रो महानाम्न्यः ।

"प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिः[3] । द्वितीयाया आन्तरिक्ष्यस्तृतीयाया द्युगः प्रभुः" इत्यृक्संहितायाम् । "त्र्यृचा[4]स्तिस्रो महानाम्न्यः पञ्चर्चा प्रथमा परा । त्र्यृचा[4] द्व्यृचा च निगदैस्तार्तीया सप्तभिर्युता[5] । इति त्रेधा[6] विभागः स्याज्जपध्यानादिकर्मसु" इति च । "त्रिलोकगेन हरिणा निर्मितः षोळशी क्रतुः । एवं ज्ञात्वा हरिं तं च कर्म कुर्वन् न जायते" इति प्रवृत्ते[7] ।

---

त्वं सिन्धून् ॥ अधराचः अधोमुखप्रवणान् स्यन्दनात् सिन्धून् मेघान् जलपूरान् वा असृजः । वृष्टिं काले नियमयसि । अपि च सद्गुणसिन्धून् अधोगमनात् अवासृजः निस्तारितवानसि । योऽहिं अतिहेयं वृष्टिप्रतिबन्धमज्ञानं चाहन् । तेन त्वमशत्रुर्जज्ञिषे जायसे भवसि । वार्यं सत्वोन्मेषाद् वरणीयं विश्वं पुष्यसि । असतस्तु तमो गमयसीत्येतदाह वार्यमिति । तं त्वा परिष्वजामहे वशीकुर्मः पूजोपहरणेन । (यस्त्वं क्रतुश्छन्द ऋतं बृहच्चेति उपसृष्टान्वयः ।) नभन्तामिति समानम् ॥ २ ॥

वि षु विश्वा ॥ अर्यः अभिगमनशीला अरातयः शत्रुभूताः विश्वाः प्रजाः अविद्याद्याश्च वि सु नशन्त नश्यन्तु । नो धियः प्रशास्त्वय्येव प्रणिहिताः सन्तु । यो नः जिघांसति तस्मै शत्रवे त्वमिन्द्र वधं हन्तारमायुधं अस्ता क्षेप्ताऽसि । "वधो वज्रः स्वधितिः" इत्यभिधानम् । या ते रातिर्दातृत्वं सा नो वसु ज्ञानाख्यवित्तं ददिर्दात्री भवतु । (ज्ञानदानेन च हे वसो पूर्णज्ञान भगवन्, नः सुम्ने परमसुखे आधेहि इत्युपसृष्टान्वयः) अन्यत् समानम् ॥ ३ ॥

१ "–संसरण–" इति क्वचित् प्र. पाठः ।

२ "तृचविभागेन" इति प्र. पाठः । यद्यपि निरुक्ते यास्कोऽप्याह—"अथापि द्विवर्णलोपस्तृच इति" इति । तथाऽपि तृचमिति च्छन्दसीति वक्तव्यम् । "ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि" इति वार्तिकात् । तेन लोके त्र्यृच इति भवति । तथाहि महाभाष्यम्– "ऋचि त्रेः सम्प्रसारणं वक्तव्यम् । उत्तरपदादिलोपश्छन्दसि वक्तव्यः । छन्दसीति किम्? त्र्यृचानि" इति ।

३ "अयं वै लोकः प्रथमा महानाम्नी" इत्यादिखण्डशेषस्य व्याख्यानपरमिदं वचनम् । अयं लोकः अस्मिन् पृथिवीलोके स्थितो भगवान् प्रथमा महानाम्नी प्रथममहानाम्नीप्रतिपाद्य इत्यादि ।

४ "तृचा–" इति प्र. पाठः ।

५ "सप्तभिर्मिता" इति क्वचित् । प्रथमा पञ्चर्चा, ततः परा द्वितीया महानाम्नी आऽऽह्मीमूर्जं त्र्यृचा । ततः परं द्वे ऋचौ, एवाहीत्यादि षट् 'विदा मघवन् विदो३मू' इत्येकमिति सप्त निगदवाक्यानि च तृतीया महानाम्नीत्यर्थः ।

६ "इति द्वेधा" इति क्वचित् पाठः प्रमादिकः । "अयं वै लोकः" इत्यादिना श्रुतिकथितस्त्रेधा विभाग एव अत्र निगम्यते । न त्रेधा विभागस्य द्वैविध्यम् । सर्वमूलकोशविरुद्धं चैतत् ।

७ क्वचिन्मुद्रितपाठे "इति प्रवृत्ते" इति न पठ्यते ।

'एवैना हि' इत्यस्यार्थोऽ[1]प्युक्तावधारणरूपत्वात् पूर्वोक्तार्थपरिज्ञानं[2] विना न स्मर्तुं शक्यते। एवं निर्मितेन षोळशिनर्द्धो[3] भवत्येवंवित् ॥ * ॥

[प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत यो व्यतीँरफाणयदिति प्रज्ञाता अनुष्टुभः शंसति। तद् यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात् तादृक् तद् यत् प्रज्ञाता अनुष्टुभः शंसति।]

(ऐत. ब्रा. पं. ४. अ. १. खं. ४. वाक्य २.)

[प्रप्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे।
धिया वो मेधसातये पुरन्ध्याऽऽ विवासति ॥ १ ॥]

(ऋ. ८. ६९. १; साम[4]. ३६०.)

**प्रप्र वः[5]। हे ऋत्विजः प्रजा वा, वस्त्रिष्टुभमिषं त्रिष्टुभाख्यमन्नमिन्द्रः परमेश्वरः सोमायाऽविवासति। पुरन्ध्या धिया अशेषप्राणिदेहाश्रयया स्वबुद्ध्या, प्रप्र प्रकर्षेणप्रकर्षेण[6], अतितरां**

---

१ "एवाहीत्युपसर्गस्यार्थो–" इति क्वचित्। "एवाहीत्यस्यार्थो–" इति; "एवाह्येवैवाहीत्यस्यार्थो–" इति च।

२ "पूर्वोक्तार्थज्ञानम्" इति प्र. पाठः। ३ "षोळशिना राध्नो–" इति प्र. पाठः।

४ अयं मन्त्रः सामवेदे तु "वन्दद्वीराय" इति ईषद्भेदेन पठ्यते।

५ प्रप्र व इति व्याकरिष्यमाणब्राह्मणखण्डस्य ऋङ्मन्त्रस्य च प्रतीकग्रहणम्। अथ द्वितीयो ब्रह्मणभागः व्याख्यायते, तत्रोदाहृतः प्रप्र व इति त्र्यृचः प्रथमं व्याख्यायत इति। एते हि त्र्यृचास्त्रयः अष्टममण्डले ६९ तमे सूक्ते पठ्यन्ते प्रप्र वः (१–३), अर्चत प्रार्चत (८–१०), यो व्यतीन् (१३–१५)। त्रिवर्गे हि तस्मिन् सूक्ते पञ्चमन्त्रः प्रथमवर्गः। तत्रान्त्यौ द्वौ गायत्रौ विहायान्ये प्रथमस्त्र्यृचः। द्वितीयवर्गोऽपि पञ्चमन्त्रः। तत्राऽद्यौ द्वौ मन्त्रौ विहायान्त्यास्त्रयो द्वितीयस्त्र्यृचः। अष्टमन्त्रस्तृतीयो वर्गः। तत्राऽद्यौ द्वावन्त्यांश्च त्रीन्मन्त्रान् विहाय मध्यगास्त्रयस्तृतीयस्त्र्यृचः। तदिमे नव शस्त्रमन्त्रा अनुष्टुभ इति प्रज्ञाताः! आङ्गिरसदृष्टा इन्द्रदैवत्या इमे नवापि मन्त्रा आनुष्टुभा एव हि। यद्यप्यत्र "नदं वः–" इति द्वितीयो मन्त्रः सप्ताक्षरपादत्वादौष्णिहः। अष्टावेवाऽनुष्टुभाः। तथाऽपि छत्रिन्यायेन तस्याप्यनुष्टुप्त्वोपचारेण प्रज्ञातानुष्टुभ इत्युच्यन्ते। तदेतदैतरेयारण्यक एव स्फुटम्– "नदं व ओदतीनामिती३। उष्णिगक्षरैर्भवत्यनुष्टुप् पादैरायुर्वा उष्णिग् वागनुष्टुप् तदस्मिन्नायुश्च वाचं च दधाति" (ऐत. आर. अ. २. ब्रा. ६.) इति।

६ "प्रप्र प्रकर्षेण अतितराम्" इति प्र. पाठः प्रामादिकः। प्रप्रेति वीप्साया आनर्थक्यप्रसङ्गात्। "प्रसमुपोदः पादपूरणे" (अ. सू. ८. १. ६.) इति तदानर्थक्यवचनमसदिति टीकायां स्थितम्। अतितरामिति वीप्साया एव विशदनम्। प्रकर्षार्थस्य अतीत्यस्य तरपा योगेन वीप्सां हि विशदयति। अत एव भावदीपेऽप्युक्तम्— "प्रप्राऽविवासति प्रकर्षेणप्रकर्षेण अतिप्रकर्षेण इच्छति" इति। निपातानां क्वचित्पादपूरणतामभ्युपयतो यास्कस्याप्याशयान्तरमाह वेङ्कटमाधवः—

शस्यमानत्रिष्टुप्[1] प्रीतिं करोति सोमपानार्थमित्यर्थः। मन्दद्वीराय, तस्य वीरस्य परमेश्वरस्य मदं करोतीति[2] मन्दद्वीरः सोमः। नत्वात्मप्रयोजनाय प्रीतिं करोति, किन्तर्हि? वो मेधसातये वो यज्ञसिद्ध्यर्थम्[3]। व इति गुरुत्वादीश्वरं प्रत्येव वा बहुवचनम्। तदा वः अन्नं त्रिष्टुभं वो मेधसातये भवद्दैवत्ययज्ञसिद्ध्यर्थं भवान् प्रप्राऽविवासतीत्यर्थः॥ * ॥

[नदं व ओदतीनां नदं योयुवतीनाम्।
पतिं वो अघ्न्यानां धेनूनामिषुध्यसि॥ २॥]

(ऋ. ८. ६९. २; साम. १५१२; ऐ. आ. १. १३.)

ओदतीनां उन्दनकर्त्रीणां वः अपां भवदीयानां पतिं वः पुरुषं प्राणं नदनकर्तारं[4] प्रति इषुध्यसि पतिर्भवसि। सृष्टौसृष्टौ योयः प्राणस्तन्तं[5] प्रति पतिर्भवसीति नदमिति पुनर्वचनम्। योयुवतीनां गमनशीलानाम्, आकाशे पोप्लूयमानानाम्, अघ्न्यानां धूमरूपेणादाह्यानाम्, रेतोरूपेणाजराणां वा, धेनूनां जगत्पोषकाणाम्[6]। "धिनु पुष्टौ" इति धातोः। "ता नदेन विहरति—" इत्यादि श्रुतेः[7]। पयसा सेचकानां देशाद्देशान्तरगमनशीलानां अघ्न्यानां हन्तुमयोग्यानां

---

"वाक्यार्थेऽप्रवृत्तेषु निपातास्चेदनन्विताः।
ऋक्पादपूरणास्ते स्युरिति यास्कस्य दर्शनम्।
अप्रवृत्ते तु वाक्यार्थे ब्राह्मणेष्वपि नन्वमी।
दृश्यन्ते यत्र नापेक्षा विद्यते पादपूरणैः।
माधवस्तत्र वदति स्फुटत्वोद्ग्रहणादिकम्।
वाक्यार्थे जनयन्त्येते मन्त्रब्राह्मणयोरिति।
स्फुटत्वोद्ग्रहणादिश्च क्वचित् सूक्ष्मः क्वचित् स्फुटः।
यत्र स्फुटास्तदा सार्थाः सूक्ष्मे स्युः पूरणा इति" इति।

१ "शस्यमाना त्रिष्टुप्" इति प्र. पाठः।
२ "मदं प्रीतिं करोतीति" इति प्र. पाठः। "मन्दं प्रीतिं करोतीति" इति क्वचिन्मुद्रितः पाठः प्रमादिकः।
३ "-सातये यज्ञसिद्ध्यर्थम्" इति प्र. पाठः।
४ "प्राणं नदं नदनकर्तारम्" इति प्र. पाठः।
५ "योयस्तं प्रति" इति क्वचित्।
६ "जगतः पोषकाणाम्" इति क्वचित्।
७ तथाहि ब्राह्मणम्—"ता नदेन विहरति पुरुषो नदस्तस्मात् पुरुषो वदन् सन्नदतीव। नदं व ओदतीनामिति। आपो वा ओदत्यो या दिव्यास्ता हीदं सर्वमुन्दन्त्यापो वा ओदत्यो या मुख्यास्त हीदं सर्वमन्नाद्यमुन्दन्ति। नदं योयुवतीनामिती३। आपो वाव योयुवत्यो या अन्तरिक्ष्यास्ता हि पोप्लूयन्त इवाऽपो वाव योयुवत्यो याः स्वेदन्ते ता हि सरीसृप्यन्त इव। पतिं वो अघ्न्यानामिती३। आपो वा अघ्न्या या अग्नेर्धूमा जायन्त आपो वा अघ्न्या याः शिश्नादुत्सृज्यन्ते। धेनूनामिषुध्यसीती३। आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्तीषुध्यसीति यदाह प्रतीयसीत्येव तदाह" (ऐत. आर. अ. ३. ब्रा. ३.) इति। "ता नदेन विहरति प्राणो वै नदस्तस्माद् प्राणो नदन् सर्वः सन्नद-

धेनूनां गवां पतिं वायुं प्रति इषुध्यसीति वा। "वायुर्वाव गवां पतिः" इति श्रुतेः[1]। धेनुशब्दाश्च। ओदतीनां भक्त्या सेचकानां योयुवतीनां अतिशयेनाऽऽत्मतत्त्वावगमकानां अघ्न्यानां नित्यानां धेनूनां धर्मार्थकाममोक्षपोषकाणां[2] वाचां पतिं वायुं प्रति पतिर्भवसीति वा।

"वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकार इति। तस्या द्वौ स्तनौ[3] देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरः। तस्याः प्राग ऋषभो मनो वत्सः" इत्यादिश्रुतिभ्यः॥ * ॥

[ता अ॑स्य सू॒ददो॑हसः॒ सोमं॑ श्रीणन्ति॒ पृश्न॑यः।
जन्म॑न् दे॒वानां॒ विश॑स्त्रि॒ष्वा रो॑च॒ने दि॒वः॥ ३॥ १॥]

(ऋ. ८.६९.३; शु. य. १२.५५; १५.६०; तै. सं. ४.२.४,४; तै. ब्रा. ३.११.६.२.)

ताः पृश्नयः आपो गावो वाचो वा अस्य सूददोहसः प्राणस्य वायुस्थस्य परमेश्वरस्य सोमं श्रीणन्ति। अद्भिर्हि संसृष्टो भवति सोमः, पयआदिना वा श्रितो[4] भवति, मन्त्रैर्वा गृह्यते। "अथ सूददोहाः प्राणो वै सूददोहाः" इति श्रुतेश्च[5]। शोभनमुदं कर्म ज्ञानं वा दोग्धीति सूददोहाः। उदेत्युद्बो भवत्यनेन पुरुष इत्युदं ज्ञानादि। "मनो वाव सोमः"। तद्[6] वाचः श्रीणन्ति स्वार्थैः। प्रश्नयोग्यत्वात् पृश्नयो वाचः। प्रशंसनरूपत्वात् प्रशंसनीयत्वाद् वा। प्रशंसनीयत्वमेवापां गवां च। देवानां जन्मनि यज्ञे। तत्र हि तेषामभिव्यक्तिः। पूर्वं ज्ञाने वा। विशः प्रजाश्च श्रीणन्ति। मुख्यतस्ता एव श्रीणन्तीति चशब्दवर्जनम्। दिवस्त्रिष्वारोचनेषु आदित्यचन्द्रविद्युत्पर्यन्तं स्थितानां देवानां जन्मनि[7]।

---

यतीव" (३. ६.) इति च। "ता नदेन विहरतीत्यादिश्रुतेः" इति मूलेन ब्राह्मणभागद्वयमपि सञ्जग्राह। अत एव नदमिति पदं "पुरुषं प्राणं नदनकर्तारम्" इति व्याख्यातम्।

१ "इति श्रुतिः" इति प्र. पाठः। "इत्यादि श्रुतेः" इति क्वचित्।

२ "धर्मार्थकामपोषकाणाम्" इति प्र. पाठः प्रमादिकः।

३ "तस्यै द्वौ स्तनौ" इति क्वचित् पाठः। "स्वधाकारस्तस्यै द्वौ स्तनौ" इति त्वन्यत्र उपलब्धो बृहदारण्यकपाठः।

४ "श्रुतो भवति" इति प्र. पाठः।

५ "इति श्रुतिश्च" इति क्वचित्। "अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन सर्वाणि सन्दधाति" (ऐत. आर. अ. ४. ब्रा. १.) इति समग्रा श्रुत्यानुपूर्वी।

६ "तत्" इति पदं क्वचिन्न पठ्यते।

७ "देवानां जन्मनि यज्ञे" इति प्र. पाठः प्रामादिकः। 'देवानां जन्मनि यज्ञे। तत्र हितेषामभिव्यक्तिः' इति पूर्वमेव व्याख्यातत्वात्। अत्र तु त्रिष्वा रोचने दिव इति तुरीयपादस्य देवानां जन्मनीत्यन्वयमात्रप्रदर्शनेन चारितार्थ्यात्।

"यज्ञो वै देवजन्म तत्र हि देवाः प्रादुर्भवन्त्या सूर्याचन्द्रमसावा विद्युतं ते वै लोकानधिश्रिताः" इति श्रुतेः[1]। "द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्य तेनैव परमुपगच्छति सैषा ब्रह्मलोके विराजते" इति[2] श्रुते· द्यौरेव विद्युत्॥ * ॥

[अर्चत प्रार्चत प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत ॥ ४ ॥]

(ऋ. ८. ६९. ८; अथ. २० ९२. ५.)

[3]अर्चनं यज्ञादि। प्रार्चनं ज्ञानध्यानादि। "श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप" इति भगवद्वचनात्। प्रिययज्ञा अर्चत[4], प्रियज्ञानाः प्रार्चत। पुत्रकाः अल्पज्ञा[5] अप्यर्चत।

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्। जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन्" इति च। –

उतशब्दात् ज्ञानिनामप्यर्चनं युक्तं स्वाश्रमानुसारेणेति। "अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता[6]" इति श्रुतेः। किं तदर्चनीयम्? धृष्णु धृष्टं परं ब्रह्म वासुदेवाख्यम्। पुरं देहं नार्चत[7]।

---

१ "इत्यादिश्रुतेः" इति प्र. पाठः। २ "इत्यादिश्रुते." इति क्वचित् प्र. पाठः।

३ अत्र प्र. पाठे "अर्चत। अर्चनं यज्ञादि" इति मूलश्रुतिप्रतीकग्रहणपूर्वकं व्याख्यानं पठ्यते।

४ मेधो यज्ञः। मेधा ज्ञानम्। "यज्ञो वेनोऽध्वरो मेधः" इति वैदिकनिघण्टुः। यद्यपि इमाः प्रज्ञातानुष्टुभः प्रियमेधेन दृष्टाः इन्द्रदैवत्याः। तेन प्रियमेधसम्बन्धिनः प्रियमेधास इति स्वीया एव सम्बोध्यन्ते मन्त्रद्रष्ट्रा प्रियमेधेनेतीतरे व्याख्यातारो व्याचक्षते। स्यान्नाम। न वयं नेति ब्रूमः। अथापि ऋषिसम्बन्धमन्तरेणापि हि मन्त्राणां स्वार्थो वक्तव्यः। प्रियमेधदर्शनात् पूर्वमपि प्रज्ञातानुष्टुभामर्थनैयत्यात्। ब्रह्मादिभिः पूर्वमेव दर्शनाच्च। अन्येऽन्य ऋषय एकस्मिन्नेव मन्त्रेऽन्यमन्यमर्थं पश्यन्ति इति हि स्वदर्शनम्। तेन सर्वदर्शनाविरोधी सर्वद्रष्टृसाधारणोऽयमर्थो भगवत्पादेन निरूपित इति सुश्लिष्टम्। अत एव श्रुत्यन्तरे प्रियमेधासो नरा इति विशेष्यतया सर्वनरा अपि गृहीताः, न प्रियमेधसम्बन्धिन एव। तथाहि सामवेदे—

"अर्चत प्रार्चता नरः प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरमिद् धृष्ण्वर्चत ।" (३६२)

५ "अल्पका-" इति प्र. पाठः। "अल्पज्ञाना-" इति क्वचित्।

६ "हविष्मता ज्ञानिनाऽपि ते विष्णो स्तुतिर्यज्ञश्च अर्ध्यः साध्य इत्यर्थः" इति पद्मनाभतीर्थभट्टारकाः।

७ पूर्वस्यैव परस्यापि नञो निषेधार्थकत्वं क्वचिद् विद्यत इति भगवत्पादाशयः। तदेतदुपरिष्टात् "अर्भको न कुमारकः" इति मन्त्रव्याख्याने स्फुटीकरिष्यते। सामवेदे तु 'पुरं न' इतिस्थाने 'पुरमित्' इति पठ्यते। इदित्य-

"प्रत्युद्गमप्रश्रयणाभिवादनं[1] विधीयते साधु मिथः सुमध्यमे। प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने" इति भागवते। "[2]सदेहमानिहरये प्रणमेत् केवलाय वा। न देहाय न तन्नामपराय च कथञ्चन" इति व्यासस्मृतौ।

पुनरर्चतेति तात्पर्यार्थे[3] ॥ * ॥

[अव स्वराति गर्गरो गोधा परि सनिष्वणत्।
पिङ्गा परि च निष्कदद्दिन्द्राय ब्रह्मोद्यतम् ॥ ५ ॥]

(ऋ. ८. ६९. ९; अथ. २०. ९२. ६.)

गर्गरगोधापिङ्गादीनां घोषा अपि नादव्यञ्जकत्वेन[4] भगवद्वाचका एवेत्याह—अव स्वरातीत्यादिना[5]। एतत् समस्तमिन्द्रार्थैवेत्यर्थः। ब्रह्म वेदो विशेषत इन्द्रार्थैवोद्यतः। गर्गर इति पादभूषण-महामत्रक-दधिपात्र-हस्तिहस्तानां नाम। पिङ्गा चकोरी। अवपरीत्यल्पाधिक्यादिविशेषोऽपि तद्वाचक एवेति ज्ञापनाय। चनिष्कददित्यनुकारशब्दः[6]। सनिष्वणदित्यतिशयार्थे।

"ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव" इति च श्रुतिः[7]। "दध्नो मथनशब्दश्चाप्यन्तर्नादस्वरूपतः। भीषकत्वं हरेर्ब्रूयादन्तर्नादो हि भीषणे। गजबृंहितमप्येवं धिक्कारसहितं वदेत्। स्वरितेन समायोगाद् धिक्कृतो स्वरितो यतः। महामत्रं जलाद्यैश्च युक्तमेतादृशं वदेत्। पादभूषा च धिक्कारं तत्कृतं स्वरितो वदेत्[8]। अद्भुतत्वं हरेर्वक्ति पिङ्गा कण्ठगशब्दवत्[9]। तामेवाद्भुततां वक्ति गृहगोधा पराऽपि च" इति शब्दतत्त्वे ॥ * ॥

---

वधारणे। धृष्णु धृष्टमेव पूरणात् पूर्णत्वाच्च पुरं वासुदेवाख्यमर्चत। ननु धर्षणीयं शरीराख्यं पुरमिति हि तदर्थः। नञा यदुच्यते तदेवान्ययोगव्यवच्छेदेनावधारणेनापीति सामपाठसंवादेनापि निषेधार्थोऽयं नञ् नोपमार्थ इत्यवगम्यते।

१ "-मिवन्दनम्" इति क्वचित्। चतुर्थस्कन्धे तृतीयाध्याये रुद्रवचनमिदम्।

२ "स्वदेह-" क्वचिन्मुद्रितः पाठः प्रामादिकः। ३ "तात्पर्यार्थः" इति प्र. पाठः।

४ "नादमात्रव्यञ्जकत्वेन" इति प्र. पाठः।

५ "अव स्वराति गर्गर इत्यादिना" इति क्वचित् प्र. पाठः। ६ "-करणशब्दः" इति प्र. पाठः।

७ "इति श्रुतिः" इति प्र. पाठः। "प्राण एव प्राणऋच इत्येव विद्यादिति श्रुतिः" इति क्वचित्। "-विद्यादिति च श्रुतिः" इत्यपि क्वचित्। ८ "स्वरितं वदेत्" इति क्वचित्।

९ अस्माभिः कस्मिंश्चिदाश्चर्यमये वस्तुनि श्रुते दृष्टे वा क्रियमाणः कण्ठगो यो ध्वनिः "चुऽचुऽ" इत्येवंरूपः, तद्वदित्यर्थः।

[आ यत् पतन्त्येन्यः सुदुघा अनपस्फुरः ।
अपस्फुरं गृभायत सोममिन्द्राय पातवे ॥ ६ ॥ २ ॥]

(ऋ. ८. ६९. १०; अथर्व. २०. ९२. ७.)

यत्र एन्यः नद्यः आपतन्ति तद्घोषश्चेन्द्रवाचकः ।

"नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः । नादो हि श्रैष्ठ्यवाची[1] स्यादेवं घोषाः परेऽपि च" इति च[2] ।

तदर्थं च नद्य आपतन्ति—

"भूतादिभूतोऽम्बुनिधानमध्ये भूत्वा हरिः सर्वहरोऽतिधाम्ना । अगाधमम्भो विदधाति भस्म यो बाडवाग्नि[3]र्नृहरिर्विचिन्त्यः[4]" इति वैहायससंहितायाम् ।

सुदुघाः सुष्ठ्वपां दोहनकर्त्र्यः । स्फुरणापगमनमासां नास्तीत्यनपस्फुरः, नित्यचलनस्वभावाः । अपगतस्फुरणत्वेन सोमं गृभायत । अचलत्वेन मनो वा ॥ * ॥

[यो व्यतीँरफाणयत् सुयुक्ताँ उप दाशुषे ।
तक्वो नेता तदिद्वपुरुपमा यो अमुच्यत ॥ ७ ॥]

(ऋ. ८. ६९. १३; अथर्व. २०. ९२. १०.)

व्यतीन् विशेषेणाधिकान् देवान् अफाणयत् विस्तारयामास । दाशुषे यजमानाय तत्समीपे । "फण विस्तारे" इति धातोः । सुयुक्तान् सुयोगरतान् ।

"विशेषेणाधिकत्वेन व्यतयो देवताः स्मृताः । नित्ययोगरताश्चैव नारायणपरायणाः । त एव चेन्द्रियात्मानस्तान् विस्तारयतीश्वरः । मनआदीन्द्रियाणां तु शक्तिविस्तार एव हि[5] । विस्तारो देवतानां स्याद् भक्तेषु हरिणा कृतः" इति प्रकाशसंहितायाम् । "चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्" इति च श्रुतिः । "स मेन्द्रो

---

१ "श्रैष्ठ्यवादी" इति क्वचित् ।
२ क्वचित् अत्र 'च' कारो न दृश्यते ।
३ "बाडवाग्नि–" इति प्र. पाठः ।
४ "नृहरिः स चिन्त्यः" इति क्वचित् ।
५ "एव तु" इति प्र. पाठः ।

मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम्" इति च । "न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्" इति च भारते[1] ।

तक्को जगत्कर्ता । "तक निर्माणे" इति धातोः । "न वर्तवे प्रसवः सर्गतक्तः[2]" इत्यादिप्रयोगाच्च[3] । नेता चाशेषस्य[4] । तदेव वपुः सः । यत्तत् जगत्कर्तृनेतृरूपम् ।

"देहदेहिविभागश्च न क्वचित् परमेश्वरे । गुणतद्वद्विभागो वा नेह नानेति हि श्रुतिः" इति च पाद्मे[5] । "तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति ।", "सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः[6]" इत्यादिश्रुतेश्च[7] । "विशुद्धविज्ञानमरीचिमालया विचित्र[8]रत्नप्रकरप्रकाशया । प्रकाशिताशेषजगत्स्वरूपया प्रभुः सदा ह्लादतनुर्विभूषितः[9]" इति पुरुषोत्तमसंहितायाम् ।

उपमा उपमायाम्, उपमाविषये, अमुच्यत त्यक्तोऽभवत् । निरुपम इत्यर्थः ।

"अल्पाक्षरेण शक्येऽपि वक्तुं बह्वक्षरं यदि । उक्तस्याऽधिक्यमेवात्र निषेधेऽशेषतो भवेत्" इति च शब्दनिर्णये[10] ॥ * ॥

[अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः ।
भिनत् कनीन ओदनं पच्यमानं परो गिरा ॥ ८ ॥]

(ऋ. ८. ६९. १४; अथ. २०. ९२. ११.)

---

१ "इति भारते" इति प्र. पाठः ।

२ "सर्गतक्तः" इति क्वचिन्मुद्रितः पाठः प्रामादिक एव । तथाहि समग्रः श्रुतिपाठः—
एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति (ऋ. ३. ३३. ४.) इति ।
तक्कः तक्त इति चैकोऽर्थः । पक्कः पक्त इतिवत् । "पचो वः" (८. २. ५२.) इति तु च्छन्दसि वैकल्पिकमिति वक्तव्यम् । तकधातोरपि तथा ।

३ "इति प्रयोगाच्च" इति प्र. पाठः ।
४ "नेता च सर्वस्य" इति क्वचिन्मुद्रितः पाठः ।

५ "इति च श्रुतिरिति पाद्मे" इति प्र. पाठः । "इति च श्रुतेरिति पाद्मे" इति क्वचित् । "इति हि श्रुतिरिति हि पाद्मे" इत्यपि क्वचित् । "इति च श्रुतिरिति च पाद्मे" इत्यन्यत्र ।

६ "परमोऽक्षरः" इति पाठान्तरम् ।
७ "इति श्रुतेश्च" इति प्र. पाठः ।
८ "सचित्र-" इति क्वचिन्मुद्रितः पाठः ।
९ "-तनुः सुभूषितः" इति क्वचित् ।
१० "इति शब्दनिर्णये" इति प्र. पाठः ।

विश्वान्[1] द्विषः अज्ञानपापादीन् अतीत्य शक्रो विष्णुः[2] स्वभक्तानतिवहत्येव हि ।

"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं[3] स्वाम् ।",
"तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि नचिरात् पार्थ
मय्यावेशितचेतसाम्" इत्यादिना [4]प्रसिद्धमुशब्देनाऽह ।

द्विषोऽतीत्यातिशयेनाऽत्मानं प्रत्योहत[5] इत्यतिशब्दद्वयार्थः । ओदनं उन्दतेः कर्म[6], अभिनद् भगवान् कानीनो बादरायणः, परः परात्मा[7], गिरैव पच्यमानं परिपाककाले ।

"संश्लेषादोदनं कर्म पच्यमानं गिरैव हि । अभिनद् भगवान् व्यासः
स्वभक्तानामशेषतः" इति व्याससंहितायाम् ॥ * ॥

[अर्भको न कुमारकोऽधि तिष्ठन् नवं रथम् ।
सपक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम् ॥ ९ ॥ ३ ॥]

(ऋ. ८. ६९. १५; अथ. २०. ९२. १२.)

अर्भक इव स्थितः[8] । नवं रथमध्यतिष्ठत् । कुमारकः कुत्सितमारकः[9] । अर्भक इव सूक्ष्मदेहः पूर्वम्पूर्वं देहं परित्यज्य नवन्नवं देहमध्यतिष्ठज्जीवमादाय ।

"जीवदेहं परित्यज्य सह जीवेन चेश्वरः । जीवस्यान्यच्छरीरं[10] च समु-
त्पाद्य विशत्यजः" इति मान्यसंहितायाम ।

कुमारक इवार्भकः[11] सूक्ष्मदेह इति वा । अर्भकः सूक्ष्मदेहोऽपि न कुमारक

---

१ "विश्वा द्विषः" इति क्वचित् । "विश्वा विश्वान् द्विषः" इति मुद्रितः पाठः ।

२ "शक्रो विष्णुः" इति क्वचिन्मुद्रितः पाठः प्रामादिकः । शक्तिरतिरूपत्वाच्छक्र इति पूर्वमुक्तम् । इदमिदानी-मर्थान्तरमुच्यते शक्त इति । शक्नोतीति शक्रः । "स्फायितञ्चिवञ्चिशक्ति-—"(उणा २. १३.) इत्यादिना रक् ।

३ "तनूं स्वाम्" इति प्र. पाठः ।

४ "इत्यादि प्रसिद्ध-" इति क्वचित् । "इत्यादि प्रसिद्धि-" इत्यपि क्वचित् ।

५ "प्रत्येवोहत-" इति प्र. पाठः ।

६ "कर्मबन्धनम्" इति प्र. पाठः । "कर्मबन्धम्" इति क्वचित् ।

७ "परमात्मा" इति प्र. पाठः । क्वचित् कोशेष्वपि तथा ।

८ "अर्भक इव स्थितोऽर्भकः" इति प्र. पाठः प्रामादिकः । 'अर्भको न' इत्यस्य हि 'अर्भक इव स्थितः' इति व्याख्यानम् । पुनरर्भक इत्यस्यानन्वयात् । मूलपाठटीकादिविसंवादाच्च ।

९ "कुमारः कुत्सितमारकः" इति क्वाचित्कः प्र. पाठोऽपि प्रामादिकः । कुमारक इत्येव हि मूलप्रतीकग्रहण-मुचितम् ।

१० "जीवस्यान्यशरीरं च" इति क्वचित् पाठः ।

११ "कुमार इवार्भकः" इति क्वचित् । इयमत्र व्यवस्था—यदि परतो नञ् तत् पूर्वस्योपमानतामाह । तद्यथा 'मृगं न भीमम्' । मृगमिव भीममित्येवाह । यथावा 'पिता पुत्रं न हस्तयोः' । पिता पुत्रमिवेत्येवाऽह । यदि

---

च पूर्वत एव नञ् तत् परं निषेधति। तद्यथा 'नास्य वर्ता न तरुता'। अस्य देवस्य वर्ताऽभिगन्ता तरुता जेता च नेत्येवाऽऽह। यथा वा 'न स सखा यो न ददाति सख्ये'। अदानेन सखा न भवतीत्येवाऽऽह। एवं हि वेदव्याख्यातृभिरभ्युपगतः सम्प्रदायः। तत् कथमिह न कुमारकः कुमारक इवार्भक इति? बाहुलकेनेदमुदितम्, यद् यदि परतो नञ् तत् पूर्वस्योपमानतामाहेति। भूयांसो हीदृशाः प्रयोगाः अल्पीयांसो निषेधे। भूयोदर्शनेन हि व्यवस्था क्रियते। नह्यपवादोऽस्तीति उत्सर्गो न प्रवर्तते। एवमेव हि वैयाकरणानां परिपाटी। तद्यथा "छन्दस्याङ्यादेरात्मनः" इत्याह। अनाङ्यपि हि भवति। तद्यथा गूढोत्मा इति, मन्यते त्मनः इति। तथाऽपि आङीत्याह सूत्रकारः पाणिनिः। किमुक्तं भवति? आङीति न वक्तव्यम्। आह च सूत्रकारः। तेनावक्तव्येनोक्तेनेदं सूचयामास—यदाङि भूयांस ईदृशाः प्रयोगाः। अनाङि चाल्पीयांस इति। यथावा "ईश्वरे तोसुन्" इत्याह। अनीश्वरेऽपि भवति। किमुक्तं भवति? ईश्वर इति न वक्तव्यम्। आह च सूत्रकारः। तेनावक्तव्येनोक्तेनेदं सूचयामास—यदीश्वरे भूयांस ईदृशाः प्रयोगाः। अनीश्वरे चाल्पीयांस इति। बाहुलकेनैव च च्छन्दसि सर्वविधीनां प्रवृत्तिः। तत एतद् भवति न कुमारकः कुमारक इवेति। लोकेऽप्येतादृशो नियमव्यत्ययो दृश्यते। उत्तरस्यैवेवशब्दस्योपमानार्थत्वं नित्यसमस्तत्वं चेत्युत्सर्गमपोह्य काळिदास आह—"उद्बाहुरिव वामनः" इति।

अत्र पूर्वस्यापि नञ उपमानार्थकत्व इमां श्रुतिमुदाहरन्ति–"अभी३दमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति। खले न पर्षान् प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः" (ऋ. १०. ४८. ७.) इति। अत्र हि 'खले धान्यमर्दनस्थाने, उलूखले पर्षान् न धान्यानीव शत्रून् प्रतिहन्मि मर्दयामि' इति किलार्थः। तथाहि भागवततात्पर्ये दशमस्य चतुर्थे–"प्रविष्टत्वाच्छरीरेषु जीव एवेति दुर्धियः। मन्यन्ते परमात्मानं न तन्मतमनुव्रजेत्। वेदवादविरोधित्वादनुयाता तमो विशेत्। यतः पर्यङ्कशयन आह विष्णुः सनातनः। इदं जगत् सर्वमथेदृशानि भूरीणि वा मामभियान्ति सङ्ख्ये। धान्यानि यद्वत् खलगानि मर्त्याः सञ्चूर्णयिष्याम्यहमेक एवेति ब्रह्माण्डे" इति। नन्विदं तात्पर्यकथनपरमिति सावकाशं भवति। खले न उलूखल इव खले सङ्ग्रामे शत्रून् प्रतिहन्मीत्यन्वयेऽप्यन्ततः तात्पर्यैक्यात्। अत एव यास्कोऽप्याह–"खल इव पर्षान् प्रतिहन्मि भूरि। खल इति सङ्ग्रामनाम। खलतेर्वा, स्खलतेर्वा। अयमपीतरः खलः (उलूखलः), एतस्मादेव, समास्कन्नो भवति" इति। सन्न्यायरत्नावळीकारा अप्याहुस्तृतीयस्य द्वितीये–"इन्द्रं परमेश्वरं मां अनिन्द्रा अनीश्वराः सन्तः शत्रवः आसुरप्रकृतयः किं निन्दन्ति? दोषाभावेन मम निन्दितुमशक्यत्वात्। निर्निमित्तं निन्दतस्तान् बहुतरानपि खल इव पर्षान् धान्यानि प्रतिहन्मि चूर्णयामि। परमेश्वरो गुणोत्कर्षज्ञानेनैव प्रीयते न निन्दयेत्युक्तं भवति" (३. २. ८.) इति। वैकुण्ठस्येन्द्रस्य हीदमार्षम्। वैकुण्ठनामा परमेश्वरः स्वयमृषिः स्वात्मानमेवोद्दिश्यैतत् सूक्तमपश्यत्। अत एवेन्द्रं परमेश्वरं मामिति व्याख्यातम्। तथाच कथमिदम्, "उपरिष्टादुपचारस्तस्य येनोपमिमीते" इति नियमापवादस्योदाहरणम्? उदाहरणान्तरं तर्हि मृग्यम्। अथवा दशमतात्पर्योदाहृतप्रमाणबलादिदमेव पूर्वस्य नञ उपमार्थतायां गमकं भवति। पद्मनाभतीर्थीयं तु अन्वयमविवक्षित्वा यथाश्रुतार्थकथनपरमिति वा पररीत्या तथार्थकथनेऽपि न नो हानिरिति प्रौढिवाद इति वा व्याख्येयम्। अत एव नयमञ्जर्यां "मन्त्रार्थस्तु इदं जगत् सर्वमथेदृशानीत्यादिप्रमाणबलादवगन्तव्यः" इत्येवोक्तम्। ननु तद्वचनमर्थान्तरेऽपि सावकाशमित्युक्तम्। नैतद्युक्तम्। खले धान्यानीव संग्रामे शत्रून् प्रतिहन्मीत्यन्वयस्यैवौचित्यात्। नहि सङ्ग्रामे धान्यखलोपमानमात्रेण किञ्चित् पूर्यते। धान्यहननमिव शत्रुचूर्णनं हि वाक्यार्थः। संग्रामोलूखलोभयार्थकखलपदप्रयोगेणैव लब्धस्योपमानस्य पुनर्मुखतो नञा निर्देशो नात्यन्तमर्थवान्। अत एव निरुक्तव्याख्यानेऽपि तथैव व्याख्यातम्—"अहमेक एव खले धान्यमर्दनस्थाने पर्षान्, पृष्यन्ते सिच्यन्तेऽपक्वदशायां ये ते पर्षास्तान् पूलान् न इव भूरि बहूनपि तान् प्रतिहन्मि। तैरप्रतिषिध्यमानस्तान् पूलानिव मर्दयामि" इत्यादि।

इति वा[1]। सपक्षत् परिपक्वज्ञानादिकमकरोत्[2]। महिषं महान्तं ब्रह्माणम्[3]। मृगयन्तं[4] स्वात्मानम्। पित्रे स्वस्मै मात्रे लक्ष्म्यै च[5] विभुक्रतुं पूर्णज्ञानम्। पितृमातृविषये पूर्णज्ञानं पुनःपुनः पूरयामासेत्यर्थः[6]।

"ज्ञानपूर्णं विधातारं मोक्षदानेन केशवः। स्वपुत्रं पूरयामास महिषं महतां महान्" इति प्रवृत्ते॥ *॥

यथास्थिताः प्रज्ञाताः। इतस्ततः संयोजनं विना यथास्थितशंसनं पथः प्रातिः[7]॥ *॥

[स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं शंसयेन्ने-च्छन्दसां कृच्छ्रादवपद्या इत्यथ यः पाप्मानमपजिघांसुः स्याद् विहृतं षोळशिनं शंसयेद् व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्तमेवास्मै तत् पाप्मानं शमलमप हन्त्यप पाप्मानं हते य एवं वेद।] (ऐत. ब्रा. पं. ४. अ. २. खं ४. वा. ३.)

व्याप्तो विशेषेणाऽऽपन्नः। अविहृतमसंसृष्टम्। कृच्छ्रादयथास्थित[8]शंसननिमित्ताद् [9]दुःखादवाग्गतिं गतश्रीकतामेव न प्राप्नुयाम्[10]।

---

१ "न कुमार इति वा" इति प्र. पाठः।

२ "-ज्ञानादिगुणमकरोत्" इति प्र. पाठः। "-ज्ञानदिगुणकमकरोत्" इति च। "-ज्ञानमकरोत्" इत्यपि क्वचित्। ननु शाकल्यः "सः पक्षत्" इति द्वे पदे पठति। तत् कथमिदं सपक्षत् परिपक्वज्ञानादिकमकरोदिति? तर्हि सः पक्षत् परिपक्वज्ञानादिकमकरोदिति भाष्येऽपि पदं प्रगृह्यताम्। नवा प्रगृह्यम्। पदपाठस्यायोगव्यवच्छेद एकार्थ इत्यङ्गीकारात्। पदपाठान्तरं तु न विरुद्ध्यते। तद्यथा "ईशा वास्यम्" इति सम्प्रदायपठितं पदपाठं विहाय "ईशऽआवास्यम्" इत्येकपदमित्याह। तैत्तिरीये च "सुवर्णज्येतीः" इत्यत्र "सुवः न ज्योतिः" इति पदपाठं विहाय "सुवर्णऽज्योतीः" इत्येव पदं पपाठ। अतत् त्वम् असि इति च प्रसिद्धम्। सम्मतं चैतत् पदपाठानैयत्यं परेषामपि। "मासकृद्वृकः" इत्यत्र 'मा सकृत् वृकः' इति त्रीणि पदानीति पदपाठे स्थितेऽपि यास्कः स्वनिरुक्ते "मासकृत् वृकः" इति द्वे एव पदे इत्याह। तदेतत् सर्वं वेदसम्प्रदायविदां स्फुटमिति सर्वं सुसङ्गतम्।

३ "महान्तं महागुणं ब्रह्माणम्" इति क्वचित्। ४ "मृगं मृगयन्तम्" इति प्र. पाठः।

५ "भात्रे लक्ष्म्यै विभुक्रतुम्" इति प्र. पाठः। "मात्रे च लक्ष्म्यै विभुक्रतुम्" इति क्वचित्।

६ "विभुक्रतुं पितृमातृविषये पूर्णज्ञानं पुनः पूरयामासेत्यर्थः" इति प्र. पाठः।

७ "पथि प्राप्तिः" इति प्र. पाठः क्वचित्। ८ "कृच्छ्रादयथावस्थित-" इति क्वचित् प्र. पाठः।

९ "-शंसननिमित्तदुःखात्" इति क्वचित्। "-निमित्तं दुःखात्" इति च। "-निमित्तासुखात्" इति च।

१० "गतश्रीकतामेव प्राप्नुयाम्" इति क्वचित् प्र. पाठः प्रामादिकः।

"विलोमः शत्रुजयकृत्[1] संसर्गः पापनाशनः । यथास्थितः श्रीकरः स्यात् स्वाध्यायः शंसनेऽपि च[2]" इति प्रवृत्ते । "गतश्रियः श्रियोऽहानिं पापहानिं परस्य च । संसर्गश्छन्दसां कुर्याच्छ्रियो वृद्धिं यथास्थितः" इति स्वाध्यायतत्त्वे । "किञ्चित्त्वे चोभयत्वे च संशये सदृशे तथा[3] । इवशब्दः प्रयुज्येत न्यक्कारेऽपिच पण्डितैः" इति च शब्दनिर्णये[4] ।

अतो गतश्रीत्वसंशयेऽपीत्यर्थः । इतस्ततो विशेषेण संहृतं संयोजितं विहृतम्[5] ।

"पापानां व्यतिषक्तत्वाद्[6] व्यतिषक्तं विनाशकम् । धनस्याव्यतिषङ्गेण व्यतिषङ्गोऽविनाशकः । सदृशं सदृशस्यैव यतः स्यात् प्रविनाशकम् । तथाऽप्यप्राप्तनाशस्य धनस्य बलवत्त्वतः । शक्नुयान्न विनाशाय पापस्येच्छासमेधितम् । संसृष्टं स्याद् विनाशाय नहीच्छा धनसंक्षये" इति स्वाध्यायतत्त्वे ।

अव्यतिषक्तत्वं च मोक्षे विद्यत इत्युभयार्थ[7] इवशब्दः । एवम्भूतेन शंसनेन पाप्मानमपहन्ति । शमलं रागादिकं च । पापस्य पृथगुक्तेः ।

"शमलं पापमुद्दिष्टं रागद्वेषादिकं तथा । अपराधश्च शमलं मलं च शमलं विदुः" इति शब्दनिर्णये ।

य एवमुपास्ते सोऽपि पाप्मानमपहते[8] ।

"ऋक्षु संसृज्यमानासु प्रोच्यमानं जनार्दनम् । पुंसंसृष्टस्य पापस्य निहन्तारं विशेषतः । तत्प्रसादेन मुक्तस्य पापासंसृष्टतामपि । ध्यायन् कर्माणि कृत्वाऽपि[9] मुच्यते सर्वपातकैः" इति प्रवृत्ते । * ॥

नचैवमादिवाक्यानां स्वार्थे प्रामाण्याभावः । सिद्धार्थे प्रामाण्यस्य साधितत्वात् । अविरोधाच्च । नच बह्वर्थेषु तात्पर्यकल्पने कल्पनागौरवम् । वचनेनैव प्रतीयमानत्वादर्थस्य कल्पनाभावात् ।

---

१ "शत्रुक्षयकृत्" इति क्वचित् ।
२ "शंसनेऽपिवा" इति क्वचित् ।
३ "सदृशेऽथवा" इति क्वचित् ।
४ "इति शब्दनिर्णये" इति प्र. पाठः ।
५ "इतस्ततो विशेषेण हृतं विहृतम्" इति प्र. पाठः । "इतस्ततो विशेषेण संयोजितं विहृतम्" इति क्वचित् ।
६ "व्यतिषिक्तत्वात्" इति प्र. पाठः प्रामादिकः ।
७ "इत्यत्रोभयार्थः" इति प्र. पाठः । "इत्यत उभयार्थः" इति क्वचित् ।
८ "पाप्मानमपहन्ति" इति क्वचित् ।
९ "कर्माण्यकृत्वाऽपि" इति प्र. पाठः प्रामादिकः । कर्म हि क्रियमाणं बध्नाति । ज्ञानी तु कृत्वाऽपि कर्माणि न बद्ध्यत इति ज्ञानिन उत्तराघस्याश्लेषो ह्यत्र वाक्यार्थः ।

नच वाचनिकार्थस्तात्पर्यार्थ इति विशेषः। तन्मानाभावात्। यत्र वाचनिकादन्यस्तात्पर्यार्थः[१] प्रतीयते लौकिकवाक्येषु न तत्र साक्षाद् वचनं बोधकम्[२]। वचनलिङ्गाऽनुमा[३] हि सा। विरोधादमुख्यवृत्तिर्वा, आप्तत्वनिश्चये। आप्तत्वानिश्चये प्रमाणमेव[४] न भवति। वेदवाक्यस्य तु[५] वाचनिकार्थं विना नैवान्यो युज्यते[६]। वाचनिकानां तु बहूनामप्यविरोधे स्वीकार्यता।

"[७]स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि" इति[८]। "वानात् सूतेर्देवनाद् वासुदेवो वासाद् द्युतेश्छादनात् क्रीडया च[९]। बलादसुत्वाद् दातृतो वर्तनाच्च तं वासुदेवं प्रवदन्ति वेदाः" इत्यादि च सौकरायणश्रुतौ[१०]।

मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्थमेवान्यतरपदम्।

"रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्। तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके। अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पना[११]। ज्ञाते विशेषविज्ञानं व्यवहारोऽपि रूढितः" इति ब्रह्मतर्के।

वाचनिकमर्थं[१२] परित्यज्य नियोगार्थकल्पने श्रुतहानिरश्रुतकल्पनेति सर्वदोषाधिकौ[१३] तस्य व्यर्थमापद्येते[१४]। एवं च वदतो विधिशब्दा निरर्थकाः सिद्धार्था वा, सिद्धशब्दा वा स्वार्थे[१५] प्रमाणभूता इत्युक्ते किमुत्तरम्? नच कारणं किञ्चिद् वाचनिकानां बहूनामप्यर्थानां त्यागे। प्रतीय-

---

१ "वाचनिकार्थादन्यस्तात्पर्यार्थः" इति प्र. पाठः। २ "वचनं प्रबोधकम्" इति क्वचित्।

३ "वचनलिङ्गकाऽनुमा" इति क्वचित्।

४ "प्रामाण्यमेव" इति प्र. पाठः। "प्रामाण्यमेव न सम्भवति" इति क्वचित्।

५ "वेदवाक्ये तु" इति क्वचित्।

६ "नैवान्योऽर्थो युज्यते" इति क्वचित्। अस्य वाक्यस्य प्राचीनटीकाद्यनुसारेणायमाशयः प्रतिभाति— वाच्यार्थं विना केवला लक्षणा केवलो वोपचारः वेदवाक्यस्य न युज्यते। यत्र लक्षणा वोपचारो वाऽऽश्रीयते तत्रापि कश्चनाबाधितो वाच्यार्थो वक्तव्यः। नहि गङ्गायां घोष, इत्यादिलौकिकवाक्यवत् सर्वथा बाधितवाच्यार्थो लक्षणादिः क्वचन वेदे विद्यत इति। अन्ततः परमात्मनि समन्वये सर्वशब्दानां मुख्यार्थपरत्वस्य सर्वथा वक्तव्यत्वात्। न्याय्यश्चायमर्थः। नहि सर्वात्मना वेदे लक्षणादिर्नास्तीति। मुख्यार्थसहकृतस्य लक्षणादेः सिद्धान्तेऽप्यूरीकरणात्। अतत् त्वमसि, तस्मात् त्वमसि इत्यादि मुख्यार्थसहकृतं तत्सदृशस्त्वमसीति गौणमप्यर्थं तत्त्ववादिनो हि वदन्ति।

७ क्वचिन्मुद्रितपाठेऽत्राऽऽदौ ओङ्कारः पठ्यते। न स सूत्रघटक इति न प्रतीकग्रहणे वक्तव्यः।

८ "इति सूत्रम्" इति प्र पाठः। ९ "क्रीडया वा" इति क्वचित्।

१० "इत्यादि सौकरायणश्रुतिः" इति प्र. पाठः। ११ "रूढकल्पना" इति क्वचित् प्र. पाठः।

१२ "वाचनिकार्थम्" इति क्वचित्। १३ "सर्वदोषाधिके" इति क्वचित्।

१४ "व्यर्थमाप्येते" इति क्वचित्। १५ "सिद्धशब्दाः स्वार्थे" इति क्वचित् प्र. पाठः।

माने तु विरोधे तदन्योऽर्थः स्वीकार्यो वाचनिक एव। सोऽपि वाचनिक एवेत्यपि तत एव सिद्ध्यति।

"मुख्यार्थानां च सर्वेषां तारतम्यं तु[1] विद्यते। तत्रापि परमो मुख्यो वाच्योऽशेषरवैर्हरिः। तत्तन्मुख्याविरोधेन[2] तदन्यार्थस्य सङ्ग्रहः। स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्थोऽखिलेष्वपि। इति सर्वत्र नियमः शब्दार्थज्ञानभूमिषु" इति च।

नच क्रियायामेव प्रयोजनं न सिद्ध इति युक्तम्। ज्ञानमात्रेऽपि महाप्रयोजनदृष्टेः[3] पितृजीवनादिवाक्ये। आह च स्वयं भगवान्—

["द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात् क्षरमतीतोऽहमक्षरादपिचोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद् भजति मां सर्वभावेन भारत। इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ। एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत" इति। "श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप" इति च] "ध्यानं त्वखिलकर्मभ्यो ध्यानाच्च ज्ञानमुत्तमम्। न ज्ञानसदृशं किञ्चित् पुरुषार्थप्रसिद्धये" इति प्रवृत्ते। "दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय" इति च। "अशेषकर्मपूगोऽपि न विष्णुध्यानलेशभाक्। तच्च ध्यानं हरेर्ज्ञानकोट्यंशाय न पूर्यते" इति कर्मविवेके। "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति श्रुतिः[4]।

नच कर्ममात्रे पर्यवसितिर्वेदस्य। सुखज्ञानस्यैव प्रयोजनत्वात्। अतः सिद्धस्यैव प्रयोजनत्वम्[5]। प्रशंसादीनां च तात्पर्यं वाचनिकार्थात्यागेनैव कथितं स्वयं भगवता— "[6]भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति" इति। तस्माद् विरुद्धवत् प्रतीयमानानि प्रशंसादीनि ज्ञानसहकार्यपेक्षया योजनीयानि[7]। पुराणादीनां तु श्रुत्यादिविरोधे[8] गौणोऽप्यर्थो युज्यते।

"कुहकं चेन्द्रजालं च विरुद्धाचरणानि च। दर्शयित्वा जनं सर्वं मोहयाऽऽशु महेश्वर[9]" इति वाराहे[10] ॥ * ॥

---

१ "तारतम्यं च" इति प्र. पाठः।
२ "तत्र मुख्यविरोधेन" इति प्र. पाठः प्रामादिकः।
३ "महाप्रयोजनदर्शनात्" इति प्र. पाठः।
४ "इति च श्रुतिः" इति प्र. पाठः।
५ "प्रयोजनत्वं सिद्धम्।" इति क्वचित् पाठः।
६ अत्राप्यर्वाचीना आदौ 'ॐ' इति पठन्ति।
७ "योज्यानि" इति क्वचित्।
८ "श्रुत्या विरोधे" इति क्वचित्।
९ "मोहयामास हीश्वरः" इति क्वचित्।
१० "इत्यादि वाराहे" इति प्र. पाठः।

[उद्यद् ब्रध्नस्य विष्टपमित्युत्तमया परि दधाति स्वर्गो वै लोको ब्रध्नस्य विष्टपं स्वर्गमेव तं लोकं यजमानं गमयत्यपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्यो वा एष सवनेभ्यः सन्निर्मितो यत् षोळषी तद् यदपाः पूर्वेषां हरिवः सुतानामिति यजति पीतवद् वै प्रातःसवनं प्रातःसवनादेवैनं तत् सन्निर्मिमीतेऽथो इदं सवनं केवलं त इति माध्यन्दिनं वै सवनं केवलं माध्यन्दिनादेवैनं तत् सवनात् सन्निर्मिमीते ममद्धि सोमं मधुमन्तमिन्द्रेति मद्वद्वै तृतीयसवनं तृतीयसवनादेवैनं तत् सन्निर्मिमीते सत्रा वृषन् जठर आवृषस्वेति वृषण्वद्वै षोळषिनो रूपं सर्वेभ्यो वा एष सवनेभ्यः सन्निर्मितो यत् षोळषी तद् यदपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्य एवैनं तत् सवनेभ्यः सन्निर्मिमीते सर्वेभ्यः सवनेभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद ॥ ] (ऐत. ब्रा. पं. ४. अ. १. खं. ४. वाक्य ४.)

[उद्यद् ब्रध्नस्य विष्टपं गृहमिन्द्रश्च गन्वहि ।
मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदे ॥]
(ऋ. ८. ६९. ७.)

ब्रध्नस्य सूर्यस्य विष्टपं स्वर्गं उद्गन्वहि इन्द्रोऽहं च । यत्तदिन्द्रगृहं ब्रध्नविष्टपं[1] मध्वः पीत्वा तत्र सचेवहि सुखमनुभवाव । सख्युः इन्द्रस्य त्रिस्सप्तस्थानेषु ।

"एकविंशति[2] दिव्यानि स्थानानि दिवि चक्रिणः । वज्रिणो वाऽपि तद्भक्तैर्भुज्यन्ते तानि याज्ञिकैः[3]" इति प्रवृत्ते ॥ * ॥

---

१ क्वचित् "ब्रध्नं विष्टपम्" इति प्र. पाठः प्रामादिकः ।

२ एकविंशतिः स्थानानीत्यर्थः । अविभक्तिको निर्देशः । तद्यथा भागवते — "सन्दधे निशितान् बाणानेकविंशति संयुगे" (१०.६६.१०) इति । एकविंशतिदिव्यानीति समस्तं वा । विशेषणयोः समासः । अथवा एकविंशतिस्थानानीत्येवैकं पदम् । दिव्यानीत्येतत् मध्येपतितं पृथक् पदं प्रकृष्य पठनीयम् । संहितायां मध्यसम्पातः पदपाठदशायां पुनः तत आकृष्य पठनमित्येतद् वैदिकसंप्रदायविदां नापूर्वम् । तद्यथा "नरा वा शंसम्" इति संहितापाठः, "नराशंसं वा" इति पदपाठः । एवमन्यत्राप्यूह्यम् ।

३ "वैदिकैः" इति क्वचित्

[अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते ।
ममद्धि सोमं मधुमन्तमिन्द्र सत्रा वृषञ् जठर आ वृषस्व ॥]

(ऋ. १०. ९६. १३.)

पूर्वान्[१] प्रातःसवनगान् सोमानपाः । हरीनिन्द्रियाणि वर्तयति[२], हरिभिर्वर्तत इति वा । इदं माध्यन्दिनं सवनं[३] ते केवलम् । अथो इत्यर्थान्तरम् । मधुमन्तं सोमं जठर आवृषस्व सिञ्च[४], ममद्धि च । सत्रा अस्मत्त्राणेन सह ॥ * ॥

पीतशब्दवत्[५] । अपूर्वपानत्वात् तदेव पानं मुख्यत इति[६] पीतशब्दः । इन्द्रस्य केवलत्वात् केवलं माध्यन्दिनं सवनम् । ममद्धीति तृतीयसवनम्[७] । तत्र हि मदो विशेषतो भवति, पूर्तेः । इति सवनत्रयरूपता षोळशिनः । वृषण्वत् वृष्ण इन्द्रस्य विशेषतः प्रियत्वात् । एवं चतूरूपता षोळशिनः । राध्नोति ऋद्धो भवति ॥ * ॥

[अथातश्छन्दांस्येव व्यति षजत्या त्वा वहन्तु हरय उपो षु शृणुही गिर इति गायत्रीश्च पङ्क्तीश्च व्यति षजति गायत्रो वै पुरुषः पाङ्क्ताः पशवः पुरुषमेव तत् पशुभिर्व्यति षजति पशुषु प्रति ष्ठापयति यदु गायत्री च पङ्क्तिश्च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैति यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यति षजत्यौष्णिहो वै पुरुषो बार्हताः पशवः पुरुषमेव तत् पशुभिर्व्यति षजति पशुषु प्रतिष्ठापयति यदुष्णिक् च बृहती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैत्या धूर्ष्वस्मै ब्रह्मन् वीर ब्रह्मकृतिं जुषाण इति द्विपदां च त्रिष्टुभं च व्यतिषजति द्विपाद् वै पुरुषो वीर्यं त्रिष्टुप् पुरुषमेव तद् वीर्येण व्यति षजति वीर्ये प्रति ष्ठापयति तस्मात् पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्य-

१ "पूर्वान् सुतान् प्रातः-" इत्यादि प्र. पाठः ।
२ "वर्तयतीति हरिवः, हरिभि-" इत्यादि प्र. पाठः । "वर्तयतीति हरिभिः" इत्यादि क्वचित् ।
३ "सवनं केवलं ते" इति प्र. पाठः ।
४ "आवृषस्व आसिञ्च" इति प्र. पाठः ।
५ "पीतवत् पीतशब्दवत्" इति क्वचित् ।
६ "मुख्यमिति" इति प्र. पाठः ।
७ "तृतीयं सवनम्" इति क्वचित् ।

वत्तमो यदु द्विपदा च विंशत्यक्षरा त्रिष्टुप् च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैत्येष ब्रह्मा प्र ते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यति षजति द्विपाद्वै पुरुषो जागताः पशवः पुरुषमेव तत् पशुभिर्व्यति षजति पशुषु प्रति ष्ठापयति तस्मात् पुरुषः पशुषु प्रतिष्ठितोऽत्ति चैनानधि च तिष्ठति वशे चास्य यदु द्विपदा च षोळशाक्षरा जगती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैति त्रिकद्रु-केषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमित्यतिच्छन्दसः शंसति च्छन्दसां वै यो रसोऽत्यक्षरत् सोऽतिच्छन्दसमभ्यत्यक्ष-रत् तदतिच्छन्दसोऽतिच्छन्दस्त्वं सर्वेभ्यो वा एष च्छन्दोभ्यः सन्निर्मितो यत् षोळशी तद् यदतिच्छन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन षोळ-शिना राध्नोति य एवं वेद॥ ३॥] (ऐत. ब्रा. पं. ४. अ. १. खं. ३.)

विहृतपक्षे तु—"पादान् व्यवधायार्द्धर्चशः शंसेत् पूर्वासां पूर्वाणि पदानि गायत्र्यः[1] पंक्तिभिः पंक्तीनां तु द्वेद्वे पदे शिष्येते ताभ्यां प्रणुयादुष्णिहो बृहतीभिरुष्णिहां तूत्तमान् पादान् द्वौद्वौ[2] कुर्याच्चतुरक्षरमाद्यं द्विपदाश्चतुर्धा कृत्वा प्रथमां त्रिष्टुभोत्तरा जगतीभिरुत्तमायाश्चतुर्थमक्षर-मन्त्यं पूर्वस्याऽद्यमुत्तरस्यानुष्टुभमतिच्छन्दस्स्ववदध्यात् द्वितीयतृतीययोस्तृतीययोः पादयो-रवसानत उपदध्यात् प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्यामुत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्कारं शंसेत्[3] ।" (आश्व. श्रौ. सू.–अ. ६. खं. ३.)

---

१ अत्र "गायत्र्याः", "गायत्रीः" इत्यादिः कोशान्तरगतः पाठः प्रामादिकः ।

२ "पादान् द्वौ कुर्यात्" इत्याश्वलायनसूत्रपाठः प्रचलित उपलभ्यते । केषुचित् कोशेष्वपि तथा पठ्यते । वीप्सा तु मूलकोशानुसारिणी ।

३ तथाचायमर्थः—"अथातश्छन्दांस्येव व्यतिषजत्या त्वा वहन्तु हरय उपो षु शृणुही गिर इति गायत्रीश्च पंक्तीश्च व्यतिषजति" इति ब्राह्मणं व्याचष्टे—"गायत्र्यः पंक्तिभिः, पंक्तीनां तु द्वेद्वे पदे शिष्येते ताभ्यां प्रणुयात्" इति । अयमत्र प्रणयनक्रमः—अष्टाक्षरैः त्रिभिः पादैः गायत्री भवति । पञ्चभिः पंक्तिः । तत्रैकस्य गायत्र्या व्यतिषङ्गे षोळशित्वसिद्धिरिति । तथाहीदमिन्द्रदैवत्यं मेधातिथिदृष्टं गायत्रं त्र्यृचम्—

आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ॥ १ ॥
इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥ २ ॥
इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥ ३ ॥ (ऋ. १. १६. १–३.)

तथा गोतमदृष्टमिन्द्रदैवत्यं पांक्तं त्र्यृचम्—

उपो षु शृणुही गिरो मघवन् मातथा इव ।
यदा नः सूनृतावतः कर आदर्थयास इद् योजा न्विन्द्र ते हरी ॥ १ ॥

सुसन्दृशं त्वा वयं मघवन् वन्दिषीमहि ।
प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ॥ २ ॥

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।
यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥ ३ ॥

(ऋ.१.८२.१,३,४.)

गायत्र्याः पंक्तेश्च पादान् व्यवधाय, पूर्वं गायत्रीपादः, ततः पंक्तिपाद इति क्रमिकसंश्लेषेणार्द्धर्चशः शंसने गायत्र्यास्त्रिभिः, पंक्तेश्च त्रिभिः पादैः संश्लिष्टास्त्रय आनुष्टुभा अर्द्धर्चाः । पंक्तौ तु द्वौ द्वौ पादौ शिष्येते । सोऽप्येक आनुष्टुभोऽर्द्धर्चो भवति । तदेवं सर्वासामृचां षोळशित्वं सेत्स्यति । तदिहायं शंसनक्रमः—

आ त्वा वहन्तु हरय उपो षु शृणुही गिरः । वृषणं सोमपीतये मघवन् मातथा इवोम् ॥
इन्द्र त्वा सूरचक्षसो यदा नः सूनृतावतः । कर आदर्थयास इद् योजा न्विन्द्र ते हरोम् ॥
इमा धाना घृतस्नुवो सुसन्दृशं त्वा वयम् । हरी इहोप वक्षतो मघवन् वन्दिषीमहोम् ॥
इन्द्रं सुखतमे रथे प्र नूनं पूर्णवन्धुरः । स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरोम् ॥
इन्द्रं प्रातर्हवामहे स घा तं वृषणं रथम् । इन्द्रं प्रयत्यध्वरेऽधि तिष्ठाति गोविदोम् ॥
इन्द्रं सोमस्य पीतये यः पात्रं हारियोजनम् । पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरोम् ॥

एवं प्रथममण्डलीयषोडशसूक्ते प्रथमद्वितीयतृतीयैर्गायत्रैर्मन्त्रैः संसृष्टा द्व्यशीतितमे सूक्ते प्रथमतृतीयचतुर्थाः पांक्ता मन्त्राः षोळशिनो भवन्तीति सम्प्रदायः । क्रमेण प्रथमद्वितीयतृतीयानां ग्रहणमपहाय प्रथममन्त्रानन्तरं तृतीयचतुर्थयोर्ग्रहणे निमित्तं न स्फुटम् । प्रथमद्वितीयतृतीया एव मन्त्राः संसृज्या इत्यपि केषाञ्चित् पक्षः । तत्पक्षेऽपि प्रथमानन्तरं तृतीयो मन्त्रः, तदनन्तरं च चतुर्थस्य स्थाने द्वितीयः पठ्यते । चतुर्थश्च न पठ्यत इति विशेषः । तथाहि द्वितीयो मन्त्रः—

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ २ ॥

एतत्पक्षे पुनस्तृतीयमन्त्रसंसर्गानन्तरं द्वितीयसंसर्गे बीजं नोत्पश्यामः ।

अथ "यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजति" इति ब्राह्मणं विवृणोति—"उष्णिहो बृहतीभिरुष्णिहां तूत्तमान् पादान् द्वौद्वौ कुर्याच्चतुरक्षरमाद्यम्" इति । आद्यौ द्वौ पादावानुष्टुभौ पूर्वार्द्धम्, जागतः पाद उत्तरार्द्धमिति त्रिभिः पादैरुष्णिग् भवति । पुनश्चतुर्थेनाऽनुष्टुभेन पादेन चतुष्पदा बृहती भवति । तदेवं उष्णिक् अष्टविंशत्यक्षरा षोळशित्वाय चतुर्भिरक्षरैर्न्यूना भवति । षट्त्रिंशदक्षरा च बृहती चतुर्भिरक्षरैरधिका भवति । संसर्गेण च षोळशित्वं सम्पाद्यम् । तदर्थमुष्णिहस्तृतीयेन जागतपादेन आद्यं चतुरक्षरं विकृष्यते । तथा च उष्णिहः बृहत्याश्च प्रथमपादयोः संयोजनेनैकः षोळशी । द्वितीययोर्द्वितीयः । तत उष्णिहस्तृतीयपादस्य चतुरक्षराणि च बृहत्यास्तृतीयपादो जागतश्चेत्याहत्यैकः षोळशी । उष्णिहस्तृतीयपादेऽवशिष्टैरष्टाभिरक्षरैः संयोजितः बृहतीचतुर्थपादश्चतुर्थः षोळशी भवतीति ।

तथाहि उष्णिङ्मन्त्राः पर्वतदृष्टा इन्द्रदैवत्याः—

यदिन्द्र पृतनाज्ये देवास्त्वा दधिरे पुरः । आदित् ते हर्यता हरी ववक्षतुः ॥ १ ॥
यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः । आदित् ते हर्यता हरी ववक्षतुः ॥ २ ॥
यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे । आदित् ते हर्यता हरी ववक्षतुः ॥ ३ ॥
(ऋ. ८. १२. २५, २६, २७.)

अथेमे बृहतीमन्त्रा विश्वामित्रदृष्टा इन्द्रदैवत्याः —

अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः ।
जुषाण इन्द्र हरिभिर्न आ गह्या तिष्ठ हरितं रथम् ॥ १ ॥
हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः ।
विद्वांश्चिकित्वान् हर्यश्व वर्द्धस इन्द्र विश्वा अभि श्रियः ॥ २ ॥
द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम् ।
अधारयद्धरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरत् ॥ ३ ॥ (ऋ. ३. ४४. १–३.)

अत्रायं संयोजनक्रमः—

यदिन्द्र पृतनाज्ये अयं ते अस्तु हर्यतः । देवास्त्वा दधिरे पुरः सोम आ हरिभिः सुतोम् ॥
आदित् ते ह जुषाण इन्द्र हरिभिर्न आ गहि । र्यता हरी ववक्षतुरा तिष्ठ हरितं रथोम् ॥
यदा वृत्रं नदीवृतं हर्यन्नुषसमर्चयः । शवसा वज्रिन्नवधीः सूर्यं हर्यन्नरोचयोम् ॥
आदित् ते ह विद्वांश्चिकित्वान् हर्यश्व वर्द्धसे । र्यता हरी ववक्षतुरिन्द्र विश्वा अभि श्रियोम् ॥
यदा ते विष्णुरोजसा द्यामिन्द्रो हरिधायसम् । त्रीणि पदा विचक्रमे पृथिवीं हरिवर्पसोम् ॥
आदित् ते ह अधारयद्धरितोर्भुरि भोजनम् । र्यता हरी ववक्षतुर्ययोरन्तर्हरिश्चरोम् ॥

अथ "आ धूर्ष्वस्मै ब्रह्मन् वीर ब्रह्मकृतिं जुषाण इति द्विपदां च त्रिष्टुभं च व्यति षजति" इति, "एष ब्रह्मा प्र ते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यति षजति" इति च ब्राह्मणं विवृणोति–"द्विपदाश्चतुर्धा कृत्वा प्रथमां त्रिष्टुभा" इति, "उत्तरा जगतीभिरुत्तमायाश्चतुर्थमक्षरमन्त्यं पूर्वस्याऽद्यमुत्तरस्य" इति च।

अयमर्थः– विंशत्यक्षरा द्विपदा । एकादशाक्षरपादा च त्रिष्टुप् । आहत्य च त्रिष्टुभि चतुर्ष्वपि पादेषु चतुश्चत्वारिंशदक्षराणि । तानि च द्विपदाया विंशतिरक्षराणि च मिलितानि चतुष्षष्टयक्षराणि भवन्ति । तथा च चत्वारः षोळशिनः सम्पद्यन्ते । त्रिष्टुभि प्रतिपादं षोळशित्वनिर्वाहाय पञ्चाक्षराण्यपेक्ष्यन्ते । तानि च विंशत्यक्षरा द्विपदा चतुर्धा विभक्ता प्रतिविभागं पञ्चपञ्चाक्षरा त्रिष्टुप्पादेन संयुक्ता पूरयिष्यति । तथाच त्रिष्टुभ एकादशाक्षराणि द्विपदायाश्च पञ्च मिलितानि षोळशी ।

तथाहि वसिष्ठदृष्टा द्विपदा विराट्, भुरिगार्ची वा गायत्री, विश्वदेवदैवत्या—

आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः ॥ (ऋ. ७. ६४. ४.)

वसिष्ठदृष्टैवेन्द्रदैवत्या त्रिष्टुप्—

ब्रह्मन् वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनो हरिभिर्याहि तूयम् ।
अस्मिन्नू षु सवने मादयस्वोप ब्रह्माणि शृणव इमा नः ॥ (ऋ. ७. २९. २.)

तत्र द्विपदायाम्, "आ धूर्ष्वस्मै" इत्येको विभागः। "दधाताश्वान्" इति द्वितीयः। उभयत्रापि "आ धूर्षु अस्मै" इति, "दधाताशुवान्" इति च क्षैप्रसंयोगवियोगेन पञ्चाक्षरत्वम्। 'इन्द्रो न वज्री' इति तृतीयः पञ्चाक्षर एव। "हिरण्यबाहुः" इति तुरीयश्च। त एते प्रत्येकं त्रिष्टुप्पादैः संयुज्यन्ते। तथा चायं संयोजनक्रमः—

आ धूर्ष्वस्मै ब्रह्मन् वीर ब्रह्मकृतिं जुषाणः। दधाताश्वानर्वाचीनो हरिभिर्याहि तूयोम्।
इन्द्रो न वज्री अस्मिन्नू षु सवने मादयस्व। हिरण्यबाहुरुप ब्रह्माणि शृणव इमा नोम्॥

अथत्र षोळशाक्षराश्चतुर्धा विभक्तास्तिस्रो द्विपदाः द्वादशाक्षरपादाश्च तिस्रः जगत्य आहत्य षोळशिनो भवन्ति। द्विपदाश्चतुश्चतुरक्षरसङ्गतैः द्वादशभिर्जगतीपादैर्द्वादश षोळशिनः सम्पद्यन्त इति यावत्।

तथाहि सामवेदे त्रसदस्युदृष्टा प्रियमेधदृष्टा च इन्द्रदैवत्या द्विपदा विराडेका—

एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे। (साम. ४३८; १७६८)

कवषदृष्टा विश्वदेवदैवत्या द्विपदा द्वितीया—

वि स्रुतयो यथा पथा इन्द्र त्वद् यन्तु रातयः। (साम. ४५३.)

यद्यपि प्रचलितासु टीकासु सर्वत्र द्विपदेयमृक्—"विश्रुतयो यथा पथो इन्द्र त्वद्येति रातयः" इति पठ्यते। तत्र तु मूलं मृग्यम्। लिपिकृत्प्रमादः सम्भाव्यते। अनुपलब्धशाखान्तरपाठ इति वा वक्तव्यम्। ऐतरेयब्राह्मण-टीकायां सुखप्रदायां षड्गुरुशिष्यः— "वि स्रुतयो यथा पथो इन्द्र त्वद्यन्ति रातयः" इत्यानुपूर्वी पपाठ।

प्रियमेधदृष्टैवेन्द्रदैवत्या तृतीया द्विपदा —

त्वामिच्छवसस्पते यन्ति गिरो न संयतः॥ (साम. १७६९.)

अस्यां द्विपदायां चतुर्धा विभागो सन्दिह्यते। उत्तरार्द्धे 'यन्ति गिरः' इति, 'न संयतः' इति च स्फुटो विभागः। 'त्वामिच्छवसस्पते' इति पूर्वार्द्धगतानि च सप्ताक्षराणि कथं चतुर्भिरक्षरैः द्वेधा विभज्येरन्? अत्रोत्तर-माह—अन्त्यं पूर्वस्य आद्यमुत्तरस्येति। अयमर्थः—आदौ चतुरक्षराणि विभज्यन्ते "त्वामिच्छव–" इति। अस्यान्त्यं 'व' इत्यक्षरमुत्तरस्याऽद्यमपि कृत्वा पुनश्चतुरक्षराणि पठ्यन्ते 'वसस्पते' इति। तथात्र षोळशित्व-निर्वाह इति।

आभिः संयोजनीया इमास्तिस्रो जगत्यः बरुदृष्टा सर्वहरिदृष्टा वा इन्द्रदैवत्याः—

प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषो हर्यतं मदम्।
घृतं न यो हरिभिश्चारु सेचत आ त्वा विशन्तु हरिवर्पसं गिरः॥ १॥
हरिं हि योनिमभि ये समस्वरन् हिन्वन्तो हरी दिव्यं यथा सदः।
आ यं पृणन्ति हरिभिर्न धेनव इन्द्राय शूषं हरिवन्तमर्चत॥ २॥
सो अस्य वज्रो हरितो य आयसो हरिर्निकामो हरिरा गभस्त्योः।
द्युम्नी सुशिप्रो हरिमन्युसायक इन्द्रे नि रूपा हरिता मिमिक्षिरे॥ ३॥
(ऋ. १०. ९६. १–३.)

प्रतिपादं द्विपदाक्षरसंयोजनेन चायं षोळशिशंसनक्रमः—

एष ब्रह्मा प्र ते महे विदथे शंसिषं हरी। य ऋत्वियः वन्वे वनुषो हर्यतं मदोम्॥
इन्द्रो नाम घृतं न यो हरिभिश्चारु सेचते। श्रुतो गृणे आ त्वा विशन्तु हरिवर्पसं गिरोम्॥

[महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्यो वा एष च्छन्दोभ्यः सन्निर्मितो यत् षोळशी तद्यन्महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद ॥ * ॥]

(ऐत. ब्रा. पं ४. अ. १. खं. ४. वाक्य-५.)

महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु —"एवाह्येवैव अपाः[1] पूर्वेषां हरिवः सुतानाम्, एवैवाहीन्द्रँ[2] अथो इदं सवनं केवलं ते, एवाहि शक्रो ममद्धि सोमं मधुमन्तमिन्द्र, वशी हि शक्रः सत्रा वृषञ्जठर आवृषस्वेति" ॥ * ॥

(आश्व. श्रौ. सू. अ. ६. खं ३.)

भगवद्भक्तिज्ञानवैराग्यपूर्वकं च कर्म[3] कर्तव्यम्—

"इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे ते सुकृतेऽनु भूत्वा[4] इमं लोकं हीनतरं वा विशन्ति।", "नैष्कर्म्यमप्यच्युत-

---

विस्नुतयो (विश्रुतयो?) हरिं हि योनिमभि ये समस्वरन् ।
यथा पथा (पथो?) हिन्वन्तो हरी दिव्यं यथा सदोम् ॥
इन्द्र त्वद्य आ यं पृणन्ति हरिभिर्न धेनवः ।
(न्ति?) न्तु रातय इन्द्राय शूषं हरिवन्तमर्चतोम् ॥
त्वामिच्छवसो अस्य वज्रो हरितो य आयसः ।
वसस्पते हरिर्निकामो हरिरा गभस्त्योम् ॥
यन्ति गिरो द्युम्नी सुशिप्रो हरिमन्युसायकः ।
न संयत इन्द्रे नि रूपा हरिता मिमिक्षिरोम् ॥

अथ "त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमित्यतिच्छन्दसः शंसति" इति ब्राह्मणम् । तस्योपव्याख्यानम्— "अनुष्टुभमतिच्छन्दस्त्ववदध्यात् —" इत्यादि । तदेतद् पूर्वमेव विवृतमिति । संसृष्टमन्त्रार्थस्तु विस्तरभयान्न लिख्यते ।

१ क्वचित् "एवा ह्येवैवापाः" इति संहिततया पठ्यते । प्र. पाठे तु "एवा ह्येवा अपाः" इतीयदेव पठ्यते । आश्वलायनसूत्रेऽपि मुद्रितकोशेषु तावदेव पठ्यते । तत्पक्षे क्षैप्रसंयोगविश्लेषेण "एवा हियेव" इति पञ्चाक्षरत्वं सम्पाद्यम् । प्राचीनकोशेषु 'एवाह्येवैव' इति पञ्चाक्षरस्यैवोपसर्गस्य पाठान्न कोऽपि दोषः ।

२ "एवाहीन्द्रँ" इति श्रौतसूत्रपाठः ।

३ "—पूर्वकमेव कर्म" इति क्वचित् ।

४ "पृष्ठे सुकृते तेऽनुभूत्वा" इति प्र. पाठः प्रामादिकः । 'ते सुकृतेऽनुभूत्वा' इत्येव हि भाष्यकृत्सम्मतः सकलप्राचीनकोशसम्मतश्च श्रुतिपाठः ।

भाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे नचाऽर्पितं[1] कर्म यदप्यकारणम् ।", "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।", "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ।", "मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः । ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः । ये त्वेदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ।", "तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः । क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमोनमः ।", "एष उ एव दाश्वान् य एनमेवं वेद[2] ।", "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ।", "परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।", "सर्वगुह्यतमं भूयः शृणु मे परमं वचः । इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि[3] सत्यं ते प्रतिजाने प्रियोऽसि मे ।", "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् । तिष्ठमानस्य तद्विदः" इत्यादिश्रुतिस्मृतिभ्यः ॥ * ॥

नमो नारायणायाजभवशक्रोष्णरुङ्मुखैः ।
सदा वन्दितपादाय श्रीपाय प्रेयसेऽधिकम् ॥ * ॥

[4]यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बद् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितः
खण्डार्थनिर्णयः[5] समाप्तः

---

१ "विनाऽर्पितम्" इति क्वचित् प्र. पाठः प्रामादिकः ।
२ "य एवं वेद" इति प्र. पाठः ।
३ "मामेवैष्यसि" इति क्वचित् ।
४ "यस्य त्रीणि–" इत्यादिपद्यं मुद्रितपाठेषु, क्वचित् कोशे च न पठ्यते ।
५ "कर्मनिर्णयः" इति प्र. पाठः । "खण्डार्थः" इति क्वचित् ।

| | मन्त्र | पाद |
|---|---|---|
| अथासोमं | 165 | 3 |
| अथोइन्द्राय | 318 | 3 |
| अदब्धानि | 263 | 3 |
| अद्याकृणुहि | 124 | 3 |
| अद्यानूनं | 128 | 3 |
| अद्वेषोहस्त | 257 | 3 |
| अधस्मानो | 156 | 3 |
| अधस्वनान्मरु | 466 | 1 |
| अधारयन्त | 202 | 1 |
| अधिप्रचेतुने | 204 | 2 |
| अधिपवण्या | 314 | 2 |
| अनर्वाणं | 442 | 2 |
| अनवद्यैरभि | 58 | 1 |
| अनागसो अदितये | 268 | 4 |
| अनाधृष्टास | 189 | 2 |
| अनामृणः | 384 | 3 |
| अनाशस्ता | 322 | 2 |
| अनिमेषंरक्ष | 362 | 4 |
| अनिषङ्गाय | 363 | 2 |
| अनुकामं | 170 | 1 |
| अनुप्रत्न | 337 | 1 |
| अनुस्वधा | 394 | 1 |
| अनूक्षरा | 223 | 2 |
| अन्तरिक्षेण | 275 | 2 |
| अन्तर्वावत् | 488 | 4 |
| अन्तर्विश्वानि | 249 | 2 |
| अपगूळ्हञ्जुहा | 243 | 2 |
| अपदेपादा | 261 | 3 |
| अपविश्वा | 413 | 4 |
| अपश्यंसप्र | 185 | 2 |
| अपसेधन्मरु | 420 | 3 |
| अपादहस्तो | 375 | 1 |
| अपान्नपात | 214 | 1 |
| अपामीवां | 419 | 3 |
| अपामुत | 248 | 2 |
| अपाम्बिल | 379 | 3 |
| अपावरद्दिवो | 107 | 2 |
| अपोदेवी | 247 | 1 |
| अप्रजास्त्वन्त्व | 207 | 3 |
| अप्सुमेसोमो | 249 | 1 |
| अप्स्व१न्तरमृत | 248 | 1 |
| अबीभयन्त | 477 | 4 |
| अबुध्नेराजा | 260 | 1 |
| अबुभोजीर्महिना | 392 | 2 |
| अभजन्त | 202 | 2 |
| अभिकृष्णेन | 419 | 4 |
| अभिगृणीत | 94 | 2 |
| अभित्वादेव | 256 | 1 |
| अभित्वापूर्व | 194 | 1 |
| अभिनोदेवी | 219 | 1 |
| अभियज्ञं | 149 | 1 |
| अभिसिध्मो | 396 | 1 |
| अभिस्तोमा | 110 | 2 |
| अभीवृतं | 414 | 1 |
| अभ्यायंसेन्या | 399 | 1 |
| अमन्यमानाँ | 392 | 3 |
| अमितौजा | 106 | 2 |
| अमीयकक्षा | 263 | 1 |
| अमूर्याउप | 246 | 1 |
| अमृतमर्त्यानां | 298 | 2 |
| अम्बयो | 245 | 1 |
| अयज्वानो | 388 | 2 |
| अयज्वानःसनकाः | 387 | 4 |
| अयन्तेस्तोमो | 165 | 1 |
| अयन्देवाय | 195 | 1 |
| अयमुते | 332 | 1 |

| | मन्त्र | पाद |
|---|---|---|
| वरुणःप्राविता | 235 | 1 |
| वरुणश्शं | 172 | 2 |
| वरूत्रीन्धिष | 218 | 3 |
| वरूथं | 250 | 2 |
| वर्धनम्पुरु | 95 | 2 |
| वर्धमानं | 8 | 3 |
| वर्मेवस्यूतं | 365 | 2 |
| वर्षिष्ठमूतये | 71 | 3 |
| वसिष्वाहि | 290 | 1 |
| वसुवित् | 178 | 2 |
| वसूनामिर | 69 | 2 |
| वसूनियानि | 154 | 2 |
| वसोरिन्द्रं | 89 | 1 |
| वसोश्चित्रस्य | 215 | 2 |
| वस्त्राण्यूर्जा | 290 | 2 |
| वाजमिन्द्रः | 49 | 2 |
| वाजयन्तः | 329 | 2 |
| वाजयामः | 39 | 2 |
| वाजानां | 103 | 4 |
| वाजेभिरुप | 336 | 3 |
| वाजेभिर्दुहिं | 350 | 2 |
| वाजेभिर्वाजि | 28 | 2 |
| वाजेवाजे | 335 | 2 |
| वाजेषुहवन | 100 | 2 |
| वाजोअस्ति | 307 | 3 |
| वातोविवात्य | 318 | 2 |
| वायउक्थेभि | 11 | 1 |
| वायवायाहि | 10 | 1 |
| वायविन्द्रश्च | 14 | 1 |
| ,, | 15 | 1 |
| वायोतव | 12 | 1 |
| वायोतान् | 230 | 3 |
| वाश्राअभिज्ञु | 451 | 3 |

| | मन्त्र | पाद |
|---|---|---|
| वाश्राइव | 370 | 3 |
| वाश्रेवविद्यु | 464 | 1 |
| विगोभि | 63 | 3 |
| विचाकशच्चन्द्र | 263 | 4 |
| विजानाञ्छ्यावाः | 415 | 1 |
| वितिग्मेन | 396 | 2 |
| वितंयुयोत | 479 | 3 |
| विदादेवेषु | 435 | 4 |
| विदुष्टेतस्य | 108 | 4 |
| ,, | 109 | 3 |
| विद्माहित्वा | 100 | 1 |
| विद्यामसुम | 33 | 2 |
| विद्युर्मेअस्य | 253 | 3 |
| विद्वाँअदब्धो | 266 | 4 |
| विधूममग्ने | 430 | 3 |
| विपाशंमध्य | 289 | 2 |
| विप्रजूतः | 23 | 2 |
| विप्रारिहन्ति | 222 | 2 |
| विप्रासोवा | 76 | 3 |
| विप्राहवन्त | 232 | 2 |
| विप्रेभिरस्तु | 308 | 3 |
| विप्रोहोतेह | 143 | 3 |
| विभक्तारं | 215 | 1 |
| विभक्तासि | 305 | 1 |
| विभुर्वायाम | 399 | 2 |
| विभुर्विश्वस्मै | 352 | 3 |
| विभूतिरस्तु | 333 | 3 |
| विमृळीकाय | 271 | 1 |
| वियाथन | 474 | 3 |
| वियुष्माकाभि | 479 | 4 |
| विरप्शी | 78 | 2 |
| विविश्चन्ति | 476 | 2 |
| विशान्देव | 422 | 2 |